Registered Number A 639









* ओ३म् *

# उषा

संस्कृतमासिकापत्रिका

उषा अजीग भुवनानि विश्वा । ऋग्वेदे ।

संवत्सरः १—पौष १९७० विक्रमी—अङ्कः १

दयानन्दाब्दः ३१

गुरुकुल विश्वविद्यालय काङ्गडीतः

प्रचरन्ती

काङ्गड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रितम्

# विषयसूचिः

# उषा

| प्रथमे वर्षे | ... ... पौष मासः ... ... | प्रथमो मासः |
|---|---|---|

भास्वती नेत्री सूनृताना-
मचेति चित्रा विदुरो न आवः।
प्राप्या जगद्वि उ नो रायो अख्यद्
उषा अजीगर्भुवनानि विश्वा। ऋग्वेदे।

नक्षत्रचम्पकवती शशिपुण्डरीका
प्राभातिकारुणसमस्थलपङ्करम्या।
द्यौर्यस्य गायति गुणा नुषसः प्रसूति-
र्देवं स्मराम विनतास्तमनन्यभक्त्या।

पानीयविन्दुरपि यस्य कृपाकटाक्षै-
रभ्येति रत्नसुषमामतिभावनीयाम्।
तन्निर्गुणाश्च सगुणाश्च गुणाभिलाषाः
सम्भावयाम नियतं विनयेन देवम्।

# उषायाः प्रादुर्भावः

अयि गीर्वाणवाणीप्रणयिनः! निष्खेदा भवत। अयि विद्या-दिनमणयः! परिभवसन्तापन्त्यजत। जहत मनोमालिन्यं सर्वे-ऽपि भारतभारतीसेवकाः, यदिह गुरुकुलनभसि समुदेति चिरात्सम्पादिताशा भगवती 'उषा'।

न वयं संस्कृतभाषाया गौरवम्प्रदर्शयितुकामाः प्रस्तावनामिमां लेखितुम्प्रवृत्ताः, नापि पत्रिकाप्रकाशने संजातायविलम्बाय क्षमां याचितुम्। न तदुषाप्रणयिषु समुचितम्प्रतीयते। प्रणयो हि नाम न गुणवर्णनमपेक्षते, नापि क्षमाप्रार्थनं सहते। किंवाऽत्र भूमिकया प्रस्तावनया वा कार्यम्, यतः परेषु तत्क्रियते। अस्माभिस्तु केवलम्प्रेमरसपरिस्रुतेनान्तःकरणेन, प्रणयातिभारेण कम्पमानाभ्याञ्च हस्ताभ्यामियं स्वल्पाकारापि समुन्नतप्रकारा पत्रिका सज्जनानाम्पर्यङ्केषु निक्षिप्यते।

अपि स्वीकरिष्यन्त्येनाम्भवन्तः? श्रीमतामेव ललितललितै र्लेखैः कल्याणवलितैश्चाशीर्वादैरुत्साहितेयं चिरञ्जीवितुं शक्नुयान्नान्यथा। गीर्वाणवाणीसाहित्यपरिपूर्तये, तद्द्वारा नव्यविद्याप्रचाराय, संस्कृताध्यायिनां मोहनिद्राभङ्गाय च प्रादुर्भूतेयम्पत्रिका श्रीमद्भ्यः सरस्वतीमद्भ्यश्च पुष्कलं साहाय्यमपेक्षते। सकलमपि कार्यजातं सहृदयानां हृदयसहभावमनुगच्छति। नहि सकलकलासम्पन्नोऽपि निशानाथः दिनमणिसाहाय्यमन्तरा निशाम्प्रकाशयितुं शक्नोति।

अलमधिकेन। आशास्महे, यदल्पाकाराम्पत्रिका म्प्राप्तामिमामङ्गीकरिष्यन्ति, स्वपुस्तकसंग्रहे स्थापयिष्यन्ति, लेखैः परिवर्धयिष्यन्ति, किम्बहुना करिष्यन्त्यात्मीयां देववाणीरसास्वादिन इति।

## अयिनाथ !

अयि नाथ ! ते विचित्रा भुवि भाति चित्रमाला ।
सततं च भावनी या रचना दिवो विशाला । १
विचरन्ति निर्विवादं विकिरन्ति जीवभावम् ।
दिशि दिश्युदीरयन्तस्तव नाम लोकपालाः । २
मधुरं मधुप्रभावा त्पवनं विशेषयन्तः ।
तव नाम वाममूर्ते प्रथयिन्त रम्यशालाः । ३
विलसत्पलाशजातं चपलं विलोलयन्त्यः ।
जगदीश सत्यतान्ते कथयन्ति पङ्क्तिमालाः । ४
भागीरथी रसानां रसनेन तापदाहि ।
पवनं हि के स्वदन्त स्तव विस्मरन्ति बालाः । ५
मधुरे प्रमोदसिन्धौ तव पावने निलीनाः ।
रसयन्ति दिव्यभावं मुनिदेवसिद्धमालाः । ६

# भारतीय-दर्शनस्य वर्तमानदशा

भारते दर्शनस्य वर्तमानामवस्थामवलोक्य कस्य विदुषश्चेतो न दूयते। या भूमिः पुरा व्यासगोतमकणादप्रभृतिभिः परस्सहस्रदार्शनिकै र्व्याप्ताऽभवत्, यत्रत्यानां दर्शनशैलीमवलम्ब्यावलोक्य च अद्याऽपि विद्यावन्तो विस्मयन्ते, या अद्याऽपि दार्शनिकानां दर्शनस्यच जन्मभूमिरित्याख्यायते, तत्राद्य जनानामहदिवं लक्ष्यते औदासीन्यं दर्शनविषये। न कोप्यद्यावलोक्यते तादृशो दार्शनिको यस्य अपूर्वामुक्तिचातुरीं युक्ति-चातुरीश्चाकर्ण्य विदुषां हृदयकमलानि विकासमाप्नुयुः। नाऽपि दृग्गोचरीक्रियते किञ्चिन्नवीनं दर्शनमतं यत्प्रभवः कुर्यान्माननीयां जातिम्। तत्र किं कारणमित्येव वयमद्य संक्षेपेण विवेचयितुमिच्छामः।

१ प्रथमं तावत्कारणं जनानां वर्तमाना जीवनपद्धतिरेव स्यात्। महान् हि जीवनसङ्ग्रामो लक्ष्यते संसारे। प्राचीनानामिव निजां जीवन-वृत्तिं न सुलभां पश्यामः। कुत्र खल्विदानीं पुरातनैरधिगता विश्रान्तिः शान्तिश्च लभ्यते। नाधुना प्रागिव जीवन-वृत्तिः सुलभा अस्माकं। स्वोदरदरीपूरणायैव महानस्माभिः परिश्रम आश्रयितव्यो भवति। को नु खलु कालो ऽवशिष्यते तत्वज्ञानचिन्तायै। तादृशे महति जीवनसङ्ग्रामे प्रवृत्तो वयं दैनिकानि धर्मकृत्यान्यपि न कर्तुं पारयामः, किमु पुनर्वार्तैव तत्त्वचिन्तायाः। विद्याऽधिगमे प्रवृत्ता अपि तामेवविद्यामनुशीलयामः, याहि दृष्टप्रयोजनकरी स्यात्, तदेव शास्त्रमध्ययस्यामः यद्धि भोजनोपलब्धौ सहाय्य करं भवेत्।

अतएव, सर्वत्र शिल्पशिक्षाविज्ञानशास्त्रमर्थशास्त्रमित्येव निनादः श्रूयते, न जातु कश्चित्क्षणैकमपि तत्त्वज्ञानचिन्ता-मध्यात्मविद्याचिन्तां वा विदधाति । यत्खलु सत्यमेतत् नाध्यात्मविद्या धन-संग्रहे जठरपूर्तौ वा साहाय्यं करोति, ततः कस्य नाम तादृशः सुलभः समयः, यः प्रयोजनवतींशिल्प-विद्यामर्थविद्याञ्च विहाय परविद्यायां निजं कालं यापयेत् ।

२—अद्यत्वे अस्मद्देशे प्रवृत्ता ऽध्ययनाऽध्यापनप्रणाली पर-विद्याक्षये ऽपरं कारणं नः प्रतिभाति । वर्तमानस्संस्कृत-विदुषामध्ययनाऽध्यापनप्रकारो न कथमपि तत्वविद्यामुज्जीव-यितुमर्हति । आजीवनं हयवरटखपछठेति व्याकरणसूत्राणि रटद्भिः, घटपटावच्छेदकावछिन्नादिकण्टकावृततर्कजङ्गलेष्वटद्भ-भिर्वा किमुपकृतं भवति संस्कृतसाहित्यस्य, तत्वज्ञानस्येति वयं सर्वथा नावबोद्धुं पारयामः । निस्सारनवीनन्यायग्रन्था-ऽध्ययनेन वागाडम्बरेणैव च कृतकृत्यमात्मानं मन्यन्ते पण्डिताः न ते सारवतस्तत्वज्ञान-रत्न—भूतान् प्राचीनान ग्रन्थानधीयते, यै-रधीतैः पुनरपि तत्त्वज्ञानस्योन्नति र्भवितुमर्हति ।

अपरतः कालिजेष्वधीयाना विद्यार्थिनो यद्यपि पाश्चात्यं तत्वज्ञानमनुशीलयन्ति परं स्वीयस्य तत्वज्ञानस्यानभिज्ञाः न ते जातीय-तत्त्व—ज्ञानोपकाराय कल्पन्ते । प्रतिवर्षं कालिजेषु परस्सहस्राः विद्यार्थिनः स्नातकीक्रियन्ते, परन्तु कियद्भिरद्यावधि किञ्चिन्नतनं दर्शनमत मुद्भावितम्, कश्चिद्वा नूतनो निबन्धो निबद्धः ।

३—अध्यात्मविद्याक्षयस्य तृतीयं कारणं जनानां गताऽनुगतिकत्वमेव मन्यामहे। यद्धि प्राचीनेन केनाऽपि लिखितं तदेवास्माभि र्मन्तव्यम्, ततः पदमप्येकमितस्ततो न निधातव्यमित्येवास्माकं सिद्धान्तो व्यवहारश्च दृश्यते। यदि कश्चिन्नूतनोऽपि विचारः प्रचारयितुमिष्यते, तर्हि स केनाऽपि प्राचीनग्रन्थ साहेय्यैनैव क्रियते। कथमन्यथा वेदान्तस्य उपनिषदां गीतायाश्च तावन्ति भिन्नार्थाववोधकानि भाष्याण्यवलोक्यन्ते। नेदं किमस्माकं बुद्धिपारतन्त्र्यस्य परां काष्ठां सूचयति। परस्सहस्राणि वर्षाणि पराधीनदेशे निवसतामस्माकं सर्वथा विचारस्वातन्त्र्येणाऽपि परिहीणमेव। नह्यस्माकं पूर्वजेषु तादृशं विचारपारतन्त्र्यं बुद्धिदास्यं वाऽसीत्। स्वातन्त्र्येणैव ते सर्वान्भावानाविरभावयन्। अत्र कपिलमुनेः साङ्ख्यदर्शनमेव निदर्शनं भवितु मर्हति, यद्धि ईश्वराऽसिद्धिं, ब्रवदपि न बिभयाञ्चकार। स्वाधीनतामृतविन्दुभिः सिच्यमानायामेव भूमौ दर्शनवीजान्यङ्कुरीभवन्ति। नहि शृङ्खलाभिवद्धा बुद्धिकरिणी सलील-यातानि दर्शयितु मर्हति, नहि कठोर वलितो विचारतुरग श्चतुरान् पदक्रमा न्कर्तुमर्हति।

निर्विवादमेव मन्यते सुधीभि र्यत्स्वतन्त्र-सञ्चारमन्तरा न कदापि तत्वज्ञानोदयो भवितुमर्हति। दर्शनावनतेस्तावन्मुख्यं कारणं विचारस्वातन्त्र्याभावो मया दर्शितोऽभूत्; ततस्तस्यापनयनेनैव पुनस्तत्समुन्नतिपदं लब्धुमर्हति। प्राचीनकाले सर्वथाऽप्यासीद्विचारस्वातन्त्र्यमित्यत्र संशीतिलेशोऽपिनास्ति। भिन्नानि वैदिकदर्शनानि, तत्रास्माभिः प्रमाणत्वेनो पन्य

स्तुं शक्यन्ते । स्वातन्त्र्याभावे कथं नाम विरुद्धमतप्रतिपादकं न्यायदर्शनं वेदान्त दर्शनञ्च उभयमपि कोटिमुपारुहद्वैदिक-दर्शनत्वेन ख्यापयितुं शक्यते । सांख्यास्तावन्निर्भयमीश्वरसिद्धिमाशंकमाना अपि अस्तिकसंज्ञां लभन्ते। वेदान्तिनः खलु नाम-ग्राहं खण्डयन्ति सांख्ययोगयोर्मतानि । तदेतत्सर्वं विचारस्वातन्त्र्य-मन्तरा कथं नाम सम्भवितुमर्हति । अद्यसर्वथाऽपि तद्विपरीत-मेव लक्ष्यते । अद्यश्वः स्वल्पेऽपि मतभेदे दर्शिते "नास्तिको नास्तिक" इति जनाना मुच्चैराघोषो गगनतलं पूरयति । एता-दृशे काले न कस्यापि नवस्य दर्शनस्योद्भावनं भवितु मर्हति । यद्यस्माभिः पुनरपि दर्शनोन्नतिरिष्यते, तर्हि विचारस्वातन्त्र्य मवलम्बनीयम्, नेदमन्तरा स्वाभिलषितमस्माभिः सम्पाद-यितुं शक्यते । अपरश्च दर्शनोद्धारोपायो निरीक्षणमार्गा-वलम्बनं मन्यते । निरीक्षणपरीक्षणाभ्यामेव वस्तुनः सिद्धिर्भ-वति इत्यस्माभिर्यावन्न स्वीक्रियते, तावदस्माभि रुद्भावितं मतम-द्यतनैर्विद्वद्भिर्न प्रमाणीक्रियते । नाद्य स कालो यदा शब्दप्रमा-णेनैव सर्वं वस्तु साध्यते स्म । इदं हि परीक्षणयुगमाख्यायते । श्रुतिवाक्यैः स्मृतिवाक्यै र्वा नाद्यश्वः कस्यापि वस्तुनः सत्यत्वं साधयितुं शक्यते । श्रुतेरपि प्रामाण्यं तावन्नस्वीकुर्वन्ति परस्सह-स्राः विद्वांसः, मोघ मेव तेषां पुरतः श्रुतिवाक्योद्धरणं नाम, त-स्मात्पुराणं मार्गं विहाय निरीक्षणपरीक्षणमार्ग एवालम्बनीयो ऽस्माभिरिति मदीय आग्रहः । वागाडम्बरेण खलु बहुपकृतं सं-स्कृतदर्शनस्य । एतस्मादेव कारणाज्जनैः "न संस्कृते किञ्चिदु-पयोगि वस्तु लब्धव्य मस्तीति" कथ्यते । संस्कृतविदुषां प्रवृत्ति-रियं यत्ते दुःखवेद्यामेव वाक्पद्धतिंप्रयोक्तुमिच्छन्ति । कठिनपद-

प्रयोगमेव ते पाण्डित्यद्योतकं मन्वते । वागाडम्बरे निरर्थके यापितः समयो यदि वस्तुतो दर्शनोन्नतये दीयेत तर्हि कियानुपकारः सम्भाव्यते । अत्रतावदिदमेव वक्तव्यमस्ति यत्समयानुसारि दर्शनमिदानीमस्मा भिरिष्यते । ये खलु नैतत्स्वीकुर्वन्ति, नते कदाऽपि सफलप्रयत्ना भवितुमर्हन्ति । पाश्चात्यदेशेषु महत्युन्नतिः विज्ञानेन सम्पादिता । तस्य विज्ञानस्य सर्वेष्वेव देशेषु प्रसारो दृश्यते, मूर्खैरपि विद्वद्भिरपि सर्वैरेव जनैरद्यश्वस्तस्मिन् विज्ञाने निरतिशयं विश्वस्यते, विज्ञानविपरीतं न किमपि मतं अद्यश्वो जनानां विश्वासभाजनं भवितुमर्हति ।

तदेतत्सर्वं मनसि विधाय यदि विद्वद्भिः प्रयत्नः क्रियेत, तर्हि पुनरपि भारते दर्शनोद्यानं सपुष्पं सफलं च भवितु मर्हतीत्यत्र नास्ति कश्चित्संदेहः ।

हरिश्चन्द्रः

# ऐतिहासिकपक्षस्य किंनिदानम् ?

वैदिकीनां वाचामिदानीं या दशा सा केन विदुषा न विज्ञाता स्यात् । नेदानीं पुराकालइव आद्रियन्ते प्रमाणीक्रियन्ते वा भगवन्तो वेदा जनैः; कैश्चित्तु स्पष्टमेव उपहासास्पदतामानीयन्ते । सायणादीना माख्ययिकामयानि भाष्याणि दृष्ट्वा नवशिक्षिता न तेषु श्रद्धातुमिच्छन्ति। हरिवर्षस्थैःविद्वद्भिः स्पष्टमेव उपदस्यन्ते वैदिकाः सिद्धान्ताः । कैश्चिदस्मदीयाः प्राक्तनाः "शबराः" "गोपाला" "तत्वानभिज्ञा" श्च प्रोक्ताः । तामुक्तिं पोषयितुमेव क्रमोन्नतिवादं आविष्कृत्या शेषः संसारस्तैः स्वायत्ती कृतः । तत एव तत्कालिकयवनादिदेशीयाना मेतद्देशीयैर्महर्षिभिः सादृश्यं प्रदर्शितम् । अतएव वेदार्थोऽसामञ्जस्यंगतः ।

किं कारण मस्या दशायाः ? मम सम्मतौ तु वैदिकसिद्धान्तप्रदर्शक ऐतिहासिकपक्षएवास्य मूलकारणं प्रतिभाति । वेदार्थयत्ने प्राचीनै ऋषिभिरैतिहासिकयाज्ञिकाधिदैवताध्यात्मभेदेन चत्वारो मार्गा आश्रीयन्ते स्म । तेषु चतुर्ष्वपि आधिदैवताध्यात्मेति पक्षद्वयं पुष्पफलवद् वैदिकज्ञानस्य मुख्यफल मस्ति । परन्तु तयो र्द्वयोरपि पक्षयो र्दुरधिगमत्वात् साधारणमतीनां जिज्ञासूनां सुगमावबोधाय अवशिष्टौ पक्षौ समाश्रितौ । येषां मन्दमतीनां शेमुषी वेदोक्त ज्ञाने प्रवेष्ट मक्षमा, ते प्रकल्पिताभिराख्यायिकाभि राशुतरं वेदार्थमवगन्तुं शक्नुयुरिति प्राचीना महर्षयो कल्पितेतिहासरूपेण वेदार्थं वर्णयामासुः । यास्काचार्योपि "ब्रह्मेतिहासमिश्र मृङ्मिश्रं गाथामिश्रं च भवती" ति वाक्येन तमेव पक्षं पोषयति । अस्यैव ऐतिहासिकपक्षस्य

यथार्थ माशय मनवगच्छद्भिः सायणाचार्यादिभाष्यकारैः, "केवलं पूर्वकालिकवृत्तस्य निबन्धनमेवैतस्य पक्षस्योद्देश्य" मिति मत्वा वैदिकसिद्धान्ता धूलिधूसरतां नीताः। तानेव अनुसरता कवि-कालिदासेनापि बहूनि नाटकानि प्रणीतानि, प्राचीनशैलीं च विस्मृत्य पौराणिकै स्तदाख्यायिकाजातं "यथार्थमिति वृत्त" मिति कृत्वा स्वीकृतम्। इमामेव पौराणिकरीतिं खंडयित्वा महर्षिदयानन्दः प्राचीनां वेदव्याख्यानशैलीं प्रवर्तयामास, प्रदर्शयामास च ऐतिहासिकपक्षस्य यथार्थमाशयम्। न चैतन्मन्तव्यं यत् महर्षेर्दयानन्दात् प्राक् न केनचिद्द दृष्टोऽयमाशयः। पठ्यतां शावरं भाष्यम्, तत्र दृश्यत एय अयमाशयः। "प्रजापतिरेकदा यज्ञं प्रारब्धवान् सचस्वकीयां वपामुच्छिद्य अग्नौहुतवान्, ततश्च अजाः सञ्जाता"इतिकथाव्याख्यानावसरे प्राह शवरस्वामी-"नित्यः कश्चित् पदार्थः स्यात्। वायुराकाश आदित्यो वा स स्वकीयां मेघावयवरूपहां वपामुच्छिद्य पार्थिवाग्नौ जुहोति। ततश्च "अजा" इत्यन्नादिकं जायते। ततश्च पशवो मनुष्याइति"। अर्वाचीनेन नीलकंठपंडितेनापि महाभारतीये शान्तिपर्वव्याख्याने प्रोक्तम् "आख्यायिकानां स्वार्थे तात्पर्य्याभावात् कश्चिद्द विधेयोऽर्थ उन्नेयः।"

वैदिकाख्यायिकाः शब्दार्थं न बोधयन्ति, अपितु लक्ष्यार्थ मिति प्रागुक्तं मया। तदेव वैदिकमेकमितिहासं प्रदर्श्य स्पष्टी करोमि। अस्ति ऋग्वेदे त्रितनामकमेकं सूक्तम्। तन्मध्यवर्तिनी ऋगेषा श्रूयते—

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः।

मूषोनशिश्ना व्यदन्ति माध्यः—
स्तोतारंतेशतक्रतो वित्तं मेअस्य रोदसी।

त्रिताभिधानो महर्षिः कूपे पतितस्ततो निर्गन्तु मिच्छन् सूक्त मिदं निर्मितवान्, तत्क्रन्दनात्मिका चेयमिति ऐतिहासिका वदन्ति। अस्य यथार्थमाशयमज्ञात्वा पौराणिकाः सत्यमेवाय-मितिहास इति मन्यन्ते। परन्तु भ्रान्तास्ते "आख्यायिकानां स्वार्थे तात्पर्य्याभावात् कश्चिद्‌ विधेयोऽर्थ उन्नेय" इति न्यायेन अयमस्याशयः।

संसाररूपोयं कूपः। तत्र सांसारिकघटनाः कूपस्येष्टकाः। मानसिकवासनामू षिकवत्। ताहि अन्नवेष्टितं वसनमुच्छिद्य अदन्ति, जीवात्मानं च संतापयन्ति। एतदेव मनसि निधाय संतप्तो जिज्ञासु ब्रह्मनिष्ठस्यान्तिके गत्वा वदति "हे संसारतत्त्वाभिज्ञ ! निस्सारयतु भवान् मामपि संसारकूपादस्मात्।" ब्रह्मनिष्ठैः शिक्षिता जिज्ञासवो गच्छन्ति संसार कूपस्य पार मिति प्रदर्शयितु-मेव कल्पितेय माख्यायिका, न तु यथार्थवृत्तमेतत्।

श्री कौशल्यादेवी

# श्रीकालिदासः कदा बभूव ?

[ मया निर्मीयमाणे कालिदासविषयके महाप्रबन्धे कविरसौ प्रथमं द्वितीयचन्द्रगुप्तस्य, तदनन्तरं तत्पुत्रस्य कुमारगुप्तस्य राज्ये बभूवेति महता प्रपञ्चेनावस्थापितम् । इयमेव कल्पनाऽत्रापि प्रबन्धेऽवलम्बिता । चन्द्रगुप्तेन कालिदासस्य सम्बन्धः स्मिथमहाशयेन मुग्धानलाचार्येण च सूचितो नतु ताभ्यामीदृश्याः कल्पनायाः प्रमाणानि प्रपञ्चितानि । विस्तरेणात्र वर्णितानि प्रमाणानि प्रायः सर्वाण्यप्यन्यैरनुत्प्रेक्षितपूर्वाणि । गुप्तवंश्यानां नृपाणामितिवृत्तं, तेषां प्रशस्तीः, फाहियाननाम्नश्चीनस्य यात्रावृत्तं कालिदासस्य च काव्यानि सम्यक् परीक्ष्य प्रबन्धोऽयं व्यलेखि ]

अनेके कवयः संस्कृतसाहित्ये कालिदासाख्यया प्रसिद्धाः(१)। इतः प्रायो वत्सरसहस्रात्पूर्वं कालिदासाभिधानं महाकविपर्यायतां प्रपेदे। केचित्कवयः स्वनामसु कालिदासोपाधिं न्यवेशयन्, परेस्वीयं नाम विहाय कालिदासाख्ययात्मानं प्रथयांबभूवुः, इतरे त्वभिनव कालिदासत्वेन विश्रुताः । त्रयः कालिदासा जैनराजशेखरस्य विदिता, यस्य कविवरस्मारकाणि पद्यानि सूक्तिसंग्रहीतृभिरुद्धृतानि । त्रयाणामेषामेको नूनं रघुवंशप्रणेता, द्वावपरौ तु काविति न सर्वथा निश्चेतुं सुशकम् ।

(१) एकोपि जीयते हन्त कालिदासो न केनचित् ।
शृंगारे ललितोद्गारे कालिदासत्रयी किमु ॥
राजशेखरस्य सूक्तिमुक्तावल्याम् ।

रघुवंशप्रणेतुरनन्तरं नवसाहसांकचरितप्रणेता पद्मगुप्तः प्रथमः कविर्यः कालिदासोपाधिमंगीकृतवान् (१)। अयमात्मानं परिमलकालिदासाख्यया व्यपदिशति, सुतरामर्हति चेमां महाकवेराख्याम्। धाराधिपस्य मुञ्जापरनाम्नो वाक्पतिराजस्यायं सदस्यस्तदेव चास्य पदं तद्भ्रातुर्भोजजनकस्य सिन्धुराजस्यापि सभायामासीत् (२) अपरः कोपि कालिदासो भोजस्य (३) सदस्य आसीद्यस्य भोजकथासंग्राहकै रुद्धृतानि कतिपयपद्यानि विहाय नान्यः कोऽपि लेख उपलभ्यते। ज्योतिर्विदाभरण शत्रुपराभवाख्ययो (४) ज्योतिषग्रन्थयोः प्रणेतारावपि कालिदासाख्यया प्रसि-

---

(१) साहसांकचरितस्यसर्गसमाप्तौ सर्वत्र तथैवोपलभ्यते।

(२) दिवं यियासुर्मम वाचि मुद्रा मदत्त यां वाक्पतिराजदेवः।
तस्यानुजन्मा कविबान्धवस्य भिनत्ति तां संप्रति सिन्धुराजः॥
नवसाहसांकचरितस्योपक्रमे।

(३) वल्लालकृतो भोजप्रबन्धो द्रष्टव्यः।

(४) आसीत्कश्यपवंशजोऽर्कतनयातीराधिवासी द्विजः,
श्रौतस्मार्तविचारसारचतुरः श्रीभानुभट्टः सुधीः।
तत्पुत्रो हरिभक्तिनिर्मलतनु ज्योतिर्विदामग्रणीः,
शास्त्रं शत्रुपराभाख्यमकरो च्छ्रीकालिदासः कविः॥
इति शत्रुपराभवस्यान्ते।

द्धौ, अर्वाचीनसमयेषु शंकरविजयस्य भागवतचम्प्वाश्च (१) कर्तारावभिनवकालिदासाख्यया विश्रुतौ।

रघुवंशादिमहाप्रबन्धानां प्रणेता महाकविः स्वगुणैः कालिदासाख्यां महाकविपर्यायतां प्रापितवान्। स्वयं च 'दीपशिखा-

कालिदास इति' सविशेषेण नाम्ना सूक्तिकृद्भिः प्रख्यापितः। 'संचारिणी दीपशिखेव' वेत्यादि रघुवंशीय पद्यस्य सौष्ठवमस्यदीपशिखोपाधेर्निमित्तम् (२)। एवमेव भारविमाघरत्नाकराद्या आतपत्र-घण्टातालादिशब्दघटितानि पद्यानि निर्माय आतपत्र-भारवि-घण्टा-माघ-तालरत्नाकरादिनामभिः प्रथिताः ( ३ )। शंकरपण्डितेन रघुवंशभूमिकायामुद्धृतैः समच्छायवाक्यैः सुस्पष्टं प्रतीयते

(१) शंकरविजयस्य कर्त्ता माधवः। भागवतचम्पू प्रणेतुस्तु वास्तवं नाम न ज्ञायते।

(२) संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥
रघुवंशे षष्ठसर्गे।

(३)उत्फुल्लस्थल नलिनी वनादमुष्मादुद्धूतःसरसिज संभवःपरागः।
वात्याभि र्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्र लक्ष्मीम्।
किराते।

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलंबिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥
शिशुपालबधे।

अस्तावलंबिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम्।

रघुवंश कुमारसम्भव मेघदूत शाकुन्तल विक्रमोर्वशीय मालविकाग्निमित्राणां महाकविकालिदासकर्तृत्वम्। एतन्महाप्रबन्धातिरिक्तानि ऋतुसंहारादीनि ग्रन्थान्तराण्यपि कालिदासेन नातिप्रौढे वयसि प्रणीतानीति (१) प्रतिभाति। एषु प्रबन्धेष्वन्यत्र चास्य महाकवेः समयादिनिर्णयोपयुक्ता बहवो विषयाः समुपलभ्यन्ते, ते च नाद्यापि संगृहीताः, न चस्याः सुसंगतं वृत्तमुपनिबद्धं केनापीति महच्चित्रम्।

# कस्मिन् समये कालिदासो बभूवेति

निसर्गादेव प्रथमः प्रश्नोऽस्य विषये समुत्तिष्ठति। कवेर्विक्रमेण सम्बन्ध (२) स्तत्कृता वाल्मीकेः प्रशंसा (३) तद्ग्रन्थेषु हूणयवनादि जातीनां वर्णनं (४) तन्नाम्नः प्रशस्त्यादिषूपलम्भो (५) रघुवंश-

---

संध्याप्रवृत्तहरहस्तगृहीतकांस्य-
. तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥

हरविजये ।

(१) श्रृंगारतिलक श्यामलादण्डकपुष्पबाणविलासादीन्यपि कालिदासकृतत्वेन प्रसिद्धानि ।

(२) विक्रमोर्वशीयमिति तदीय त्रोटकस्य नाम भारतीया जनश्रुति रभिनन्दादीनामुक्तिश्चात्र प्रमाणम् ।

(३) तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥

रघुवंशे ।

(४) 'तत्र हूणावरोधानां' 'यवनीमुखपद्मानामि'ति च रघौ ।

(५) 'कविताश्रितकालिदासभारविकीर्ति रिति पुलकेशिलेखे, 'कालिदासस्य सूक्तिष्वि ति हर्षचरितोपक्रमे ।

स्याकस्मिकी समाप्तिः (१) कवेः समकालिकानां तदुक्तानामन्योक्तानां च समयः (२) इतीदृशा विषयाः प्रायोऽस्य समयनिर्णयायावलम्ब्यन्ते। नैते केवलं कालिदासीयसमयनिर्णयोपयुक्ता विषयाः किन्तु तन्निर्णयोपयुक्तमद्यावधि समुपेक्षितं प्रचुरमन्यदपि विषयजातमस्तीति सद्यः स्फुटीभविष्यति। सर्वमीदृशं विषयजातमसमीक्ष्य नास्य कालनिर्णयः सुकरः। कालिदासीयसमयविषये प्रधान-

कल्पना अद्यावध्युत्प्रेक्षिता एताः—

१. अग्निवर्णपुत्रस्यसमयः । (३)
२. विक्रमाब्दारम्भसमयः । (४)
३. स्कन्दगुप्तसमयः । (५)
४. कौरुरयुद्धसमयः । (६)

एतदतिरिक्ता अपि काश्चित्कल्पनाः सन्ति । ता यथाकालिदामातृगुप्तयोरैक्यं, तस्य भोजसदस्यत्वेन ख्रिस्तीयैकादशशतके ऽव-स्थानं वेत्यादि । तत्र कश्मीरेश्वरेण मातृगुप्तेन सह कालिदास स्यैक्य-कथा भाऊदाजीवैद्यस्योत्प्रेक्षामात्रं (७) सर्वथा निष्प्रमाणं, तस्य

(१) अग्निवर्णमृत्युनैव सह रघुवंशावसानम् ॥
(२) भासधावककविपुत्रसौमिल्लानां नामानि मालविकाग्निमित्र-प्रस्तावनायामुपलभ्यन्ते ।
(३) फाशमहाशयस्य कल्पना ।
(४) पीटर्सनमहाशयस्य ।
(५) गक्रवर्तिनः ।
(६) फर्गुसनमैक्समुलरहौर्न्लें प्रभृतीनाम् ।
(७) भाऊदाजीमहशयस्य साहित्यशेषाख्ये लेखे ।

भोजसमकालिकत्वं तु तन्नामकानां कवीनामनेकत्वमविज्ञाय भोजप्रबन्धे विश्वासभाजामज्ञानविजृम्भितम् । ईदृश्यः कल्पनाः स्फुटमसंगताः परीक्षानर्हाश्चेति परिभाव्य संप्रति कल्पनाचतुष्टयमुक्तपूर्वं परीक्ष्यते, यदधुना विदुषां चित्ते स्थितिं भजति, उदेति चानेकैः रूपैर्यदाकदाचित् ।

अग्निवर्णतनयस्य समये कालिदासो बभूवेति केषांचित्परीक्षकाणां मतम् । नचेदसावस्मिन्समये ऽभविष्यत्को हेतुरस्याग्निवर्णकथया सहैव रघुवंशसमापनस्य । कविना रघुवंशस्येतिवृत्तं स्व-

समयं यावदुपनिबध्य विरामः कृत इत्येव समीचीनं प्रतिभाति। ततश्च खिस्तवर्षारम्भात्पूर्वमष्टम शताब्द्यां कविरसौ बभूवेति केचिदुत्प्रेक्षन्ते। किन्तु कामपरवशादग्निवर्णात्परं रघुवंशकीर्ति मुपरतप्रायां विलोक्यागामिन उपप्लवान् परिजिहीर्षता कविना तत्रैव विश्रान्त मित्यपि संभाव्यते। किंच शंकरपण्डितेन यथोत्प्रेक्षितं (१) तथा चेत्कविरसौ रघुवंशमग्निवर्णादर्वाचीनानां नृपाणां वर्णनेन व्यवर्धयिष्यन्नूनमकालिदासीयोऽयमनुचितोऽनपेक्षणीय ईदृशो विस्तरोऽभविष्यत्। तत्सर्वथा ग्रन्थ-सौष्ठवशत्रुमतिविस्तरं परिजिहीर्षु रितिहासपारवश्यं विधूय कालिदासोऽग्निवर्णकथयैव रघुवंशमुपसंजहारेत्येव समंजसं स्वारसिकं च। किंचाग्निवर्णपुत्रस्य

(१) शंकरपण्डितरचिते रघुवंशोपक्रमे।
राजकीयैसियातिकसमिते मुम्बास्थशाखायाः एकषष्ठ्यधिकाष्टादशशततमवर्ष लेखे।
किंच—व्योमपश्चिमकलास्थितेन्दु वा पंकशेषमिव घर्मपल्वलम्।

दासोऽभविष्यत्तस्यैव वृत्तेनासौ रघुवंशं व्यरमयिष्यन्, तु न तत्पितुर्वृत्तेन। वस्तुतस्तु कालिदासो नाग्निवर्णेन न वा तत्पुत्रेण संबद्धो भवितुमर्हति; नहीदृशे संबन्धे सति कविरग्निवर्णव्यसनपरवशमवर्णयिष्यत्। इदमेव कवे रग्निवर्णस्य तत्पुत्रस्य वा समकालिकत्वकल्पनां प्रत्याख्यातुं क्षमतेतरामिति विरम्यते ऽस्मिन् विषये निरर्थकाद्विस्तरात्।

विक्रमादित्यस्य सदसि (१) विक्रमाब्दारम्भकाले कालिदास आसीदिति कल्पना तु समयविषये किंवदन्तीमात्रावलम्बा प्रमाणान्तरविरुद्धा च। किन्तु कवेर्विक्रमेण संबन्धः सर्वथा संगत इत्यनुपदमेव वक्ष्यामः।

स्कन्दगुप्तस्य समये खि्रस्तीयपञ्चमशताब्द्यां ये कालिदास-मवस्थापयन्ति तेषां मूलं तु रघुवंशे हूणानां (२) वर्णनमात्रम् । किंतु भारतीयैर्ग्रन्थकृद्भिः प्रायो हूणयवनशकादिशब्दा व्यतिकीर्णेष्वर्थेषु प्रयुक्ताः। कालिदासस्य चैतिहासिका हूणा अभिप्रेता इति न वक्तुं शक्यते। किंचाष्टपञ्चाशदधिकचतुःशततमेऽब्दे हूणैः

---

राज्ञि तत्कुलमभूत्तयातुरे वामनार्चिरिव दीपभाजनम् ॥

इति रघुवंशीयोनविंशसर्गे रघुवंशयशोवसान मासन्नप्रायं सूचित कविना ।

(१) उज्जयिनीराजेन हर्षविक्रमेण षष्ठशतके विक्रमाब्दारम्भः कृतः, केनापि हेतुना स्वसमयात्प्रायः षट्शतकानि पूर्वतरं क्षिप्तस्तदब्दारम्भोऽनेनैवेति फर्गुसन महाशयस्य कल्पना तुनात्रांगीकृता ।

(२) रघौ तुर्ये ।

संभूय प्रथमं भारतमाक्रान्तं ततः पूर्वमपि भारतमास्कन्दितुं ये केचिद्द् हूणा यदा कदाचिदागताः सीमान्तेष्विति संभाव्यत एवेति संभूय हूणैः कृताद्भारतप्रथमाक्रमणात्पूर्वं चेत्कालिदासोऽभविष्यन्नासौ हूणनाम्ना परिचितोऽभविष्यदिति कल्पनाप्यसंगतैव ।

कोरूरसंग्रामसमयसमकालिकः कालिदास इति कल्पना नातिचिराद्गतेषु दिवसेषु विदुषां बहुमतासीत् । उज्जयिनीशः कश्चिद्विक्रमः षष्ठशतके कोरूरसंग्रामे म्लेच्छान्पराभूतवानिति (१) केषांचिदैतिहासिकंमन्यानां मतम् । विदितं चैतद्यथा मध्यभारतेश्वरो यशोधर्मा मागधस्य बालादित्यस्य (२) साहाय्येन मिहरकुलं पराजिग्ये । वस्तुतो यशोधर्मणो विजय उत्प्रेक्षितात्कोरूरयु-

द्धसमयात्प्राचीनतरस्तथापि यशोधर्मणो विक्रमापराख्यत्वं परिकल्प्य तेनैव मिहिरकुलपराभवावसरे मालवगणस्थित्यब्दो विक्रमाब्दाभिधां नीत (३) इति चोत्प्रेत्त्यस्य नृपस्य तद्विजयानां च विषये प्रचुरं कल्पनान्तरं च विधायास्यैव समये संस्कृतवाङ्मयस्य पुनरुज्जीवनं (४) बभूवास्यैव च कालिदासो नवानां सदस्यरत्नानामेकतम आसीदिति केचिन्मन्यन्ते। वराहमिहरस्य समयः षष्ठशतकस्योत्तरार्धे संपतंस्तत्समकालिकत्वेनोत्प्रेक्षितस्य कालिदासस्य षष्ठशतके अवस्थितिं द्रढयत्येवेत्यपि ते संभावयन्ति।

(१) फर्गुसनमैक्सम्युलरादिमते हर्ष विक्रमस्येयं कथा।
(२) स्मिथ महाशस्य प्राचीनभारतेतिवृत्ते।
(३) फर्गुसन कल्पनाया एव रूपान्तर मिदम्।
(४) मैक्सम्युलर महाशयस्य किमस्मान्भारतं शिक्षयती त्याख्याने पुस्तके।

किन्तु बाण भवभूति माघ कालिदासादीन् कल्पयतो भोजप्रबन्धस्येव नवरत्नपद्यस्यापि प्राचीनानर्वाचीनांश्च वररुच्यमरादीनेककालिकां (१) नुत्प्रेक्षमाणस्याप्रामाणिकत्वं स्फुटमेवेति तन्मूलकं कालिदासवराहमिहिरयोः समकालिकत्वं न विश्वासयोग्यम्। न चान्यत् किमपि दृढं प्रमाणान्तरं कालिदासस्य यशोधर्मसमकालिकत्वमवस्थापयतीत्युत्प्रेक्षणीय एवायं प्रवादः।

तदित्थं कालिदासीयसमयविषये प्रसिद्धान्वादानुपेक्ष्य संप्रति सिद्धान्तमन्वेष्टुकामैरस्माभिर्विचार आरभ्यते। कालिदासः कस्यचिद्विक्रम नृपतेः सदस्य आसीदित्यत्र न संशयः। विक्रमोर्वशीयमिति तदीय रूपकाणामन्यतमस्य विलक्षणं नाम, तत्प्रस्तावनायामनुत्सेकः

खलु विक्रमालंकार इत्युक्तिश्च तस्य विक्रमनृपतिसंबन्धं व्यञ्ज-यतः । जनश्रुतेरपीदं संमतं दृढीकृतं चाभियुक्तानामभिनदादीनामुक्तिभिः (२)। नवरत्नपद्यमप्येतत्सूचयति । तदीदृशानि बहूनि नामानि पृथक् नातिप्रबलान्यपि संभूयैकार्थबोधकतया बह्वादरणीयानि ।

(१) नवरत्नपद्यं ज्योतिर्विदाभरणे यथा—

धन्वन्तरिः क्षपणकोऽमरसिंहशंकू वेतालभट्टघटखर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ।

(२) हालेनोत्तमपूजया कविवृषा श्रीपालतो लालितः
ख्यातिंकामपि कालिदासकवतो नीताः शकारातिना ।
श्रीहर्षो विततार गद्य कवये बाणाय वाणीफलं
सद्यःसत्क्रिययभिनन्दमपि च श्रीहारवर्षोग्रहीत् ॥

अभिनन्दीये [ रामचरिते ]

किन्तु कोऽसौ विक्रमनृपो यत्समये कालिदास आसीदिति न सुकरं निर्णेतुम् । विक्रमाब्दारम्भे न कश्चिद्वास्तवोविक्रम उपलभ्यते (१) विक्रमाब्दोऽपि चिराय प्राचां मालवगणस्थित्यब्दनाम्ना विदितः (२) यशोधर्मणोऽपि बहुकालानन्तरमयं विक्रमाब्द-व्यपदेशं भेजे । कदा केन मालवगणस्थितब्दस्य नामपरिवर्तः कृत इति तु नाद्यापि विदितम् (३)। प्रायो नामपरिवर्तोऽयं भ्रममूलक एवेति प्रतिभाति कैश्चिदतिदैर्घ्यपरुषाक्षरत्व दोष दूषितंमालवगणस्थित्यब्दनाम नाति रोचयमानैः कथासहस्रनायकेन मालवेश्वरत्वेनोत्प्रेक्षितेन विक्रमादित्येन स्थापितमिमब्दं संभावयद्भिः संक्षिप्तमधुरेण विक्रमाब्द नाम्नायमब्दः प्रख्यापितः

प्राचीनं चास्य नाम सर्वथा विस्मृतिपथं नीतम् । इत्थं प्रथमशतके विक्रमादित्यात्यन्ताभाववति, प्राचीनतरशतकेषु चासंभावितविक्रमेषु विक्रममर्वाचीनशतकेष्वन्वेष्टुं प्रवर्तामहे । दित्योपाधिभाजामर्वाचीनशतकवर्तिनां (१) नृपाणां कोसौ नृपविशेषो यस्य समये कालिदास आसीदिति न तावन्निश्चेतुं शक्यते यावत्प्रमाणान्तरेभ्यः संभावितोस्य समयो न स्थिरी क्रियते ।

रामावतारः

(१) बृहत्कथायां वर्णितो विक्रमसेनस्तु कल्पितो नैतिहासिको नृपः ।

(२) सहानवत्यधिकेष्वेकादशसु शतेष्वतीतेषु वर्षाणां विक्रमतो गणरत्नमहोदधिर्विहितइतिवदतो वर्धमानाद्गणरत्न महोदधि प्रणेतुः पूर्वनकेनापि विक्रमाब्दस्तन्नाम्नाव्यपदिष्टः । षष्ठशतकीयान्मन्दसूरलेखात्पूर्वं न मालविस्थित्यब्दस्यापि क्वचिदुपलम्भः । मालवानां गणस्थित्यायाते शतचतुष्टये इति हि तत्रोक्तम् ।

(३) षष्ठशतकीयान्मन्दसूरलेखात्पूर्वं न विक्रमाब्दनाम्ना न वा मालवस्थित्यब्दनाम्नाप्ययमब्दः कुत्राप्युपन्यस्तः ॥



# प्रवासावसानम्

आसीत्सर्व्वातिशयिविभवाऽप्युत्सवैरञ्जितापि
केनाप्यन्तर्हृदयगुरुणा हेतुना किञ्चिदुत्का
गङ्गातोयैरपि परिगता वाडवेनेषदुष्णा
धाराम्भोधेरिव सुविपुला राजधानीरघूणाम् । १ ।

या सासूयं सभय मखिलैः सन्नतैर्भूमिपालैः
देवैः साशङ्कितमपरैः साभिमानं स्वदेश्यैः
भीतैः प्रेम्णा गृहमितितथोत्खातभूयोनिविष्टै-
रौदार्य्यस्या लयमितिसदा सस्तवं वीक्ष्यते स्म । २ ।

यां सा साक्षिण्यगणनजुषाङ्कर्म्मणा मूर्जिताना-
मालिङ्गन्ती विमलसरयूर्गौरवाद्गच्छति स्म
कीर्त्तिस्तादृक्प्रथितविमलोदारचारित्रभाजाम्
राज्ञाञ्जातासरिदिव सिता सागरं यातुकामा । ३ ।

नन्दिग्रामे तदतिनिकटे तापसं संवसन्तम्
स्मारं स्मारं सजलनयनो ऽभूत्स लङ्काविजेता
कैशैर्धूलीनिचयहरणाद्यस्य गृध्रैर्जटायो-
र्गीता कीर्त्तिर्निशिचरपतेः शोणितापानकेषु । ४ ।

कृत्वा किञ्चित्स मनसि ततो विस्मयाधायिलीलः
गङ्गाङ्कांचिन्नयनयुगलस्यन्दिनीं धौतभासम्
व्यावर्त्त्यास्यादमरतटिनीमीक्षयन्त्या प्रियाया
लङ्कादाहाद्गरुणि निदधे मैथिलीवाक्यदूते । ५ ।

भवन्नोऽसौ तदनु विजहौ तत्क्षणा चन्द्रशालां
मूर्त्तस्तस्याशय इव विभोःस्नेहसारा नुषिक्तः

वेगेनाम्भोनिधिपरिसरोल्लङ्घिना चापिसद्यः
प्रायाद्यत्राश्रमपदगतो राघवेन्द्रानुजन्मा । ६ ।
तम्बिभ्राणं स परिकलयामास सौभ्रात्वचिह्नं
तेजोराशौ कनककपिशा मुज्ज्वलेदुर्विभाव्याम् ।
भानो र्बिम्बादिव समुदिता मर्चिरालीञ्जटालीम्
लक्ष्म्याः पात्रं परुषितदृशा म्पादुकांग्रापिताया: । ७ ।
संतप्ताया भरतधरणौ वायुबन्धुः समेघः
किञ्चिल्लोकोत्तररसमयञ्जीवनं यद्ववर्ष
हर्षोत्कर्ष कमपिपरमं तेन वर्षै र्विशुष्कं
तादृक्कल्पप्रतिमसमये रोमकेदारमाप । ८ ।
स्थित्वा किञ्चित्त्क्षणमिव ततो वाष्पमास्तम्भ्यधीरः
प्रागुन्मीलन्नयनकथितंस्वागतंव्याजहार
वाचावेगस्खलनपटुना गद्गदश्चैवमूचे
सौभाग्येऽस्मिन्कथयभगवन्प्रत्ययो मे कथं स्यात् । ९ ।
तस्याशङ्कां सतु परिहरंस्तच्छरस्य व्रणाङ्कं
मन्तश्चर्म्मापिच रघुपते र्दर्शयामास नाम ।
तद्दृष्ट्वाच त्वरित गमनः प्रस्थितोऽसावयोध्याम्
निष्पन्नत्वाच्छकुनिषु दधौ स्निग्धसासूयदृष्टिम् । १० ।

( क्रमशः )

मरालः

# अत्र तत्र सर्वत्र

## भासः कवि

विश्रुतनामधेयः कविवरबाणभट्टादिभिः प्रशंसितो भासकविः कदा बभूव ? कानितत्कृतानि काव्यानि ? किमर्थश्चतस्यैतावती कीर्ति रिति सर्वमेव प्रश्नजातमद्यावधि अप्राप्तोन्तरमेवासीत् । गतवर्षेषु तु त्रावन्कोरात्प्रचरन्त्यां त्रिवेन्द्रसंस्कृतग्रन्थमालायां अस्यकवेः प्रकाशमितानि कतिचिन्नाटकानि । तैस्तु समुन्मीलिता-नीवचक्षूंषि संस्कृतसरस्वतीरसिकानाम् । लब्धो बहोः काला-द्विलयङ्गतः काव्यमणिरित्यासी दद्याप्यस्ति च भासकाव्यदर्शनेन प्रसन्न चेतसां विदुषाम्मानसोऽभिप्रायः । यत्संस्कृतपत्रन्दृश्यते, यन्नवीनम्पुस्तक मवलोक्यते, तत्रैव भासकाव्योद्धारस्य शुभ-समाचारः समुपलभ्यते । वयमपि समाचारमेतमुषाप्रणयिषु सोत्साहन्निवेदयामः । कीदृशानि तानिकाव्यानि, कीदृशश्च तेषास्प्रणेतुः कविमूर्धन्येषु मान इति तुवयं पुनः कदापि निवे-दयिष्यामः ।

## कोऽयमात्मा नाम ?

नव्योऽयंसमयः, विज्ञानमयः । नाद्यत्वे कस्याप्यपरीक्षितं वचः प्रामाणिकत्वेन स्वीक्रियते । यद्वस्तु नः पूर्वपुरुषा विचारेण युक्त्याऽनुमानेन वा ऽसाधयँ स्तदधुनापरीक्षणनिरीक्षणाभ्यां स-मीक्ष्यते । नैतदस्मादवगन्तव्यं यन्न प्राचीना दर्शनगुरवो निरी-क्षणपरीक्षणरीति मजानन् । प्राधान्येन ते संययद्वारैव सर्व मविदन्नित्येवास्य तात्पर्यम् । वैशेषिकादिकृत स्तावदिच्छाद्वेष-प्रयत्नादिभिर्लिङ्गैः जीवात्मानमसाधयन्, परमद्यत्वे वैज्ञानिका-स्तदीयं चित्रमवलोक्यैव ग्रहणसम्भवः इति न ते तंस्वीकर्तु-मिच्छन्ति । प्रत्यक्षप्रधानवादिनइत्यभिमानवन्तो नव्यतत्वज्ञा-निनः कथं वाऽनुमेयरूप ध्यानैकमात्रवेद्य मात्मानम्मन्येरन् ? एषा ऽभूदद्यावधि व्यवस्थितिः पश्चिमदेशोद्भवानां संसृतिरहस्यविदाम् ।

# सर आलिवरलाज महोदयः

किन्तु सम्प्रति समयः परिवर्तमानइव दृश्यते । केवलम्परीक्षणनिरीक्षणाभ्यामेव सकलञ्जगन्न द्रष्टुं शक्यते । तत्रदिव्यदृष्टिरपीष्यते तत्वज्ञानाय । कथं परीक्षणेन सर्वकारणभूता प्रकृतिः परिज्ञातुं शक्यते, कथंवाऽविदितरूपं सकलकलापूर्णमप्यपरिज्ञेयं ब्रह्म । एतदधुना पाश्चात्यपण्डितैरपि किंचित्किंचित् परिदृश्यते । तेष्वपि सम्प्रत्यात्मब्रह्मवादिन स्तत्वविदोबहुलायन्त इव प्रतीयन्ते । तेषु सर्वेष्वपि मुख्यः सर आलिवर लाज महोदयः किल आंग्लविज्ञानविदाम्मूर्धन्यएव, सखलु परोक्षमपि वस्तुजात मङ्गीकरोति । तेन सर्वविज्ञानविशारदेन सताऽपि केवलम्प्रत्यक्षविज्ञानस्य अपूर्णता अभिमन्यते । भवतु नाम पार्थिवाप्यादि भौतिकवस्तूनां रसायनादिशास्त्रैः परिज्ञेयता, परं कथन्त्वेतत्समग्रमेकीभूतमिव, एकवश्यमिव, अपरस्परविरोधिरूपेण सहकारितामभजते । कथं हस्तपादादयः सर्वेऽपि देहावयवाः एकप्रयत्नप्रेरिताः, एकस्मिन्नेव शासने तिष्ठन्ति । एतमेव सन्देह मुत्थाप्य लाजमहोदयेनापि स्वीकृतः सम्प्रति परोक्षतत्वज्ञानपन्थाः । विजयतां भारतीया दर्शनपद्धतिः ।

# शारदा ।

प्रयागनगरात्साम्प्रतमेव प्रादुर्भूतां, रुचिराकारां, साधुलेखपरिपूरितां शारदां वयं सहर्षमभिनन्दामः । नवीनेयं सहयोगिनी संस्कृतभाषाया प्रचरन्तीषु पत्रिकासु लेखैराकारेण च मूर्धन्या भविष्यति, यदि भाविनोऽङ्का अपि प्रथमाङ्कोपमाना एव भविष्यन्ति ।

# नियमाः

१. इयम्पत्रिका प्रतिमासम्प्रकाश्येत ।

२. वार्षिकम्मूल्यमस्याः सार्द्धं रूप्यकम् ।

३. सर्वेऽप्युचिता लेखा अत्र स्थानं लभेरन् ।

४. सम्पादकस्य प्राप्तपत्रेषु परिवर्तनाद्यधिकारोऽस्ति ।

५. सम्पादकाय प्रबन्धकर्त्रे च पृथक् २ पत्राणि लेख्यानि ।

उषायाः प्रबन्धकर्त्ता

गुरुकुल विश्वविद्यालय काङ्गड़ी

डाकखाना शामपु

जिला बिजनौर

Registered Number A. 639.



* ओ३म् *

# उषा

संस्कृतमासिकापत्रिका

उषा अजीग भवनानि विश्वा । ऋग्वेदे ।

संवत्सरः १—माघ १९७० विक्रमी—अङ्कः २

दयानन्दाब्दः ३१

गुरुकुल विश्वविद्यालय काङ्गडीतः

प्रचरन्ती

काङ्गडी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रितम्

॥ ओ३म् ॥

विषय सूची

# उषा

| प्रथमे वर्षे | ... ... माघ मासः ... ... | द्वितीयो मासः |
|---|---|---|

## सौजन्यम्

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥

सौजन्यं हि नाम मनुष्यस्य परोधर्मः, येनास्य सर्वं जीवनं सुखमयं कल्याणमयञ्च सम्पद्यते। नून मतिदुर्भरो ऽपि संसार भारो नैन मवसादयितु म्प्रभवति, समुपस्थितान्यपि प्रलोभन-शतानि नैनं धर्म्यात्पथः प्रच्यावयितुं शक्नुवन्ति, दुःखशता न्यपि च समापतितानि नैनं विचालयितुं क्षमन्ते। सततं दुःखो-दधौ निमग्नानुद्धर्त्तुं जायमाना मानस—भावनैव सौजन्य लक्ष-णम्। परकीयवेदना कस्य सचेतसो मानसं न दुनोति, नून मसावुदरम्भरी केवल म्भूतल भारभूतो नरपशुरेव वक्तुं युज्यते यस्य मानसं परकीयवेदनया नोद्विग्नं सञ्जायते। दयेति किय-ती नाम शक्तिः प्रतिपादिता वेदान्त–ग्रन्थेषु, सौजन्यं हि नाम दयाऽपर नामधेयं न वस्त्वन्तरम्।

सेयं दया स्वाभाविकी प्रतिमनुष्यं विधिकल्पितैव, यया परानुपकर्त्तुं निसर्गतो मानवः प्रवर्तते ; यद्यपि सौजन्यं निसर्गसिद्ध मित्यवोचाम तथा ऽपि पूर्वजन्मकृतपुण्य वशादिह तदुद्भूतिः क्वचिल्लक्ष्यते क्वचिन्न ; इत्थञ्च सति, कस्यचित्पूर्वजन्मकृतपुण्यवशा न्निसर्गसिद्धं सौजन्य म्भवति अपरेषान्तु स्वाभाविकं कौटिल्यम् । अतिरोहितोऽयमर्थः, यत्र कौटिल्यवृत्तेः प्राचुर्य्यम्भवति, भवति तत्रैव मत्सराऽधिक्यम् । वक्रः पन्था खलु कुटिलजनानां, परकीयवेदनया तेषां मानस मामोदावहम्भवति; अत एव ते खिन्नमनस्क म्प्रभूतं खेदयितु म्प्रयतन्ते । यथा मक्षिकाव्रणरुधिर मास्वादयन्ती व्रणं चिराय घटयति, तथैव कुटिलजनानां वाग्बाण विन्यासोऽपि महद्दुःखाय सम्पद्यते । नूनं कुटिलजनानां हृदयन्न कस्मिन्नपि समये शान्ति-निकेतनं भवति, परमपरेषा मुन्नतिं वीक्ष्य सर्वदा दोदूयते । तदिदं कौटिल्यन्न लाभाय, तेन नेदमुपादेय मपि त्वनुपादेय मेव, उपादेयञ्च सौजन्यम् ।

अत्र खलु सर्वत्रा ऽपि भूमिवलये न एकैव जातिर्लक्ष्यते परम्प्रत्यक्षोऽयं जातिभेदः, अवस्था भेदाच्च अस्त्येव तासां विचार-भेदोऽवस्थितिभेदश्च । नूनं भिद्यतेकालः प्रतिक्षणम्, कालभेदाच्च यत्किल पूर्वमासी न्न तदिदानी मुपलभ्यते; न तावदार्यजातेः साम्प्रतिकीदशा पूर्वामनुवर्तते, न वाप्यन्यजातीनामवस्थितिः पूर्वकल्पा परन्तासु सुमहान्तं भेद मुपलभामहे ।

व्यक्तिसमुदायपरिघटितैव जातिर्भवतीति व्यक्ति निष्ठगुणानां जातौ कल्पनं न असामञ्जस्य मुद्वहति । अत एव यथा व्यक्ति-निष्ठं सौजन्यं कौटिल्यं वा निसर्गसिद्ध म्भवति भवति तथैव जातिगतं सौजन्यं कौटिल्यं वाऽपि स्वभावसिद्धमेव ।

नेद मयथार्थ मपितु प्रत्यक्ष प्रमाणसिद्धम् । ऐतिहासिकानां श्रमोऽमुमेवार्थं द्योतयति । नीतिकुशलाना म्प्रयत्नो ऽपि सुदृढं पुष्णात्यमुमेवाऽभिप्रायम् । यदि नाम नास्त्यत्र स्तोकोऽपि सन्देहः, नूनं विचारणीयं केनोपायेन कुटलमतीनां कौटिल्य म्परिवृत्ति सहम्, निपुणश्च द्रष्टव्यं कथमिव वर्तमानसमयानुरूपं तैस्साक मकुटिलानां व्यवहारेण भाव्यमिति ।

व्यक्तिगतं कौटिल्यन्न तथा जगदाकुलयति यथा जाति निष्ठं कौटिल्य मखिलं जगन्नाशयति, जातिनिष्ठं कौटिल्यं सरस-मपि भूमिवलयं रसमादाय पुष्पं मधुमक्षिकेव विरसं तनुते । आह कश्चित्कविः

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।

तच्चेदं केषाञ्चिन्नये चिन्त्यम् । अस्माकन्नयेतु आततयिन-एव ते, ये कुटिलं व्यवहरन्ति "आततायिन मायान्तं हन्या देवावि-चारयन्' इतिन्यायेनावश्यं ते पशुमारं भूतलादपसारणीयाः ।

नहि तेषा मवस्थिति जगदुपकाराय भवति अपि तु जगदप-काराय । सज्जनानाम्परिरक्षणं दुर्जनानाञ्च शिक्षणमि त्येतदेव सौजन्यम् ।

कुमारः

## "बुद्धधर्म्मो ख्रिष्टधर्म्मस्य प्रभवः"

नमो भगवते बुद्धाय । नमः संघाय । नमोनमश्च बौद्धाय ! भ्रातरः, अद्य मे सन्मार्गाद्भ्रष्टानां भारतीयानां चरितं निशामयितुं नास्ति कामना । तन्निशमनेन प्रथमत एव विषण्णानि भवतां हृदयानि । अतः देवचरितानामेव भारतमातृसुतानां पवित्रञ्च प्रशंसनीयञ्च कीर्तिकरञ्च कर्म गातुं प्रवर्तामहे । तदुदारेण च स्निग्धेन च चेतसा संमानयितव्यम् । भ्रातरः, भगवता बुद्धेन तदनुगामिभिश्च यदुपकृतं भारतमातुः, अद्यावधि तस्य सहस्रांशोपि केनचिदपि न कृतः इतिनः द्रढीयान् विश्वासः । एवंविधे विपन्मये समयेऽपि चेज्जगन्नः संमानयति, तस्यनिमित्तं स एव तत्रभवान बुद्ध इति धीरं ब्रूमः । तदेव निरूपयितुश्चेदानीं प्रसरामः !

ख्रिष्ट धर्म्मस्य बुद्धधर्मेण न कस्मिंश्चिदपि अंशे विसंवाद इति सिद्धन्तितश्च निरूपितश्च पाश्चात्यधीमद्भिः । तेषां मूर्धानं यद्द धुनोति तदिदमेव, कुतोऽयं बलवान्संवादः ? किं देशभेदा त्किञ्चित्परिवृत्तः बुद्धधर्म एव ख्रिष्ट धर्मः उत कश्चिदन्यः ? अपिचेदनन्यः कथं बुद्धधर्मस्य तत्र प्रवृत्तिः ? केन तत्र बुद्धधर्म्मे ते ते जना अभिषिक्ताः ? परं चेत्ते भारतभूमेः प्राचीन मितिहास मालोचयेयुः तेषां सर्वेऽपि विशयाः विच्छिद्येरन् ।

अलक्षेन्द्रः ( अलग्जन्दर ) यवनेषु भारतभक्तः भारतप्रियश्च यावानभूत् न तावान्मया कश्चिदन्यस्तेषु दृष्टः । स हि स्ववीर्याभिमानी वीरप्रियः इति नाम्ना जगति विश्रुतः । वीरैरेव हि

यत्सत्यं तस्यालल्लिप्सा स्नेहश्चाभूत् । तस्य भारतीयैः सह वि-शिष्टश्चाद्भुतश्च स्नेह आसीत् । यतस्तस्मिन्काले भारतीया एव जगद्वीराणा मुपरि वर्तन्ते स्म । सर्व मपि दिव्यमिह तन्मतेऽभवत् । पौरवस्य शान्तिमयीं मूर्तिमवलोक्य कियानाश्चर्य्यः तस्याभवदि-ति नान्तर्हितमितिहासानुशीलिनाम् । एव मत्र भारतभुवि सर्वं मप्यपूर्वं निरीक्ष्य तस्मिन्नुदिता विचारसन्ततिः—पश्चाम्बुद्वी-पवासिभिः सह हरिवर्षवासिनां वैवाहिकं कर्म्म अनुष्ठापयित-व्यम् । गमनागमनञ्च परस्परं प्रवर्त्तयितव्यम् । येन पारस्परि-की प्रीतिः सौहार्दञ्च द्वयोः आर्य्यवंशयो रन्तरे प्रोन्मिषेत् ।

## दायोडोरस सिक्युलस १५. ४.

परं विधिविपाको हि न किञ्चिन्न करोति । स भारत वि-जयानन्तर मेवोपरतः तस्य विचिन्तितमपि तेनैव सहोपरंस्य-तीति पूर्वं प्रतीतं, परमनन्तर मयं प्रत्ययः अलीकतां गतः । अ-चिरादेव परस्पर मार्य्ययवनयोः सौहृद्यं बलीयसा बलेन प्रोद्भूत-म् । नव्येषु च सौहृद्येषु यद्भवति तदेव तदापिअभवत् । भारतीया आत्मज्ञाने च आत्मधर्मे च तानुपदेष्टुमभिलाषुका अभूवन् ते च तस्मिन्प्रावीण्य मधिजिगमिषव इति ?

## हिस्टारिकल इन्ट्रोडक्शन ५.

एवं दैनंदिनी च स्नेहोपचितिः, पारस्परिकश्च हृदयसम्ब-न्धः, धर्मैकता च मन्दं मन्दं जातिद्वयस्य हृदि स्थान मकरोत् । सम्राजा चन्द्रगुप्तेन यवनराजस्य शैलाक्षस्य कन्यायाः पाणिःगृ-

हीतः, तद्वंशजेन महात्मना देवप्रियेण बलवता सम्राडशोकेन त एवात्मनः बौद्धधर्म्मे ऽभिषिक्ताः। स हि आत्मनः शिलालेखेषु यवनभूपेषु पञ्चानां नाम निर्दिशति, यैस्तस्य धर्म्मः स्वकीयेषु राज्येषु प्रवर्त्तितः !

तेषुमिश्राधिपतिः श्रीमानैन्टिआकसः न केवलं भारतेन —अपितु जगताऽपि सोत्कण्ठं सस्नेहंश्च स्मर्य्यते। भ्रातरः, अयमेव सनृपः, योहि अलक्षेन्द्र ( अलक्जन्ड्रिया ) पुर्याः महीयसः पुस्तकालयस्य स्थापकः प्रवर्तयिता चासीत्—अयमेव सनृपः यस्य पुस्तकालयाध्यक्षस्य भारतीयग्रन्थाननूदितु मुन्मनस्त्वं जगत्यद्यापि सुप्रथितम्। अस्य राज्ञः राज्ये भारतीयाः सुखं स्म निवसन्तिः विद्वांसश्च कीर्त्तिं स्माधिगच्छन्ति। कोटिशश्चजनाः जगद्वर्त्तीनि पुस्तकान्यनूदितुं राज्ञा तत्र नियुक्ताः अभूवन्। अस्यैवचेदं राज्यमासीत् यत्र साटमिना विद्यामधिगन्तुं आगतैः ब्राह्मणैः सहालप्यात्मनः मन आमोदितम्। इदमेव च त द्राज्य मासीत् येन बौद्धाः लङ्कायां धर्म्मोत्सवं द्रष्टुं प्रेषिताः।

## हिस्टारिकल इन्ट्रोड कशन ५.

किं बहुना, इदमेव तद्राज्यमासीत् यत्र बुद्धधर्म्मः लघु लघु प्रेमभाजनश्च सत्कारभूमिश्च जनानां गतः। यत्परिवर्त्तनं देशान्तरे धर्म्मेषु निष्पद्यते तदेव तस्मिन्नपि निष्पन्नम्। भ्रातरः, नहि लवमात्रं भेदमवलोक्य तत्र प्रवृत्तस्य बुद्धधर्म्मस्य भारतीय बुद्धधर्म्मातिरिक्तत्वं कथ मप्यभ्युपगन्तु मुत्सहामहे। अतः किञ्चि:

त्यपरिवृत्तोऽपि तत्र प्रवृत्तः बुद्धधर्म्मः वस्तुतः भारतीय बुद्धधर्म्म एव आसीत् इति नः मतम् ।

यवन राज्येषु बुद्धधर्म्मः निरतिशयं प्रवृत्त आसीदिति-विचारं कनिष्कस्यैकं प्राचीनं रूप्यक मपि परि बृंहयति । तस्मि-न्ध्याननिमग्नस्य भगवतः बुद्धस्यैकामूर्तिः यवनान्याश्च "बुद्ध" इत्यङ्कितमस्ति ! तच्च इतिहासानुशीलिभिः कलकत्तापुर्य्याः अ-द्भुतालयेऽद्यापि द्रष्टुं शक्यते !

जगतः प्राचीनेतिहासप्रणेत्रा साटमिना ( २०० ए. डी ) सारीजातेर्नाम एकस्मिन्स्थले उट्टङ्कित मस्ति, सहैव च तेन अ-स्याः मिश्रदेशेन बलीया न्सम्बन्धोऽपि प्रदर्शितः । इयं जातिः बुद्धधर्म्मावलम्बिनी आसीदिति चीनयात्रिभिः सुस्पष्टं उक्तम् । अस्याः निवासः यवनराज्ये भारते चासीदिति नास्ति तिरोहित मितिहासानुशीलिनाम् ।

एव मिदानीमिदं प्रकामं विशदं जातम् यद्बुद्धधर्म्मः पाश्चा-त्यदेशेषु सर्व्वत्रैव प्रचलित आसीत् । एत स्मादेव बुद्धधर्म्मात् ख्रिष्ट धर्म्मस्य प्रभवः विकासश्चे ति नः निरूपयितव्यं तच्च निरू-पयिष्यते ऽचिरादेवेतिशम् ।

प्राणनाथः

# श्री कालिदासः कदाबभूव ?

( पूर्वानुवृत्तम् )

कालिदासस्य शुङ्गनृपाणां ज्ञानं (३६) तस्यज्योतिविद्याया गणितफलितोभयरूपेण ज्ञानं (३७) तस्य बृहत्कथायां वर्णितानां कथानां परिज्ञानं (३८) तस्य हूणादिप्रत्यन्तजातीनां परिज्ञानं (३९) तस्य ग्रन्थेषु पातञ्जलानामनति प्रचुरप्रयोगाणां शब्दाना मुपयोग एवमन्यान्यपि बहूनि मानानि (४०) कालिदासस्य विक्रमाब्दारम्भादर्वाचीनत्वं बोधयन्ति । विक्रमाब्दारम्भात्पूर्वं द्वितीयशतके (४१) समुद्भूतस्य पतञ्जलेरनन्तरं संस्कृतस्य प्रयोगो विरली भूद्बहुविधानि च प्राकृतानि तत्स्थाने प्रायुज्यन्तेति विदितं प्रेक्षावतामतएव च गुणाढ्यस्य महाप्रबन्धः पैशाचे प्राकृतविशेषे, (४२) न्यबध्यत न तु संस्कृते । अयं प्राकृतप्राबल्यसमयः सर्वथा कालिदाससदृशस्य संस्कृतमहाकवेः प्रादुर्भावायोग्यो बृहत्कथाकथानां परिज्ञानमपि कालिदासस्य गुणाढ्यपरभावित्वं सूचयति । किंचोपरागस्य वास्तवो हेतुः कालिदासस्य विदितो नवति संशयेपि (४३) यावज्ज्योतिष विज्ञानं (४४) तेन स्वप्रबन्धेषु प्रदर्शितं तेन स्फुटं परिज्ञायते यदसावार्यभट्ट वराहमिहिरयोः

---

३६ अग्निमित्रस्तेषामेकः ।

३७ एस् रायमहाशयस्य वङ्गीयैसियातिकसमितिपत्रस्थेलेखे ।

३८ प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धानित्यादि मेघदूते ।

३९ शक्यमालिङ्गितुं पवन इति शाकुन्तले, स्मरयति मालोचने तस्याइति च विक्रमोर्वशीये ।

(४०) गुणाढ्य समयात्पूर्वमेव संस्कृतस्य भाषात्वमुपरतमिति प्रतीयते कालिदासस्य संस्कृतं न भाषाहनैसर्गिकत्वचिह्नितमिति तस्य गुणाढ्य परभावित्वमेवसंभावितम् ।
(४१) गोल्ड स्टूकरमहाशयस्य पाणिनि विषयकः प्रबन्धोद्रष्टव्यः।
[४२] प्रमाणं सप्तलक्षाणि पैशाचनीरसं वचः।
शोणितेनाक्षरन्यासोधिक्पिशाच कथामिमामिति कथासरित्सागरे
(४३) छायाहि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिरिति शुद्धिमतः चन्द्रस्य कलङ्कं वर्णयति न तूपरागम् ॥
(४४) रघुवंशे तृतीये रघोर्जन्माङ्ग कुमारेऽष्टमेपार्वती विवाहसमयं ज्योतिषानुसारेण ।
संनिकृष्ट (४५) स्ताभ्यां तदनन्तरपूर्वजेभ्यो वा ज्योतिष विज्ञानमासादितवान् । (४६) तथा च कालिदासस्तृतीयशतकात्पूर्वतरो नेति स्पष्ट मेव । किंतु पञ्चमशतका त्परतो प्यस्या नयनं न सुकरं, सप्तम शतके हि (४७) बाणेनासौ हर्ष चरिते रविकीर्ते द्वितीयपुलकेशिप्रशस्तौ च (४० नामग्राहं वर्णितः। द्वितीय पुलकेशि प्रशस्तौ चास्य नाम भारविणा सहै वोक्त मिति पुलकेशिनः समयाच्छताधिका वत्सराः भारवे ध्रुवं व्यतीता येनासौ तथा विश्रुतो भूद्यथास्य कीर्तिः प्रशस्तिषूपन्यासोपचिता बभूवेति वक्तुं शक्यत एव । बाणेन कालिदास समभिव्याहारे वर्णितः सुबन्धुरपि प्रायो बाणाद्वत्सरशतं पूर्वमेवासीद न्यथा बाण समये तस्य तथा ख्याति र्नाभविष्यत् । अतो भारविः सुबन्धुश्च षष्ठ शतके ततोपि पूर्वमेवास्ता मित्यत्रनको पिसंशयः । सभङ्गश्लेष शब्द काव्यादि (५०) बहुलाभ्यां ताभ्यां सरलतरकाव्यस्य कालिदासस्य चिरपूर्वभावित्वं च स्पष्ट मेवेति कालिदासचतुर्थ शतकान्ते पञ्चमशतकारम्भे ऽवात्सीदिति केषां (५१) च

(४५) आर्य्य भटेन पञ्चमशतकारम्भे पाटीलपुरे स्वकीय आर्य्यसिद्धान्तो लिखित इति तद्ग्रन्था देवज्ञायते ।

(४६) टीबोमहाशयस्य भारतीयज्योतिष विषयके लेखे रोमकी सिद्धान्ता दीना मार्यभटात्प्राचीनत्वं स्वीकृतम् ।

(४७) निर्गतासुनवाक्यस्य कालिदासस्य सूक्तिषु । प्रीति र्मधुरसान्द्रासु मञ्जरी ष्विव जायते इतिहर्ष चरितोपक्रमे ।

(४८) येनायोजिनवेऽश्मस्थिरमर्थ विवेकिनाजिनवेश्म । सविजयतां रविकीर्तिः कविताश्रितकालिदासभारवि कीर्तिरितिद्वितीय पुलकेशिप्रशस्तौ

(४९) सुबन्धुर्न नामग्राहं बाणेनवर्णितः किंतु कवीनामगलद्दर्पोनूनं वासवदत्तया । शक्त्येव पाण्डुपत्राणांगतयाकर्णगोचरमितितद्ग्रन्थ स्तेनवर्णितः

[५०] कुमारदासस्यभारवेः सुबन्धोश्चप्रबन्धेषु भङ्ग-श्लेष उपलभ्यते। सर्वेचैते पञ्चमसप्तमशतकयोर्मध्येसमुद्भूताः । कालिदासीयेषु प्रबन्धेषु तु भङ्गश्लेषोनकुत्राप्युपलब्धः ।

[५१] मुग्धानलाचार्यस्य संस्कृतसाहित्येतिहासे स्मिथमहाशयस्य च प्राचीनभारतेतिवृत्ते ।

अर्वाचीनानां मतं तत्समय विषयक संभावनान्तरेभ्यः समीचीनतरं प्रतिभाति । तदित्थं निसर्गतो विक्रमादित्यापराख्यस्य चन्द्रगुप्तस्य राज्ये (चतुर्थशतकान्ते पञ्चमशतकारम्भे च) कालिदासो भूदिति संभावयामस्तथा सति हि तस्य विक्रम संबन्धोपि सुघटः । वस्तुतः सविस्रम्भमिदं वक्तुं शक्यते यत्कालिदासस्य समयोंशतश्चन्द्रगुप्तस्य समयेंशतश्च तत्पुत्रस्य कुमार गुप्तस्य (५२) समयेन्तर्भवतीति । तथा चास्य कवेः कालः ख्रिस्तचतुर्थशतकस्यान्ते पञ्चमशतकस्य चारम्भे पततीति सुस्पष्टम् । अस्मिंश्चकाले कालिदासीयत्वेन निर्णीते तस्य भारविसुबन्धुभ्यां प्राचीनत्वमप्यायातं तौहि षष्ठशतकस्यारम्भे समुद्भूतौ किंच कालिदासोऽपाणिनीयां स्तांपातयां प्रथमम सेत्यादि कतिचित्प्रयोगान्स्वकाव्येषु विन्यास्थदीदृशाश्चप्रयोगा बुद्धचरितं (५३) विहाय नान्यत्र लौकिक काव्ये

पूपलभ्यन्त इति नूनं बुद्धचरितप्रणेतुरश्वघोषस्य कालिदासस्य च तदाविर्भावः संभावितो यदा पाणिनेः प्रमाण्यं न विश्वजनगीतमासीत् भारवि सुबन्धु (५४) समयेतु

[५२] चन्द्रगुप्तस्य समयो गुप्तवंश्यानांसम्राजमितिवृत्तं च स्मिथमहाशयस्य पुस्तकेद्रष्टव्यम् ।

[५३] किंचशक्रध्वजोपि कालिदासादर्वाचीनाना मज्ञातप्रायोबुद्धचरिते वर्णितः । पुरुहूतध्वजस्येवेति रघौ पपातशोकाभिहतो महीपतिः शचीपतेर्वृत्तइवोत्सवैः ध्वजइति च बुद्धचरिते ।

[५४] आजघ्ने विषमविलोचनस्य वक्षः, वीतजन्मजरसं, नाथसे किमु पतिं नभूभृतामिति कतिपयान्प्रयोगान्विहाय भारवेरपाणिनीयाः प्रयोगा अविदिताः । सुबन्धोस्तु प्रायोनैकोप्यपाणिनीयः प्रयोगउपलब्धः । कालिदासस्यतु तं पातयां प्रथममास, शक्यमालिङ्गितुंपवनः, त्रियम्बकं, वपुःप्रकर्षादिबहवोऽपाणिनीयाः प्रयोगाउपलभ्यन्ते।

पाणिनेः प्रामाण्यमनतिक्रमणीयमासीदिति सर्वथा ताभ्यां प्राचीनतरः कालिदासः । कालिदासस्य गणितज्योतिष विज्ञानं तु न तथा गहनं येनार्यभटानन्तरमेवास्य विनिवेशः क्रियेत । तस्त वराहमिहिर समकालिकत्वंतु ज्योतिर्विदाभरणीय नवरत्न पद्यमात्रमूलकं केनचिदत्यर्वाचीनेन जैनेनात्यन्तमशुद्धे संस्कृते विलिखितस्य ज्योतिर्विदाभरणस्य च सर्वथा प्रामाणिकेतरत्वा, नैतद्विश्वासार्हम् ।

अयं महाकविरुज्जयिनीशस्य सदस्योपि नोज्जयिनीं जन्मनालंचकार। तस्य सार्वकालिकी ग्रीष्मर्तु (५५) प्रियता बाल्ये प्रणीतेषु कुमारसंभवादिषु हिमालय दृश्यानां (५६) सविशेषः परिचयश्च कश्मीराभिजनतां सूचयतः। किंच कालिदासश्चेदकाश्मीरकोऽभविष्यद्वाणश्च शोणतरसंभवोऽकाश्मीरकत्वेन निश्चित एव कथं तर्हि पद्यकवीनां गद्यकवीनां च मूर्धन्ययोरकाश्मीरकत्वं जानन्नपि बिल्हणः 'सहोदराः कुङ्कुम केसराणां भवन्ति नूनं कविता विलासाः न शारदादेश भयाददृष्टा (५७) स्तेषां यदन्यत्र मया प्ररोह इति साभिमानमवच्यत् (५७)।

'रामावतारः

---

[५५] ऋतुसंहारे शाकुन्तलप्रस्तावनायां रघौषोडशे च।
[५६] कुमारे शाकुन्तले मेघदूते च।
[५७] विक्रमाङ्कचरतोपक्रमे।

# ॥ प्रावादुक विभ्रमः ॥

( लेखकः—श्री गोविन्द शास्त्री )

काश्यपीये तन्त्रे तमो नाम नातिरिक्तं किमपि द्रव्य, मपितु तेजोऽभाव एव तथाच काणभुजं सूत्रं "द्रव्यगुणकर्मनिष्पाति वैधर्म्याद्भाभावस्तम इति। यद्यपि नव्यैः प्राग्भिश्च वैशेषिक मतानुसारिभिः सूरिभिः सुबहु पराक्रान्तम मुष्मिन् विषये, त-थाप्य नुपचितावयवायाममुष्यां पत्रिकायां न तावत्तेषामा कूत जातान्य नवयवेन समुपन्यस्य समालोचयितुं समुत्सहामहे, केवलं पदार्थसङ्ग्रहग्रहिला वयमत्र यथानुभूति किमपि प्रस्तोतुं प्रवृत्ताः स्मः। "संविदेव हि भगवती वस्तूपगमे नः शरण मिति वदन्नुपस्कारकारोऽप्य नुभव एव वस्तुसत्तायां प्रमाण मि-त्याह, नच प्राणभृद् भेदेना नुभवस्यापि वैविध्याद् वस्तु सत्ता-पि विविधेति वाच्यं, प्रामाणिकानुभवस्यैवात्र वस्तुसाधक तयेष्टत्वात्, प्रमाणेनार्थमुपलभ्य व्यवहरन्तएव हि प्रामाणिका इत्युच्यन्ते नतु प्रमाणाभासेनापि, नहि तावदेकस्मिन् वस्तुनि प्रामाणिकानां व्यवहारो विभिद्येत येन वस्तुसत्ताया व्यतिक्रमः सम्भावनीयो भवेत्। तथाचानुभाविक्यां वस्तुव्यवस्थापनायां कस्यचिदपि मुनेर्महर्षे र्वा सूत्रातिक्रमदोषः पदार्थपरीक्षकाणा मुपरि नारोप्यः। पदार्थस्वरूपनिरूपणद्वारा तन्मार्गप्रदर्शन मात्रफलकत्वा त्सूत्रकृत्प्रवृत्तेः, नतु स्वसूत्रप्रामाण्यसम्पादना

वैयर्थ्यं सूत्रकृतः संभवति इति कृत्वा प्रसक्तानुप्रसक्त्या, तमसो द्रव्यत्व विषये वैशेषिकास्तावदेवं प्रत्यवतिष्ठन्ते — चन्द्रार्कयो निरन्तरप्रसरासम्भवे सति सर्वतस्तम इति सर्वेषा मनुभवपथमवतरन्न बाधितोयं विषयः। यदा तु प्रतिनियतदेशेनआतपत्रादिना प्रतिबद्धस्तेजःसमुदयः, यत्र यत्र संयुज्यते तत्र तत्र छायेत्यस्ति यौक्तिकानां व्यवहारः, प्रतिबन्धकाभावे त्वालोक एवालोक्यत इत्यालोकाभाव. एव तम इति वा च्छायेति वा व्यवह्रियते। यदि नाम रूपवत्वात्तमोद्रव्यं स्यात्स्पर्शवदपि स्यात्, रूपस्य स्पर्शव्याप्यत्वात्, स्पर्शवत्वे च गुरुत्ववत्त्वमपि स्यात्, नीलरूपस्पर्शवतोद्रव्यस्य गुरुत्वनान्तरीयकत्वात्; तथाच स्पर्शवतोद्रव्यस्य द्रव्यारम्भकत्वनियमात् कदाचिदलाबूफलानीव तमः खण्डावयविद्रव्याणि समुपलभ्येरन्। अन्यच्च महतः स्पर्शवद्द्रव्यस्य प्रतिघातहेतुकत्वान्नक्तं प्रकृष्टे तमसि गच्छतः पुरुषस्य गतिः प्रतिहन्येत, नचेदं किमपि केनाप्युप लभ्यते. न-द्युपमनुपलभ्यमानाना मपिसत्त्वं कल्पयितुं शक्यते, शशशृङ्गादीनामपिसत्त्वं कल्पना प्रसङ्गात्, तथाच कथं नाम तमो द्रव्यपदम धिरोढुमीष्टे। तमसस्तावद्द गुण कर्म शङ्कैव नो देति तयो र्द्रव्याश्रितत्वेनैव प्रतीतेः, शङ्कायां वा ताभ्यामेव तयो र्बाधोपपत्तेः—अत्र वैशेषिकाः प्रष्टव्याः तमसस्तेजोऽभाव स्वरूप स्वीकारस्तत्र भवता मानुभाविक आहोस्विदानुमानिकः, न प्रथमः, अभावानुभवोहि स्वरसतः प्रतियोग्युपलम्भा द्दते न सम्भवति, यथा

कुम्भस्या भाव इति अतएवाभावप्रत्यक्षे प्रतियोगिज्ञानस्य कारणत्वमपि भवन्मते सङ्गच्छते, इतश्च कुम्भाभावादयो हि प्रदीपप्रभा सद्भाव एव सन्दृष्टा इति तदभावे कथं नामा लोकाऽभाव आलोक्यते वैशेषिकैः ? 'अथायं नियमः, यो भावो यावता सामग्र्येण गृह्यते'तदभावो ऽपि तावतैव भीतेन,तदिहालोकस्या लोकमन्तरेणैव ग्रहणात्तदभावस्यापि तत्किं न स्यादिति चेदहोविषं पीत्वाऽमृतमुद्गिरति भवान् एवं वदता तत्रभवतैव तमसि द्रव्यत्वस्य स्वीकृतत्वात् , आलोकः खलु चक्षुःसंयोगात् गृह्यते यदि च तदभावस्यापि तत्सामग्र्येणैवग्रहणं स्यात्तदा तस्यापि ग्रहणे चक्षुः संयोगसद्भावात् आयाता द्रव्यत्वापत्तिः, संयोगस्य गुणत्वेन द्रव्यवृत्तित्वनियमात्, अथासंयुक्तः प्रेक्ष्यतेऽ भावस्तदा अङ्गावङ्गानां शिरसि विद्यमान मुष्णीषाभावं कुतोन साक्षात्कुर्वते । असंयुक्तत्वाविशेषात् । अन्यच्च असंयुक्तत्वे तत्रभवतां चक्षुषा प्राप्यकारिताप्रवादो ऽपि व्याहन्येत 'अथाभावप्रत्यक्षस्तावत् विशेषणविशेष्यभावसंबन्धेन संभवतीति चेदत्रायमनुयोगः कस्यैतत्तमोविशेषणम् ? न शरीरस्य ततो ऽन्यत्रापिप्रतिभासनात् नापिभूतलकलशकुड्यादेः ततो ऽप्यन्यत्र प्रतीतेः, नापि नभसः अभावप्रत्यक्षे ऽधिकरणयोग्यतायाः तन्त्रत्वात् तथाच नभसो ऽप्रत्यक्षत्वे तत्रविशेषणीभूतस्याप्यप्रत्यक्षत्त्वात् ननु तथा सति पश्य वियति विहंगमाः समुत्पतन्तीति वाक्यस्याप्रामाण्यं स्यादिति चेन्न, पश्ये त्यालोक मण्डलमवलोक्य तथाविधप्रयोगयोगात् ।

अथ तमसस्तेजो ऽभाव रूपतां वदन्त भवान प्रष्टो व्याचष्टां किमालोकस्य प्रागभाव स्तम आहो स्वित्प्रध्वंसाभाव अन्योन्याभाव अत्यन्ताभावो वा ? आद्येप्ये कस्यानेकस्य वा तमः ? नतावदेकस्य लोकस्यप्रागभावस्तमः प्रदीपात् प्रथमेव प्रभाकरप्रभया पि तस्यनिरस्यमानत्वात्, भवन्नये यस्य हि यः प्रागभावः सतेनैव निरस्यतइति नियमात् नहि घटप्रागभावः पटेन निरस्यते ।

नाप्य नेकस्य, एकेन भानुनैव भुवनविवरवर्तिनः समग्रस्य तमसो निवर्त्यमानत्वात् । यदि चेदं तमः प्रागभावस्वभावं स्यादालोकविरामे नास्योत्पत्तिः स्यात्प्रागभावस्याऽनादित्वात् । नवाऽऽलोकस्य प्रध्वंसाभाव स्तमः विनाश्यमानत्वात् नहि कस्यचिद्वस्तुनो ध्वंसः केनापि विनाश्यते ध्वंसस्य नित्यत्वात्सर्वदोपलब्धिप्रसङ्गश्च ध्वंसप्रागभावयोःस्वप्रतियोगिसमवायिदेशवृतित्वनियमादालोकावयवेष्वेव तमसः प्रत्यक्षत्वप्रसङ्गा दत्र तम इति प्रामाणिकप्रतीते रुच्छेदापत्तेश्च नाप्यालोकान्योन्याभावस्यतमः अन्योन्य भावस्य भेदस्वरूपत्वा त्तस्य च दीप्तेऽपि द्युमणितेजसि सत्वात्तमिस्राया मिव वासरेऽपि तमः प्रतीत्यापत्तेः । नैवालोका त्यन्ताभावस्तमः अधिकरणग्रहमन्तरा तस्याप्य विज्ञायमानत्वात् । तथाचैतत्सिद्ध म्भवति तमसस्तावदभावस्वभावाङ्गीकारो नानुभविक इति अवशिष्टमुपरिष्टात्

# प्रमाणशास्त्रं प्रमयेशास्त्रञ्च ।

### तयोः पृथक्त्वमावश्यकम्

आस्तिकानां खलु षडेव दर्शनानि प्रामाणिकत्वेन अभिमतानि सन्ति । चार्वाकजैनादिदर्शनानि दर्शनपदेन व्यवह्रियन्ते तथापि तेषामास्तिकैः प्रामाण्यन्न स्वीक्रियते । षड्दर्शनेष्वपि न्यायवैशेषिकौ परमाणुवादिनौ, सांख्ययोगौ प्रकृतिवादिनौ, पूर्वमीमांसा यागपुरुष वादिनी, उत्तरमीमांसा च ब्रह्मवादिनीति सर्वैः शास्त्रविद्भिरङ्गीक्रियते । क एषु दर्शनेषु परस्परं भेदः ? किंच साम्य मित्यादयः सर्वेऽपि विषयाः पुनः कदापि समालोचयिष्यन्ते ऽस्माभिः । अस्मिन् लेखे तु केवलं परमाणुवादिनो वैशेषिकन्यायशास्त्रयोः सिद्धान्तानवलम्ब्यैव कञ्चिद्विवेकं विधास्यामः ।

वैशेषिक दर्शनं हि प्रमेयशास्त्रेतिसंज्ञया व्यपदिश्यते । तस्मिन्पदार्थाना मेव वर्णन म्प्रधान, मन्येषान्तु सर्वेषां विषयाणा म्प्रासङ्गिकमेव कथनम्प्रतीयते । प्रथमसूत्र एव पदार्थविवेचचन रूपं शास्त्रस्योद्देश्यं स्पष्टम्प्रपञ्चित म्मुनिना । द्रव्य गुणकर्मसामान्य विशेषसमवायाना म्पदार्थानां स्वरूपनिर्धारणायैवो पनिबद्ध मिदं कणभुजा शास्त्रमिति सकलस्य मतिमतः स्पष्टम्पतीयते । इदम्पदार्थजातमेव प्रमेयशब्देनवाच्यमपि भवति । वैशेषिक दर्शनमेवास्तिक दर्शनेषु प्रमेय शास्त्रमित्याख्यायते ।

द्वितीय श्च न्यायदर्शन म्प्रमाण शास्त्रमिति शास्त्रविदांनिर्वितर्क मतम् । तस्मिन्हि प्रत्यक्षानुमानोपमान शब्दाना म्प्रमाणाना मेव

सविस्तरं व्याख्यान मुपलभ्यते, अत एव चैतदान्वीक्षिकीति नाम्नापि कथ्यते । संशय प्रयोजनादयोऽन्ये ऽपि लक्षिताः परीक्षिताश्च विषयाः प्रमाणसहकारित्वाद्वा प्रमाणान्तर्गतत्वाद्वा प्रमाण पदभाज एव जायन्ते। तत्र शास्त्रे प्रमाणानां लक्षणपरीक्षे मुख्ये, प्रमेयाणान्तत्र चिन्तनन्तु प्रमाण परिशोधनार्थ मेव ।

एवञ्च वैशेषिकस्य न्यायस्य च भिन्न एव विषयः । यद्यपि प्रमाणमन्तरा प्रमेयज्ञानस्या सम्भवत्वात्,प्रमेयमन्तरा च प्रमाणस्य फलरहितत्वा दुभयो रन्योन्यं विना सद्भावोए ऽसम्भव व भवेत्, तथापि नैतावतैव तयोर्भिन्नविषयता चोरयितुं शक्यते । प्रमाण शास्त्र म्प्रमेयशास्त्रञ्च वस्तुतः पृथगेव । परमद्यत्वे तु तयोर्भेदः अनुपलक्षित एव दृश्यते । सूत्रकृद्भिर्यद्यप्ययं भेदः स्वीकृतः । तथापि मध्यकालीनैः खण्डग्रन्थकृद्भिः परिशोधनकृद्भिश्च नायं भेदो लक्ष्यीकृतः । तेहि स्वग्रन्थेषु शास्त्रद्वयमपि विश्वसन्ति, तयो र्भेदभाव मुपेक्षन्ते । एकस्मिन्नेव ग्रन्थे उभयस्यापि सन्निवेशश्च विदधति । यथामुक्तावल्यादौ पदार्थविवेचन मारभ्य,बुद्धि प्रकरण एव सर्वेषां प्रमाणानां लक्षण परीक्षणे सन्निवेशिते । इत्थमेवान्यैरपि ग्रन्थकृद्भिः तयोर्भेदे न विशेष मवधानं दीयते ।

किं म्प्रमाणप्रमेय शास्त्रयोरेकीकरणं लाभकर मुत हानिकरम् ? अस्मन्मतेतु हानिकर मेव । द्वयोः शास्त्रयोर्मिश्रणेन न कथमपि समीचीना समुचिता च तयोरुन्नति र्भवितु मर्हति । यदि न्यग्रोध वृक्षस्यार्द्ध भागेन सह खदिरस्यार्द्धभागः संयोज्यते भवेन्नामकिमपि नवीनं वस्तु तयोस्तु पुष्कला पुष्टिर्न भवितुं शक्नोति । द्वयोः सहयोगेनैकैकस्य वृद्धिस्त विहतैवभवति ।

प्रमाणशास्त्रस्य कृते प्रमेयशास्त्रं वा विहन्यते प्रमेयशास्त्रस्य कृते प्रमाण शास्त्रं वो पेक्ष्यते । नो भयमपि समान मधिकारं लब्धु मर्हति । लभते चे दुभयमपि मिथो हनिकरं भवति । तस्मादिदंशास्त्रं यथा सम्भवं विभिन्नमेवा ऽनुशीलनीयं विभिन्न मेव चाध्ययनीयम् । तयोर्हि ज्ञानरीतावपि महाभेदो विद्यते । प्रमाणशास्त्रं हि बुद्धिमात्रवेद्यम् । तत्रहि चिन्तयैव कार्यं क्रियते विचारेणैव च सर्वमपि प्रमाणजातं संसाध्यते अवबुध्यते च । प्रमेयशास्त्रं तु वस्तु विषयान्वाद् दर्शनेन गवेषणया विज्ञानेन चसह सम्बद्ध मस्ति । तत्र नु परीक्षण निरीक्षणाभ्यामेव विशेषावबोधः कर्तुं शक्यते । जले कानि तत्वानि ? मृत्तिकायां कस्य कस्य पदार्थस्य परमाणवः ? सुवर्णन्नामकिम् ? इत्यादयः सर्वेऽपि प्रश्नाः प्रमेय शास्त्रेणैवोत्तरयितुं शक्यन्ते ! प्रमेय शास्त्रं हि पाश्चात्यपरिभाषानुकूलं भौतिकं विज्ञान मित्याख्यां लभते । तद्धि रसायनाद्याः सर्वा विद्या अन्तर्भावयति । तस्य प्रकृतिजपदार्थ विषयपरत्वा त्पर माणु संचय रूपत्वाच्च यन्त्रादि द्वारा भेद्यतापरीक्षणीयता चास्ति । नत्वेवम्प्रमाण शास्त्रे रसायनादिविद्या द्वारा प्रत्यक्षादिप्रमाणानां विभेदः कर्तुं शक्यते । नह्यत्रनुमानङ्कस्या प्यम्लस्यसंयोगेन दशान्तर म्प्रापयितुं शक्यते न हि शब्दः सूक्ष्म तुलायामारोप्य परिमातुं शक्यते, नाप्युपमानं सुक्ष्मदर्शकयन्त्रेण परी क्षितुं शक्यते । प्रमेय शास्त्रगताः पृथिवी जलादयः पदार्थास्तु भेत्तुं मातुं वा शक्यन्त एव । यद्यप्यत्ममनो बुद्धयादयो ऽपि सन्त्येव प्रमेयशास्त्रगताः प्रमेय शब्दे सदा र्थमात्रस्यसमावेशात् ।

तथापि प्रमाणशास्त्रात्तु तेषां ज्ञानस्यापि विभिन्नतैवास्ति। प्रमाणं हि ज्ञानसाधनं प्रमेयश्च तेन ज्ञातव्यम् । तयोः स्पष्टे भेदे कथमभेदः कथयितुं शक्यते ? आत्मादि तत्ववर्णनाय त्वस्मन्मते पृथगेव प्रमातृशास्त्रं निर्मातव्यं यत्रात्मपरमात्मनोरेव मुख्य तया वर्णनं भवेत् प्रमितिशास्त्रमपि ज्ञानादितत्वनिर्णयाय पृथगेवकार्यमित्यपि वयं लेखान्तरे कदापि प्रतिपादयिष्यामः। अस्य लेखस्यतु एष एवाशयः। प्रमाणशास्त्रस्य प्रमेय शास्त्रस्य च विषयो भिन्नः। रीतिरपि तयोर्विभिन्ना । तयोरविकलपरि वृद्धये समुचितम्प्रतीयते यत्तदुभयमपि पृथक् पृथगनुशील्येत पृथगेवाध्याप्येत च। उभयोरपि सहसंचालनेन नापि शकटोऽग्रेयाति नापि वृषभः।

इन्द्रः

# ईश्वर सिद्धिः

( लेखकः श्री नरसिंहदेव शास्त्री )

कर्त्ता भर्त्ताऽपि हर्त्ता जगति जनिमतां शास्त्रकृच्छास्त्र गम्यो
निःसङ्गो दोषहीन प्रकृति रनुपमो न्यायदक्षो दयालुः।
सत्यानन्द स्वभावो नियतिरपि यतो मात्रया न स्वतंत्रा
तं वन्देदेवमीड्यं यदनवगमनाद्धम्भ्रमन्तीह विश्वे ॥१॥

एवं हि आर्हताः सङ्गिरन्ते 'धराधराधरादिकं स्वोपादाना द्यभिज्ञकर्त्तृकं कार्यत्वाद्ध घटवत्' इति यत्परैर्जगत्कर्त्री श्वरसाधक मनुमान मुपन्यस्यते तदसाम्प्रतम् प्रतिबन्धग्रहाभावात्, साधनं हि सर्वत्र व्याप्तौ प्रमाणेन सिद्धायां साध्यंगमयेद्ध इति सर्वतन्त्र सिद्धतया निर्विवादम्, तत्र प्रत्यक्षा प्रत्यक्ष प्रमाण गोचरचराचरा त्मकानि विचित्राणि जगन्ति सृजन्नीश्वरो नाम सशरीरो वा स्याद शरीरो वा, आद्ये अस्मदादि वद्दृश्यमानविग्रह विशिष्टः आहोस्वि ददृश्यमानविग्रहविशिष्टः, नाद्यः प्रत्यक्षेण बाधात्, कर्त्तार मन्तरेणापि तरुतृणादौ कार्यत्व हेतो दर्शनात् प्रमेयत्वा दिवत्साधारणानैकान्तिकत्वाच्च, द्वितीये तस्य शक्ति विशेषः कारण मथवा जीवगतादृष्ट वैचित्री, न तावत्प्रथमः प्रकारः इतरेतराश्रयात्, शक्ति विशेष सिद्धावीश्वरस्यादृश्य शरीरसिद्धिः तत्सिद्धौ च शक्ति विशेष सिद्धिरिति ; नाप्यपरः प्रकारः, किन्तस्याऽनुपलम्भाददृश्य शरीरत्वं वन्ध्यासुतादिवत् किंवा-

ऽस्मदाद्यदृष्टवैचित्र्या पिशाचादिवदिति । नियामका ऽभावात्सं शयानतिवृत्तेः, नापि प्रथमो न द्वितीयः दृष्टान्त दार्ष्टान्तयो वैंषम्यात् घटपटादीनि हि कार्याणि सशरीरकर्त्तृकाणि दृष्टानि अशरीरिणश्च सत स्तस्य कार्यप्रवृत्तौ न सामर्थ्यं गगनादिवत् तस्मात्प क्षद्वयेऽपि 'कार्य्यत्वं' हेतु र्व्याप्यत्वासिद्धः—

सोपाधिकत्वात्, उपाधिश्च प्रकृतेः शरीरजन्यत्वमेव तस्य घट पटादौ कर्त्तृजन्यत्व रूप साध्यव्यापकत्वात् तरुतृणादौ च साधनाऽव्यापकत्वात् ततश्च 'क्षित्यादिकं न कर्त्तृजन्यं शरीर जन्यत्वा ऽभावाद्व्योमवदि' त्युपाध्यभावेन साध्याभावानुमानं फलति उपाधेः साध्यसमानाधिकरणत्वा द्धेत्वधि करण वृत्त्यत्यन्ताभावप्रतियोगित्वाच्च । उक्तं हिः—

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ इति ।

अपि चायं हेतुः कालात्ययापदिष्टः पक्षैकदेशस्य तरुतृण विद्युदम्भोधरादे रधुनाप्युत्पद्यमानस्य तत्कर्त्तु रनुपलभ्यमानत्वेन प्रत्यक्षबाधितधर्म्य नन्तरं हेतोरभिधानात्, तस्मादुक्ता नुमानेन जगत्कर्त्तु रीश्वरस्य साधन माशामोदकायितमिति, तदेतदनधिगत गम्भीरतर्क तत्त्वाना मभिधान मनवधाननिबन्धनम्, तथाहि यत्रोद्भावितोपाधावनुमाने यदि कश्चिदन्य उपाधिरापतेत् तदा पूर्वोद्भावित उपाधिरनुपाधि र्भवतीति तर्क

विदां नियमः, एवं 'क्षित्यादिकं कर्त्तृजन्य त्वाभाववत् शरीर-जन्यत्वा भावात्' इति वाद्युक्ते ऽनुमाने 'प्रागभावा प्रतियोगित्व' मुपाधिः यत्र कर्त्तृ जन्यत्वाभाववत्वं तत्र प्रागभावाप्रतियोगित्वं यथाकाशादौ जीवात्मनिवेति भवत्युपाधेः साध्य व्यापकता यत्र च पक्षकुक्षिनिक्षिप्त क्षित्यादौ शरीरा जन्यत्वं न तत्र प्रागभावाप्रतियोगित्व' मिति साधनाव्यापकता, इत्थञ्च सिद्धान्तानुमाने दुराग्रहदोषदूषितचेतःपिशाचावेशवशतयोत्स्वप्नायितेन वादिनोद्भावितः शरीरजन्यत्व मुपाधि रनुपाधि रेव शरीर विशेषणस्य व्यर्थत्वात् ।

अयम भिसन्धिः 'येन विशेषणेन विना यस्य व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वम्' इति नियमात् 'शरीर जन्यत्वात्' इत्यत्र शरीरं यदि व्याप्यतावच्छेदकं स्यात्, स्यात्तदोक्त-हेतौ कर्त्तृ जन्यत्वाभावनिष्ठाव्यापकतानिरूपिताव्याप्यता, यथा 'घ्राणेन्द्रियं पार्थिवं द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्' अत्र मध्यान्तविशेषणानुपादाने व्याप्तिर्गृहीतुं न शक्यते इत्यसिद्धि वारणाय तदुपादानं न निरर्थकं न तथा प्रकृते अन्तरेणापि शरीर विशेषणं व्याप्ति ग्रहसम्भवात् इति शरीरं न व्याप्यतावच्छेदकं तस्मान्न किञ्चिदेतत्, नच वाच्यं शरीर जन्य त्वाभाव एवाखण्डतया हेतु रस्त्विति, शरीर जन्यत्व प्रयुक्त सकर्त्तृकत्वानुपलब्धेः क्षित्यादिषु तदभावप्रयुक्तसकर्त्तृकत्वाभावस्या प्यनुपलब्धिः प्रतियोगिज्ञान विषयत्वादभावस्येति न साध्यव्याप्यता हेतौ अपितु जन्यत्वप्रयुक्तमेव सकर्तृक त्वमिति स्वपादपादप एव कुठारप्रपातः अनभ्युपग-

च्छतस्तु स्वानुमानप्रयोगसिद्धिरेव व्याप्तेरग्रहादिति वृद्धि मिच्छतो मूल हानिन्यायनिपातः एवञ्चाजन्य त्वस्यै वोपाधौ न साध्य व्यापकता क्षित्यादिषु भवतापि कार्यत्वस्वीकारात् ।

अथवा ' यन्निरूपिता यन्निष्ठा व्याप्ति र्येनविशेषणेन विना न गृह्यते तत्र विशिष्टमेव व्याप्यतावच्छेदक मेव, व्याप्यताव च्छेदकम् इति नियमात् अकर्त्तृकत्वनिरूपिता या शरीरजन्यत्त्वाभाव निष्ठा व्याप्तिः तत्र शरीरं विनैव प्रतियोगितया जन्यत्व मवच्छेदकं क्लृप्तमतो नतरां शरीरजन्यत्वमवच्छेदकं गौरवपराहतत्वेन शरीरजन्यत्वस्य अप्रतियोगितया च जन्यत्वस्यानवच्छेदकत्वात् इत्थं व्याप्यताव च्छेदकत्त्वाभावाच्छरीरजन्यत्व साधकेन सत्प्रतिपक्षतापि वादिदुभर्टस्य जागृयादिति तर्क विमलमतयो विद्वांस एवेह साक्षिणः ।

यदि च नितान्तोच्छृंङ्खलतया साध्यसाधनभावं स्वमनीषयैव परिकल्प्यते तदा वद क्षित्यादिकमदृष्टाजन्यं शरीरिकर्त्र जन्य त्वात् , इत्यनुमानेन तेष्वदृष्टाजन्यत्वमपि साध्येतेत्यनुमानाभासस्यप्रसङ्गोऽनिवार्यः स्यात् , अथादृष्टरूपविशेषणसिद्धिभया दुदास्यतेतदा प्रकृतेःकः प्रद्वेषः तत्रापि समानन्यायेन असिद्धिवारकविशे षणस्य ब्याप्यतानवच्छेदकत्त्वात् ' यदि साध्यसाधनप्रतिबन्धोपयोगितया अवच्छेद्यावच्छेदेन दृष्टान्तगतं धर्मं दार्ष्टान्तिकेऽपिबलान्नियोजयसि तदा तर्कमर्मानभिज्ञएवासी त्येवं ब्रूमहे कथमन्यथा प्रसिद्धानुमाने धूमत्वस्यैव व्याप्यतावच्छेदकता नतु नीलपिङ्गलादिधर्मावच्छिन्नस्येतिस्वय मेवाकलयतु भवान् ।

( शेषमग्रे )

## अत्र तत्र सर्वत्र

वङ्गदेशभूषणं वैज्ञानिक शिरोमणिं श्री जगदीशचन्द्रवसुं को नाम भारतीयो न वेद । तेन भौतिकशास्त्रे नवीनानि तत्वान्याविष्कृत्य चमत्कारेण परिपूरितम्पंडितमण्डलम् । न केवलं भारतीयैरपि तु आंग्लैरन्यैरपि च विद्वद्भिस्तस्यवै दुष्यन्तारस्वरेण गीयते । स किल आङ्ल वैज्ञानिक महासभया आक्सफोर्ड विश्वविद्यालयेन च वैज्ञानिक विषयानधिकृत्य व्याख्यानवितरणाय सम्प्रत्येव निमन्त्रितः पूर्वमप्येकदा इङ्गलैण्डे ऽनेनैव प्रकारेण निमन्त्रितो ऽसौविद्वन्मूर्धन्यः स्वविद्यायशश्चन्द्रिकाम्प्रसारयामास । आशास्महे, साम्प्रतमपि इंगलैण्डस्य वैज्ञानिक मण्डली वसुमहोदयस्य सारगर्भेण भाषणेन तथा समाकृष्टहृदया भविष्यति, यथा पुराऽभूत् ।

यद्यपि वेद विषये समन्वेषणकारिणां संख्या प्रतिदिनं वर्धमाना दृश्यते, तथापि तेषां विद्यायां शक्तौ च नोपचयो ऽवलोक्यते वाराणस्यां विद्यावारिधिः समय मिहिरेण ह्रास ञ्नीयते, नडियादिप्रसिद्ध सरस्वतीमठेषु संस्कृतप्रदीपस्य तैलं वर्तिका च प्रतिक्षणं क्षीयमाणा वीक्ष्यते, किन्तु तदद्य तिष्ठतु । भारत वैभवभूतेषु वेदादिषु किम्प्रतिपादितं, कस्तेषां समयः, कस्तदुक्तो धर्म्म इति विषये ये गवेषणरीत्या विचारं कुर्वन्ति तेषां संख्या वर्धते, गुणस्तु नोपचीयते । प्रत्युत तत्रापचय एवावलोक्यते । क्व सन्ति वेबरमेक्समूलरादिसदृशाः भारतस्नेहिनः पाश्चात्याः । भाण्डारकरतिलकादयो भारतीयाः खलु कालेन निर्वापिता कार्य्यक्षेत्राद्वाबहिष्कृता । न सन्ति सम्प्रति मार्मिका वेदविद्याचणा गवेषणकर्तारः । नितान्तमेव दुःखाकरमेत दौर्भाग्यसूचकञ्चा स्मद्देशस्य ।

कोनामहिन्दु शब्दार्थः? किञ्चास्य सम्प्रति प्रवृत्तिनिमित्तम् ? विद्वद्भिः समाजशास्त्र विचक्षणैर्बहुत्र विचिकित्सितं, किमपि सन्तोषदमुत्तरन्तु नाधिगतम् । यो वेद प्रामाण्यमधिगच्छति स हिन्दुरिति केचित्, यःशिखासूत्र धारी सहिन्दुरित्यन्ये, वर्णव्यवस्था परिधेरन्तर्वर्ती हिन्दुरित्यपरे । परमेषु सर्वेष्वपिलक्षणेषु क्वचिदव्याप्तिः क्वचिदतिव्याप्तिः, क्वचिच्चोभयमप्युपलभ्यते । कस्तर्हि हिन्दुः ? अस्मन्मते यः कोऽपि भारतं वर्ष मात्मीयत्वेन स्वीकुर्यात्स एव हिन्दु शब्देनाभिधेयः, यदि स स्वयमेव तत्राशङ्कनन्नकुर्यात् । येतुपुनः वेदानुयायिनः शिखा सूत्र धारिणश्च ते किलार्य पदवाच्या स्तेनैव शब्देनाभिधेयाः ।

## *उषाया नियमाः*

१ "उषेति" नाम्ना गुरुकुल विश्व विद्यालयात्पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्यानवनवाः लेखाःप्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते। किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोऽप्यधिकोऽयं विशेषः यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम र्थाववोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति।
अस्या वार्षिकं मूल्यम् तावत् सार्द्धरुप्यकम् १।।) षाण्मासिकं चतुर्दशाणकाः।।।=) त्रैमासिकं च मूल्यमष्टावाणकाः।।) एकस्याः प्रते र्मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [नमूना अंक] वी. पी. द्वारा न प्रेषयिष्यते आदर्शसंख्यां मभीप्सुभिः पत्रेणसह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [टिकट] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३. ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथाच प्रेषितपत्रेषु ग्राहकसंख्याऽवश्यमेव लेखनीया।

४. प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्य्यये यद्यस्माभिः मासद्वयं पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५. लेख विषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयक श्च प्रबन्धकर्त्रैस्सुभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६. विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्यः अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते। प्रबन्धकर्त्ता, उषा

डाकघर शामपुर

Registered Number A. 639.



* ओ३म् *



# उषा

संस्कृतमासिकापत्रिका

उषा अजीग भवनानि विश्वा । ऋग्वेदे ।

संवत्सरः १—फाल्गुन १९७० विक्रमी—अङ्कः ३
दयानन्दाब्दः ३१

गुरुकुल विश्वविद्यालय काङ्गडीतः
प्रचरन्ती

काङ्गड़ी गुरुकुल-यन्त्रालयेश्री नन्दलाल-प्रबन्धेन मुद्रितम्

॥ ओ३म् ॥

विषय सूची | पृष्ठ

ओ३म्

# उषा



| प्रथमे वर्ष | ... ... फाल्गुने मासः ... ... | तृतीयो मासः |
|---|---|---|



## प्रावादुक विभ्रमः ॥

( पूर्वतोऽनुवृत्तः )

लेखकः—श्री गोविन्द शास्त्री ॥

नाप्यनुमानिकः, तथाहि तमसस्ते जो ऽभावत्वव्यवस्थापने कस्तावदनुमानैकरसिकेन तत्र भवता हेतुरुपदर्श्यते ? अथ भाववैलक्षण्येन लक्ष्यमाणत्वमेव हेतु रिति चेद्धन्त स्वरूपासिद्धोयम्, नहि भाववैलक्षण्येन लक्ष्य माणत्वं तमसि वर्तते । स्तम्भोयं कुम्भोयमितिवदन्धकारोयं, तमो निकरोयमिति विधिमुखेनैव प्रत्ययाः प्रादुर्भवन्ति, अभाव स्वरूपत्वेतु निषेधमुखेनैव प्रत्ययाः प्रादुःष्युः । कुम्भोनास्ति स्तम्भोनास्तीति यथा ।

ननु नाशप्रध्वंसादिप्रत्यया अभावार्थकास्सन्तोऽपि विधिमुखेनैव प्रवर्तमाना दृश्यन्त इतिचेन्मैवं नाशादिशब्दानामेव भावप्रतिषेधाभिधायकत्वात्, अतएव घटस्य नाशइति सोपपदानामेव

प्रयोगो न निरुपपदानाम्, । यदि तु तमः प्रभृतिशब्दा अपि तत्समानार्थकास्स्युस्तदा घटस्याभाव इतिवदालोकस्य तमइत्यपिप्रयुज्येत । नहि कश्चिदेवमनुन्मत्तः प्रयुङ्क्ते । अथाऽऽलोकाभावेतमः शब्दः सङ्केतित इत्युदीर्यते हन्त साहसमायुष्मतां, नहि भवदिच्छामात्रेण यः कोपि शब्दः कुत्रचित्संकेतयितुं शक्यते पारिभाषिकत्वापत्तेः । अथासत्यालोके तमसः प्रतिभासनात्तेजोऽभावस्तमइत्युच्यते तथा चायमेवहेतुस्तमसोऽभावत्व इति चेद्हो धिषणाकौशलं वैशेषिकविदुषां, किमसति व्यवधाने घटः प्रतीयत इति कृत्वा घटोऽपि व्यवधानाभावस्वरूपः ? आलोकविरोधित्वं हेतूक्रियत इति चेत्तदप्यसाधीयः, नायमस्ति नियमो यो यस्यविरोधी स तस्याभावस्वरूप इति वारिवैश्वानरयोः परस्पराभावतापत्तेः । अथ सहानवस्थान रूपो विरोधः स्वीक्रियते न तु वध्यघातकरूपः,स च विरोधो भावाभावयोरेवेत्यभावत्वं तमस इति चेदनुभूतेः-प्रतीपं वदन्तो नूनमेव श्लाघनीयप्रज्ञास्तत्रभवन्तः । तेजस्तिमिरयोर्वध्यघातकभावस्य सहस्रधा साक्षात्क्रियमाणत्वात्, गाढान्धकारपरिपूरिते हि पथि प्रदीप्तेन प्रदीपप्रभानिकरेण निगृह्यते हि तमःपुञ्जः कुञ्जर इव केसरिकिशोरेण ।

अथ तावत्तमसो, भावत्वसाधकप्रबलप्रमाणाभाव इति चेत्तदप्यविचाररमणीयं, तत्साधकानुमानप्रमाणस्य जागरूकत्वात् तथाहि तमः, भावरूपं घनघनतरघनतम लहरीप्रमुखैः शब्दै र्व्यपदिश्यमानत्वात् आलोकवत्, नहितावदभावोघन इति वा घनतर इति वा व्यपदिश्यते केनापि, तमस्तु व्यपदिश्यते घनंतमः घनतरं तमः तमोलहरीत्यादि, औपचारिकोऽयं व्यपदेश

इति चेन्मैवं अभावरूपताप्रसिद्धिं विना घनतरादिव्यपदेशस्य भावरूपमुख्यार्थाभावात्तस्यौपचारिकत्वायोगात् । यत्तु कन्दली कारेण,"तमः परमाणवः, स्पर्शवन्तस्तद्रहिता वा न तावत्स्पर्शवन्तः, स्पर्शवद्द्रव्यस्य द्रव्यारम्भकत्व नियमात्तत्कार्यस्य क्वचिदप्यनुपलम्भादित्यादिविकल्पितं तन्नवयं श्रद्दध्महे, यतः स्पर्शवन्त एव तामसाः परमाणवः कथ्यन्ते, यदुक्तंस्पर्शवतस्तत्कार्यस्य क्वचिदप्यनुपलम्भादिति तदप्यसत् तमोद्रव्यस्य शीत स्पर्शवत्वाभ्युपगमात् अस्ति शीतस्पर्श इत्यत्र किंप्रमाणमिति चेत् , नास्ति शीतस्पर्श इत्यत्रापि किं प्रमाणमित्युच्यतां नोपलभ्यते शीतस्पर्श इति चेद्यत्नः क्रियतामुपलब्धौ, नात्रवयमपराध्यामः अस्माभिस्तूपलभ्यतएव , दिवसे दिवसेश्वरस्य किरणैरुत्तप्त वपुषः पथिकाः प्रायेण प्रगाढतमसः सम्पर्कात्प्रमोदन्ते नहि तापाभाव प्रयुक्त एषः प्रमोदस्तथा सति घटोऽत्र नास्ती तिवत्तापःसम्प्रति नास्तीति प्रतिषेधमुखएव प्रत्ययः प्रादुर्भवेत्, नतु शीतलीभूतं मे शरीरमिति विधिमुखः । नकेवलं तमसि वयं प्रत्यक्षतएव स्पर्शमुपलभामहे 'अपित्वनुमान तोऽपि, तमःस्पर्शवत् , रूपवत्त्वात् पृथिवीवत् न च हेत्वसिद्धिः कृष्णोऽयमन्धकार इत्यबाधित प्रतीतेः । रूपवत्ता प्रतीतेर्भ्रान्तत्वे उत्तरकाले बाधप्रतिसन्धान प्रसङ्गात् , नहितावदुत्तरकालिकबाधप्रतिपत्तिमन्तरा पूर्वज्ञानस्य भ्रान्तित्वं व्यवस्थापयितुं शक्यते। ननु तमसस्तावद्रूपत्वे तत्प्रत्यक्षतायाऽऽलोकापेक्षास्यादिति चेदौलूक्यानामयमनुयोगः कथं नाम शृणवतामुपहास विधानाय न भवेत् ? किमयमवनिपतेराज्ञा ? वैदिकोवा विधिः ? यत्र यत्र द्रव्यचाक्षुष प्रत्यक्षं तत्र तत्राऽऽलोका पेक्षेति अन्तरेणाप्यालोकमुलूकादीनामिवालोकनसंभवात्

आलोकस्यैव कथं प्रत्यक्षमृतेचाऽऽलोकात् । प्रत्यक्षयन्ति हि जनाः प्रदीपेन्दुकनकादीन् विनैवालोकम्, तथा च सिद्धंतमसि रूपवत्त्वंरूपवत्वात्स्पर्शवत्वं च 'यत्पूर्व मुक्तं रूपवत्वे स्पर्शवत्त्वे च तमसि सञ्चरतः पुंसः प्रतिघातः स्यादिति तत्र वयमपि पृच्छामः, आलोके सञ्चरतः पुरुषस्य कुतोन प्रतिघातो भवति ततश्च प्रस्तुतविषयेयदेव भवद् गृहे गीयते तदेव वयमपि मिलित्वासमस्वरेण गायामः

"द्रव्य गुणधर्म भेदाच्चोपलब्धिनियमः" (न्या–सू–३५–अ. ३.)
"दृष्टानुमितानां नियोग प्रतिषेधानुपपत्तिः" (न्या–सू–५०-अ३.)
सिद्धमित्थं तमो द्रव्यमिति—

"तमः खलु चलं नीलं परापरविभागवत्
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्योभेत्तुमर्ह ति" ॥

इति तमो विलक्षणमेव किमपि द्रव्यमिति मीमांसकाः। "तमो द्रव्यं नैल्याद्घटवदिति भास्करगोत्रीयाः । "रूपिद्रव्याणि,पृथिवी पाथः पावक पवनान्धकारच्छायादीनीत्यार्हताः। प्रस्तुत विषये प्रत्यवतिष्ठमानानामन्येषामपि विप्रतिपत्तीः, पाठकानां पुरस्तात्परस्तात् सविस्तरं प्रस्तोष्याम इति कृतमेतावतैव ।

---

# हे मातृभूमे तव कापि शोभा ।

प्रातः प्रभा पिङ्गलिते दिगन्ते
श्यामायिताऽनोकहवद्वनान्ते ।
मध्येहरिच्छस्यविभूषितान्ते
हे मातृ भूमे तव कापि शोभा ॥ १ ॥

उत्तुङ्ग हेमाद्रि परम्परासु
प्रभाप्रतिक्षेप विलासिनीषु ।
नवाम्बुदाऽऽसिक्त शिखावलीषु
हे मातृ भूमे तव कापि शोभा ॥ २ ॥

नानावनेषु मृगरञ्जितेषु
सरोवराऽम्भोरुहगन्धवत्सु ।
नितान्त रम्येषु निकुञ्जवत्सु
हे मातृ भूमे तव कापि शोभा ॥ ३ ॥

भागीरथी सोदरिकासुचासु
सरित्सु शीताम्बुवतीष्वथाऽपि ।
प्ररूढ़ शाखि प्रचयोत्तटासु
हे मातृ भूमे तव कापि शोभा ॥ ४ ॥

अम्भोरुहैः सज्जित कुट्टिमेषु
नीलाम्बु संतान वितान वत्सु ।
आमल्लिकास्त क्रम लोलितेषु

सरः सुते कापि विशेष शोभा ॥ ५ ॥
तपः प्रभाव प्रशमान्वितेषु
शरारु वृन्दैरपि निर्भयेषु ।
ऋष्या श्रमी भूत नदी तटेषु
हे मातृ भूमे तव कापि शोभा ॥ ६ ॥
अनेक विद्या लव लोलुपेषु
सत्कर्म विध्वस्त मलीमसेषु ।
व्रतिष्वनेकेषु तपोधनेषु
हे मातृ भूमे तव कापि शोभा ॥ ७ ॥
प्रजासु श्रद्धा स्वभया र्दितासु
सम्यक्प्रतीषु प्रचुराऽन्धसासु ।
अनेक शिल्पोन्नति साधनासु
हे मातृ भूमे तव कापि शोभा ? ॥ ८ ॥

---

## सुभाषितानि

भवितव्यमपाकर्त्तुं विधात्राऽपि न पार्यते
ब्रह्माण्डघटनिर्माणे कुलालः स्वयमेव सः ॥ १ ॥
किमद्भुतं कवेर्वाणी धत्ते वीर्यं सविस्मयम् ।
यस्याः संस्पर्श मात्रेण नादृतं पुनरादृतम् ॥ २ ॥
सर्वरम्यगुणोपेतो देवराडपि दुर्लभः
हरोऽपि कलयोपेतो धत्ते मुण्डस्रजं गले ॥ ३ ॥

# भवभूतिः ।

को नु सहृदयः साहित्य पारावार परम्परोत्तुङ्गतरङ्गभङ्गकौतुकी न जानाति नाटकभूतेर्भवभूते र्नामधेयम् । प्रायः सर्वेषामेनाटक प्रणयिनां नयनगोचरायन्ते तस्य नाटकानि । प्रायोऽर्वाञ्चः प्राञ्च श्च स्वदेशिका वैदे शिकाश्च समोलोचकाः सर्व एवास्य नाटकत्रितयस्या विधाय समालोचनां न शमयन्ति स्वलेखनीकण्डूम् ॥ लिखितेष्वपि नैकेषु प्रबन्धेषु कश्चिदेव सारविक्तमोऽस्य भवभूतेः श्रीकण्ठनाम्नः कविवृषभस्य वैशे षिकं तत्त्वंवेद अतएव भूयःसमालोचने भूरिभूरि ज्ञानलिप्सयानोऽपिमानसं प्रवर्ततएव ।

अयं संविधानकमयीसम्पत्तिसनाथितो वश्यवाक् कस्मिन् काले प्रादुरास काञ्च भारतभूमिस्थलीमात्मनो जन्मना सनाथयायासेति विषये न वयं किञ्चिदपिनवीनमुपलभामहे । तदेवा ऽस्माभिरपिपुरः स्थाप्यते यद्धि अस्येवनाटकचक्रेंऽशतः संलभ्यते यथाहि हारिप्रबन्धबन्धुरे माधवे प्रस्तवानाया मेव "अस्तिदक्षिणापथे पद्मपुरंनाम नगर तत्र काश्यपाः पञ्चाग्नयः सोमपीथिनो.........ब्रह्मवादिनः प्रतिवसन्ति तदमुष्यायणस्य तत्रभवतो भट्ट गोपालस्य पौत्रः नीलकण्ठस्य पुत्रः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नामेति अपरत्र च नाटकयो रुत्तरमहावीर चरितयो र्जतुकर्णी पुत्रः" इतिविशिष्टमुपलभ्यते । एतावतैव भवभूतेः स्वकं सर्वमपि स्फुटंभवति, वासस्थानं पितुर्नाममातुर्नाम उपाधिः पाण्डित्य शक्तिश्च ।

  

एतावति साधारणतः परिज्ञायमाने सत्यपि वयं विशेषमवधार यितुकामाः इदमालोचयामो यदयं कां देवतामात्मनः प्रातस्मरणी यास्पदं मन्यते अर्थात् किमसौ शैवो वैष्णवः शाक्तः कापालिकश्चा र्वाको वाऽस्तीति । अस्यनिर्णयः साधारण दृष्ट्याद्विधा कर्त्तुं श-क्यते नान्दीतः आमुखतश्च नान्दीं विहायामुखं पूर्वं हस्तयामः । अयमा त्मनःपितामहान् श्रोत्रियान्सोमपीथिनो ब्रह्मवादिनश्च स्मरति नैवतावतापि जाति निर्णयेनदेवतापरत्वम् निर्णेतुं शक्यते सत्य पि पितर्येक देवताभक्तिमति पुत्रस्या न्येदवताऽऽराधकत्वो पलब्धेः । इतिआमुख वर्णितस्यवंश वृतस्या स्थिरत्वाद्गौणत्वाच्चैक तोविहायेदं वय मन्यस्यां दिशि परावर्तामहे ।

इयमेवान्या दिग् नान्दी नाम । आमुखेषु वर्णितानां भूमि कानां मनुशीलनतो ज्ञायत एव विचित्र प्रणयन क्रमः । पूर्वं महा वीरचरितम्, ततउत्तरम्, ततश्चमालतीमाधवम् एवं हिसंघटनक्रमः क्रमशः समुपचीयमानभावविन्यासादभिलक्ष्यते ।

तत्र प्रथमस्य संविधानस्य नान्दी

अथस्वस्थायदेवाय नित्याय हतपाप्मने
त्यक्त क्रमविभागाय चैतन्य ज्योतिषे नमः

अत्रहि नाटकीयस्य वस्तुनो वैचक्षण्ये नोपक्षेपस्त्वस्त्येव, परंनतथा पि विशेषदेवताभक्तिः सूच्यते अपितुसामान्यतोऽध्यात्म गतिकता तु लालक्ष्यते ।

द्वितीयस्य संविधानकस्य नान्दी

इदंकविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे
वन्देमहि चतांवाणीममृतामात्मनःकलाम् ।

अत्रापि पूर्वर्षिभ्योवल्मीकजन्मादिभ्यो भारत्यैचात्मनः कलायैचनमः शास्यते नात्रापि पौराणिकदेवतास्तवः प्रत्यक्षः। एतयो र्द्वयोसंविधानकयो र्विरचने कः कवेर्विशेषोऽभिप्राय इतिनास्माभिः किमप्युपलभ्यते विहाय कथामात्रपरिचमात्मनश्च नव्य भारतीविलासचातुर्यस्य परिचयश्च । परंतृतीयं नाटकं मालती माधवं सर्वथा रीत्या नीत्या आकृत्या च भिद्यते । कतिपयै र्मुहर्मुह रागतै ररण्यगिरि वर्णनमयै पद्यैरामुखेषुचात्मनः परिचायकवर्णपदैश्चैव तस्यापिसमकर्तृत्वं वयं द्रढीकुर्मः ।

अस्याश्चनान्दी पद्यचतुष्टयात्मिका दीर्घवृत्तालं ङ्कृताचास्ति प्रथमं पद्यं भूतेशस्य भुजङ्गवल्लिवलयसन्नद्धजूटाः जटाः पान्ति । द्वितीये नासाग्ररन्ध्रं फणिपतौ बिशति सति चीत्कृरवत्यः वैनायक्यः वदनविधुतयः पान्ति । तृतीयेच चूडास्रवन्त्यो गङ्गायाऊर्मयः पान्ति । चतुर्थे च मदन स्रोषणं लोचनं पाति । एवमेवचयत्र पुर्वो क्तयोः संविधानकयोः सूत्रधारस्या दिमौ पद्यौ कविपाण्डित्य प्रशंसकौ नतथाऽस्याऽपि । परमस्य तु सूर्योपासनाऽपिलक्ष्यते अर्थात् पूर्वव न्नात्रपौराणिकदेवताभिर्मोक्षः;अस्य को हेतुरिति विशेषत आलोच्यं विदुषाम् ।

सहैव च कथाभागादानम पिस्वकल्पितमप्रसिद्धमिव-लक्ष्यते । कदाचि ज्जनानां मनोऽभिरामे रामेऽतिशयांभक्ति माकलय्य पूर्वोक्तं द्वयं प्रणिनाय ततश्च तत्कालीन विपश्चितां कूटस-मालोचनयाऽथवा शैलूषैर्यथा भिलषितं नोपादीयमानतया खि-न्नभरमन्थरेण मानसेनैवं गिरति—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि ? तान्प्रतिनैषयत्नः
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालोह्य यं निरवधिर्विपुला च पृथ्वी

तदनु चात्मनः पाण्डित्यं वैदग्ध्यं च कतिपय दर्शनापदेशतः गुरुनामापदेशतश्चाल्पेनोपक्रमेण वर्णयति

एवं हि भवभूतेः कृति विस्तारः एवं हि भवभूतेः परिवर्तन चतुरिमा । तथाऽपि तदीयवर्णैरेव तं वयमीदृशं मन्यामहे यत्स-निम्नोक्त पद्यानुसारी अभूत्—

अन्तः शक्ताः वहिः शैवाः सभामध्ये च वैष्णवाः
नानारूपधराः कौला विचरन्ति महीतले ।

कथंह्येवम् । तदेवम् । यत्स आत्मनो नाटकानि प्रचारयितुं सर्वत्र कालप्रियानाथस्य यात्रायाम्प्रस्थितानार्यान विज्ञापयति । अस्यायम-भिप्रायो यदस्य सर्वाभिमता हृदयंगमा देवता । कालप्रिया हि शक्तिरेवं

हितान्त्रिकाः। इत्येवं तस्य शाक्तत्वे न संशीतिः। अस्य आत्मनो नाम श्रीकण्ठेति एतावता भगवतः शौरेरपि भक्तिमत्ता ज्ञायते। एवं वैष्णवत्वमपि निःसंशयम्। भवभूति रित्येतावता बहिः शैवत्वं लक्ष्यते। यतः सर्वः साधारणो जनोऽनेनैव नाम्ना व्यवहरति, विपश्चितां समाजे श्रीकण्ठपदलाञ्छनत्वं व्यज्यतेस्म, विज्ञापनवेलायां कालप्रिया यात्रिणो रोचन्ते। उत्तरराम चरितटीकाकृद्वीर राघवोऽपि

शैवा वयंन खलु तत्र विचारणीयम्
पञ्चाक्षरी जपपरा नितरां तथापि
चेतो मदीयमतसीकुसुमावभासं
स्मेराननं स्मरति गोपवधूकिशोरम्।

एतेनपद्येन पूर्वोक्तमेवापरवर्णविन्यासेन लक्षयति मालतीमाधवस्य नान्दीपद्येष्वलौकिकं हास्या स्पदं देवताविषयकं स्तवनमुपलभ्यते येन नापि सोऽन्तर्दृष्ट्याशैवोऽपि। वस्तुतः शाक्त एव। कदाचिदतएव तस्य पूर्वोक्तं नाटकद्वयं तान्त्रिकान् विरुणद्भिः पौराणिकै र्नादृतम् अन्यदस्यैवकवेः विषयेऽन्यदा कदाचिद्वक्ष्यामः।

कुशाग्रः।

# "बुद्धधर्मात् ख्रिष्टधर्मस्य प्रभवः"

( २ )

| बुद्धः । | ईसा । |
|---|---|
| (१) | |
| बुद्धः कुमार्याः पुत्र आसीत्। तन्मातरि गर्भो मनुष्यसंयोगं विनैव स्थितिं प्रतिपेदे। अतएव परमात्मनो बुद्धोऽवतार आसीदिति तदनु गामिनो मन्यन्ते, मातुः गर्भे यदा भगवान् बुद्ध आसीत्तदा तस्या गर्भः स्फटिक इव निर्मलत्व मध्यगमत् तस्मिन्स विराजमानः पुष्पवन्मनोहरो जनमनांसि दूरत एव हरतिस्म ! | ईसा कुमार्याः पुत्र आसीत्। तन्मातरि गर्भो मनुष्य संयोगं विनैवस्थितिं प्रतिपेदे। अतएव परमात्मन, ईसा अवतार आसीदिति तदनु गामिनो मन्यन्ते, मातु गर्भे यदा भगवान् ईसा आसीत्तदा तस्या गर्भः स्फटिक इव निर्मलत्व मध्यगमत्। तस्मिन्स विराजमानः पुष्पवन्मनोहरो जनमनांसि दूरत एव हरतिस्म ! |
| बुन्सनस्य अंजलमसीह पृष्ठ. १०.२५. किंग्जम्रा स्टिक् पृष्ठ. १६४. | मथ्यू अध्याय. १ |

(२)

बुद्धस्य जन्मनो ऽनन्तरमेव दिगन्ते एकं नक्षत्र मुदगमत् । दिव्यद्युतिना द्युलोकः भूलोकश्च व्यद्योतिष्ट । देवाः गन्धर्वाश्च नभसीदं गातुमुपाक्रमन्त यथा—भगवान्देवस्तमः उत्सारयितुं नयनविकलेभ्यो नयने दातुं लोकांश्चानन्दयितुं भूलोक मवातरत्

बुन्सनस्य अञ्जल मसीह.
अध्याय. १४.

ईसापरः जन्मनो नन्तर मेव दिगन्ते एकं नक्षत्र मुदगमत् । दिव्यद्युतिना द्युलोकः भूलोकश्च व्यद्योतिष्ट । देवाः गन्धर्वाश्च नभसि इदं गातुमुपाक्रमन्त यथा —भगवान् देवः तमः उत्सारयितुं नयन विकलेभ्यो नयने दातुं लोकांश्चानन्दयितुं भूलोक मवातरत् ।

ल्यूक २अ. १३. १४.

(३) [क]

बुद्धं द्रष्टुं एको ऽसितनामा मुनि रागतः । आगत्य च स तस्य पितर मवोच यदस्यशिशोः सर्वाण्यपि लक्षणानि दिव्यानि सन्ति । मदीयं महद्भाग्य मभवद्येन मया मनुष्यरूपेऽवतीर्णस्य परमात्मनो दर्शनं लब्धम्ः—

ईसां द्रष्टु मेको ऽसितनामा मुनि रागतः । आगत्य च स तस्य पितर मवोच यदस्य शिशोः सर्वाण्यपि लक्षणानि दिव्यानि सन्ति । मदीयं महद्भाग्यमभवद्येन मया मनुष्यरूपेऽवतीर्णस्य परमात्मनो दर्शनं लब्धम् ।

[ख]

बुद्धायनृपाः मणिमुक्तादीनुपहारे मत्यपादयन् ।

ईसायैनृपः मणिमुक्तादी नुपहारे मत्य पादयत् ।

[ग]

बुद्धः बालकावस्थायामेवा त्मनो मातरमवोचद्यदह मेव जनेषु श्रेष्ठः पूजनीयश्चास्मि ! हार्डीज मैन्युअल बुद्धिज्म. पृष्ठ. १४५.

ईसा बालकावस्थाया मेवा त्मनो मातरमवोच द्यदहमेव जनेषु श्रेष्ठो महिष्ठश्चास्मि।
गास्पल आफ् इन्फैन्सी
अपाक् १०.३.

(४)

बुद्धो विम्बीसारराज्ञः कृष्ण इव कंसस्य भय कारण मासीत् । तं हि भूमौ बुद्धावतरणात्पूर्व मेव दैवी वाणी निरदिशद्य द्बुद्धस्त्वां मभिभविष्यति । वीलः हिष्ट्री आफ् बुद्ध पृ० १०३

ईसा हीरादस्य राज्ञः कृष्ण इव कंसस्य भय कारण मासीत् । तं हि भूमौ ईसा वतरणात्पूर्वं मेव दैवीवाणी निरदिशद् यदीसा त्वा मभि भविष्यति
मैथ्यू १

(५)

बुद्धः पाठशालायां पित्रा प्रेषितः सर्वस्यामेव विद्यायां गुरुमुपादिशत् । गुरुश्च तस्यापारं ज्ञान मवलो क्याऽऽत्मनः शिरस् तमभ्यनमत् ।
हार्डिज़ मैन्यूअ लआफ् बुद्धिज्म ।

ईसा पाठशालायां पित्रा प्रेषितः सर्वस्या मेव विद्यायां गुरुमुपादिशत् गुरुश्च तस्यापारं ज्ञान मवलोक्याऽऽत्मनः शिरस् तमभ्यनमत् ।
इन्फैन्सी अपास्टल २० अ
ल्यूक ४६. ४७.

(६)

बुद्ध एकस्मिन्दिरे गतः। सर्वा अपि तत्र वर्त्तिन्यः मूर्त्तयस्तं तत्रा गतं निरीक्ष्य ससम्भ्रमं-स्थानादु दचलन्। शिरो विनमय्य च तस्मै नम इति अ-अवोचन्।

हिस्ट्री आव् बुद्धिज्म
पृष्ठ ६७-६८

ईसा केषाञ्चित्केतुवाहिनां समीपे गतः। केतोः शिखरे मूर्त्तयः स्थापिता अभूवन्। सर्वा अपि मूर्त्तयस्तमु पागच्छन्तं निरीक्ष्य ससंभ्रमं स्थाना दुदचलन्। शिरोविनमम्य च तस्मै नमः इत्यवोचन्।

निकोडमस अपास्टल
अध्याय १-२०

(७)

तपसि स्थितं भगवन्तं बुद्धं नियम विध्नकारी मार उपस्थितः। अवदच्च "भगवन् विश्वसिहि मयि-मदुक्तं नानृतं भवति तपः परित्यज, आत्मानश्च अस्मा न्महिष्ठात्कष्टा द्वियोचय, पितुः साहाय्यं प्रति पादय-नून त्वं चक्रवर्ती भविष्यसि-परं भगवान्तपसि तथा विधमेव स्थितः अमृतरस मयातशद्वानिमा न्मुखाद्व्या किरत्। "दूर मपेहि, दूर मपेहि, नाहं चक्रवर्ती भवितु मुन्मना अस्मि

तपसि स्थितं भगवन्तमीसां नियम विध्नकारी देव उपस्थितः। अवदच्च "भगवन्-विश्वसिहि मयि-मदुक्तं नानृतं भवति-तपः परित्यज, आत्मानश्च अस्मात्कष्टात्प्रजोपदेशकर्मणः विमोचय-मां जगदीश्वरमिव मन्यस्व-नूनं त्वं चक्रवर्ती भविष्यसि-एषं भगवान्नात्मनः प्रजो पदेश कर्माणि तपसि च तथाविधमेव दृढं स्थितः। अमृत रस मयान् शद्वा निमान् व्याकिरत् "दूर मपेहि, दूरमपेहि, चाण्डाल! नाहं चक्रवर्त्ती भवितु मुन्मना अस्मि......"

भगवन्नियोगान्मारे दूरं गते देवाः गन्धर्वाश्च नभसि सानन्दं मनृत्यन् ! पुष्पाणि च भगवन्त मुपरि प्राक्षिपन् । सर्वा अपि दिशः जनाश्चप्रसादमगमन्निति ।

हिस्ट्री आव् बुद्धिज्म
अध्याय-१६

भगवन्नियोगा द्देवे दूरं गते देवाः गन्धर्वाश्च नभसि सानन्द मनृत्यन् । पुष्पाणि च भगवन्त मुपरि प्राक्षिपन् । सर्वा अपि दिशः जनाश्च प्रसादम गमन्निति ।

मैथ्यू अ ४-१-१८
,, अ ४-८-१९
ल्यूक अ ४——८

---

एवं स्थाली पुलाकन्यायेन उभयो र्महात्मनो जीवनवृ संवाद सप्तक मेवात्र मया उपन्यस्तम् । विस्तर भयात् तानि परि त्यज्यन्ते । अत्र शेषे च इसायाः शूलारोपणं आसान्नासीदि परीक्षितु मुपक्रमे । प्राक्काले परोपकारिणां चिन्हं शूलमासी दिति प्रकामं विशद मितिहासानुशीलिनाम् । तस्य करणं मासीदिति परिच्छेत्तु मप्रासङ्गिकत्वान्न पदं करोमि । इन्द्र वरु बुद्धादिनां महदुप कारिणां शूलारोपणं न केन चिदपि नः भ्रा तृषु श्रुतमिति मन्ये । परं साश्चर्यं तान्निशामयामि यथा त्रिविष्ट नैपाल प्रदेशे चामीषां शूलारोपिता मिव मूर्त्तिं निर्माय जना पूजयन्ति । तादृङ् निर्माणाय कारणं वक्तु मनु युज्यमाना प्रतिब्रुवन्ति, यद्यत स्तेते महात्मानः नः कृते आत्मानः जीव ग़ृत्यवेऽऽर्पयन्नतः तेषां शूलारोपिता मेव मूर्त्तिं वयं पूजयाम येन तेषा मुपकृतिर्न विस्मृतिं यायात् !

एव मेत्र ईसोत्पत्तेः पूर्व मपि रोमकाः शूलं भक्तिभावेना पश्यन्न पूजयंश्चेति तेषामितिहासेन निरतिशयं प्रत्यक्षम्। मिश्रदेशे मैक्सिको प्रदेशे स्कन्धनाभे च बहुकालात्पूर्वं जनाः इद माद्रियन्ते स्म इत्यपि विद्वद्भिरन्विष्टम्। परं ख्रिष्टीयैः कदाऽस्यार्चनीयत्वं परीगृहीतमिति न निकामं विशदन्नः। परमेवं सत्यपि वयमिदं जानीमः—यदीसोत्पत्तेः चतुश्शत वर्षानन्तर मेवेदं शूल पूजनं ख्रिष्टधर्म्मे प्रविष्टन्न पूर्वम्। तत्र जगतः सत्कार भूमिः प्रमाणन्नो मुनिः सिन्यूसियसफैलिक्सः ( ३०० ई० )। स हि एकस्मिन्स्थले रोमक मूर्ति पूजका न्नधिक्षिपति—आत्मन उत्कृष्टत्वञ्चेवं प्रकट यतिः—

> भवन्तः शूल पूजकाः—भवन्तः शूल मात्मनो देवताया
> अङ्गत्वेन मन्यन्ते—भवतां सर्वस्मिन्नेव वस्तुनि
> शूलचिन्ह मङ्कितु मावश्यकम्—वयन्तुन भवा-
> दृशाः—न वयं शूलं पूजयामः—नापि तस्य चिन्हं सर्व-
> स्मिन्वस्तनि आवश्यक मिति विमृशामः।
>
> आक्टैवियस अध्याय, २६.

अनेन नः न मनागपि विशयविषयोऽयंयत् ख्रिष्टीयैः शूलं मूर्ति पूजकैः गृहीतम्। ईसानाम कश्चिच्छूले यहुदिभि रारोपितोऽभवदिति जनश्रुतिं न प्रमाणी कुर्वन्ति विद्वान्सः—नापि वय

मपि प्रमाणयितु मुत्सहामहे । चेदिदभभविष्यदवश्यमेव यहूदीलेखकेषु कश्चिदिदं निरदेक्ष्यत् । परन्नेदं तथा जातम् । न कश्चिदपि तेषु इदं निरदिशत् । अनेन इदमेव सिद्धान्तयामः यदीसा नुगामिभिः आत्मन उपदेष्टारं वल वदुपकारिणां जनानां प्रदर्शयितु मिद मभिसंपादितमिति ।

प्राणनाथः

---

## मनोहर-भाषितानि

अहम्—हा-दैव ! भाग्य ! किमु तद्बलमस्त्य नूनं
यन्मामनिर्वृ तितया हरतेऽति दूरम् ।
भाग्यम्—आः पश्य ।
अहम्—विस्तृतविलोकन कार्य्यदक्षः
पश्याम्यहं यद हमेवहरेस्वयं माम् ॥

---

गर्दभः—(सरसींजलंपातुं गतस्ततो निवर्त्तमान उन्नदन्) कियन्नीलद्युति सलिलम् ।
सरंसी—(शनकैः सस्मयम्) प्रतिगर्दभं मत् सलिलं नीलनीलमाभाति परंतत्त्वविद स्तुशुभ्रमवदातं ब्रुवन्ति ।

---

पप्रच्छास्तंगतो भानुः "को मे स्थानं गृहीष्यति" ।
शान्ते जगति मृद्दीपो "देवाहं" शनकैर्जगौ ॥

---

# बलात्कारेण धर्मप्रचारः

परिवर्त्तिनि संसारे ऽस्मिन्नासंसृतेरद्यावधि कियन्ति मतानि प्रसृतानीति कदाचिन्न शक्यं केनापि तावदियत्तया परिसंख्यातुम् । भारत एव यत्र संवत्सराणां शतत्रये परः शतानि मतानि प्रसार मभजन् तत्रकैव कथा ऽपरिच्छिन्नस्य तावतो जगतः । यत्र पुनरयमुपाधिरपि स्फुरति यत् वर्षाणां कोटयो ऽपि कालकलातिक्रमं विभावयितुं न प्रभवन्ति तत्रतु मतानां परिसंख्यानप्रवृत्तिः केवलं साहसमात्रमेव । आस्तांतावत् । सत्यपि तावदित्थंविधे व्यतिकरे नास्माकं समीहितं मनागपि हीयते । मा नाम भूम वयं साकल्येन परिसंख्यातुमलं कतिचित्परिसंख्याने तु सर्वथाऽपि शक्नुमः । तद्यावतां परिसंख्यानेऽस्माकंशक्तिरस्ति तावद्भिरेवात्मनः समीहितं सम्पा दयितुं प्रवर्तामहे । अलंतावत्दूरतो गत्वा । महाभारतादनन्तरमेव-चेत्पश्यामः तत्र कथं प्रथमतः प्रवृत्तं वैदिकं धर्ममाक्षिप्य सहसैव बौद्धधर्म स्तमनुवर्तते । तमपि पुनः कालान्तरेण पौराणिकानां मतेनाऽऽक्षिप्तमुपलभामहे । सोपि हिन्दूधर्मः कथं प्रथमं तावत् यवनसाम्राज्यकाले बलवदाक्रम्यते,कथं चावशिष्टोपि साम्प्रतं शासकानां ख्रिस्तानमतेन प्रत्यहमभिभूयत इति नास्ति तिरोहितं विज्ञानाम् । तदुपन्यस्तेषु तावदेतेषु नानामतेषु मनागिव पर्यालोच्यमानेषु प्रत्येकस्याभिवृद्धौ भिन्न मेव भिन्नं कारण मुपलभामहे । यत्रैकतो बौद्धधर्मः केवलमात्मनि सुखाधायकतामात्रेण प्रसारमुपगत स्तत्रान्यतः मौहम्मदो धर्मः सर्वथापि निशितकरवालधाराभयस्य कृते प्रसृतः । किंच नानामतैः पराक्रान्तोऽपि हिन्दूधर्मः शनकैः सर्वानवजित्य यदि कथंचिदद्यापि जीवति तत्तस्य निमित्तं केवल मेतदेव तर्कयामः यदयं युक्तिं श्रद्धांचेत्युभयमप्याश्रयते । स्यादेतत् ।

नास्माक मत्र साधनान्तराण्याश्रित्य विशेषतः किंचित्प्रतिपाद-यितव्यं किंतर्हि केवलं वलात्कारेण धर्मप्रचारणं युक्तमयुक्तवेत्यस्ति विवेचनीयम्। यदि नाम साम्प्रतं; तत्कस्यहेतोः। अथापि चेदसाम्प्र-तं तत्किं निवन्धनं तदसामञ्जस्यम्। तदत्र प्रथमं तावदियं विचा-रणा जायते यत्किमभिसंधाय धर्मप्रचारे महान्प्रयत्नो ऽयमास्थी-यते। किंचातः। यद्युच्यते, परोपकारवुद्ध्या तावदेके साम्प्रदा-यिकाः सर्वानपि भिन्नधर्मानुयायिनः अपथे पदमर्पयतः नरकादिवो द्धरन्तः तान् प्रसह्य स्वधर्मे प्रवर्तयन्तीति युक्तमेव तेषां तत्र प्रवर्त्त नमिति तदसाम्प्रतम्; प्रयोजनाऽसिद्धेरन्याय्यत्वाच्च। नखल्वसि-धारावलेन तेषां तत्प्रयोजनं संपद्यते यदि ह ते कामयन्ते। धर्मो हि नाम अत्मनिष्ठोधर्मः। नासौ जातु यत्नशतेनापि वाह्यभयैः विपरिणमयितुं शक्यः। कथंचिदीषत्परिवर्तितोपि स्थेमानं नापाद-येत्। यावदेव वलात्कारिणां शासनं, ध्रुवंतावदेव तेषां धर्मोपि नि ष्प्रत्यूहं तत्रावतिष्ठते, यदैव पुन स्तेषां शासनमपगतं ततोनाति चिरादेव तेषामेधमानो धर्मो पि निवर्तते।

यवनानां भारतागमनात्प्राक् यावनस्य मतस्य ना-माप्यत्र न श्रूयतेस्म। अथ गच्छति कालेकथंचिद्विधातारि वामतां प्रतिपन्ने हन्त! तेषामाधिपत्य मस्मासु चिरमवस्थितम्। अत्रा-न्तरे सहैव राज्यप्रकर्षेण तेषां धर्मोप्यतिमात्रं समृद्धः। परं मन्ये कदाचन हिन्दुभिरेषा मचिरोपजायमानराज्यविनाशं प्रतीक्षमाणैरेव तावता कालेन स्थितं, यत्खलु तेषामाधिपत्यविनाश समनन्तरमेव धर्मस्यापि तेषां विनाशः सम्पन्नः। किमत्रनिमित्त-मितिपृष्टे तेषांवलात्कारमेव तत्र हेतुत्वेन संभावयामः, अन्यथा

कथमचिरादेव तेषां धर्मोऽनङ्क्षयत् । कोहिनामाऽनभिज्ञो यावनानामत्याचाराणाम् । कस्यनामअविदिता सा घटना यत्रावरङ्गजीवः प्रत्यहं त्रिसप्ततिमणपरिमितानि यज्ञोपवीतानि हिन्दूनां कण्ठप्रदेशादवतार्य्य कर्त्तं कर्त्तं मथ भस्मसात्कर्त्तुं प्रतिजानीते । कस्य वा प्रेक्षावतस्तिरोहितं यवनभूपतीनां मन्दिराणि भूमिसात्कृत्य तत्रैव मज्जितानां पुनरवस्थापनाध्यवसितम् । किं बहुना । को हि नाम हिन्दूजातिपुत्रः यः खलु अद्याप्यवरङ्गजीवहतकेन हिन्दुष्वारोप्यमाणं "जजिया" रूयं करं सामर्षं न स्मरति । हन्त ! महदेतैरत्याहितमभूदतः खलु तेषां विनाशोपि द्रागित्येव सम्पन्नः । किंच अन्याय्यत्वाच्चापि बलात्कारप्रयोगो नोपपन्नः । नायं खलु सतां समुदाचारः यदस्मदभ्युपगतेन परो विसंवदतीति तावतासौ हन्यतामिति । परश्चेदस्माभिर्न संवदति तत्तत्र नास्माभिरसौ राजदंडविभीषिकाभिर्भापयितव्यः प्रत्युत कथंचन प्रबलैः प्रमाणैः दृढ़तराभिश्च युक्तिभिस्तस्य विश्वासः परिवर्त्यः येनासौ दृढ़ं तत्र विश्वस्तः स्यान्नपुन स्तस्य प्रत्ययः कृष्णफलके कठिन्या लिखितान्यक्षराणीव सहसैवापनेतुं शक्यः स्यात् । तस्मादहं तु मन्ये चेदिह धर्मप्रचारं चिकीर्षुभिः कश्चनाप्याश्रणीयोपायः सोयमेव यद्यथासंभवं तैः प्रतिजनपदं बौद्धभिक्षुवदुपदेशकाः विनियोक्तव्याः येन ते सोपपत्तिकैर्वचोभि स्तान् परिवर्त्तेरन् । अथापि चेदुच्यते साम्राज्यदाढर्यार्थमप्यात्मनोधर्मः बलात्प्रचारणीयः यतः विपर्य्यये खलु प्रत्यक्षमेव धर्मभेदे साम्राज्यहानिः संभवतीति तथाभिदधतां प्रतिवदामः । सर्वथापि साम्राज्यस्थिरतामभिसंधाय बलात्करेण धर्मप्रचारो नोपपद्यते । प्रथमंतावत् साम्राज्यस्थिरता मेवाभिसंधाय धर्मप्रचारो न युज्यते,

तत्र परमार्थतः धर्मप्रयोजनस्यानवसितत्वात् । अथापि कथंचिदे-तदभ्युपच्छामः तथापि वलात्कारस्तु तत्र सुतरांनोपपद्यते । तदित्थं धर्मप्रचारे वलात्कारप्रयोगेण हानिरेवहानिः संभाव्यते नाणुमात्रेणापि लाभसंभवः । यथा चैतत्तथास्माभिरुपपादितमथ-स्तात् यत् कथं वलात्कारप्रयोगेण मौहम्मदानां धर्मप्रदीपः राज्यापगमात्समनन्तरमेव निर्वाणः । किंच नेदमपि तिरोहित मिमिहासाभिज्ञानां यत् हरिवर्षदेशे मध्यकाले कैथोलिकसम्प्रदाय-मनभ्युपगच्छन्तः कथंकारं ( इन्क्विज़ीशन ) इत्यभिधैः दारुणैः कष्टैः पीड़यन्तेस्म; मन्येचात एव तेषां धार्मिकं वैभवं सत्वरमेव लुप्तम् । आस्तांतावत् वलात्कार कथा । साम्प्रतं यदि हिन्दूधर्म-माकलयामस्तत्र किमुपलभ्यते । अहो वत महच्चित्रं यद्विधर्मैः मुहुर्मुहुः पराक्रान्तोऽपि हिन्दूधर्म्मः अद्यापि विश्रब्धं जीवति । कोत्रहेतुरिति चेत्, हिन्दूनांधार्मिकमनाचारमेव तत्र कारणं ब्रूमहे । किंच सर्वस्य जगतः एकतृतीयांशः अद्यापि चेद्बौद्धमतमनुवर्त्तमानो दृश्यते तदानीं बौद्धानां धैर्य्यमालम्ब्य प्रतिजनपदं सोत्साहं निष्काम-तया प्रचाराचरणमेव तत्र निमित्त मिति युक्तमुत्पश्यामः ।

विद्यासागरः

# वाराणसी संस्कृतञ्च

इतः कालाद्द्विशतवर्षा व्यतीताः पाश्चात्यानामियम्मतिरासी द्यदखिलेऽपि संस्कृतविद्याभाण्डागारे नास्ति पृष्ठमेकमपि यद्बुद्धिमता सत्यमिति मन्तुं शक्येत । तेहि वेदा न्वालभाषितमिति, उपनिषदो मत्तवाशितमितिच मत्वा तिरोऽकुर्वन् । 'गोरावाक्यम्प्रमाण' मिति मन्वानाः, इंग्लैण्डीयकाकरुते ऽपि शिरोधुन्वानाः वहवो भारतीया अपि तामेव सम्मति मन्वगच्छन् । परं किमपि कालदण्डप्रभावा, त्किमपि च भारत सुपुत्र प्रयत्नात्सा दशा परिवर्तमानेव दृश्यते । अस्ताचलचूडावलम्बी पातालदेशम्प्रकाशयितु म्प्रस्थितो ऽपि भगवान्भास्करः पुनर्निशावसाने पूर्वस्यान्दिशि निजमरुणिमानं विस्तारयत्येव । सम्प्रति देववाणिप्रणयिनां गणना नाणीयसी, अपितु प्रतिदिनंवृद्धिं गच्छन्त्येव प्रतीयते । न वयं वदामः सर्वथैवाविलयङ्गतास्ते जनाः, ये किल देवभाषामवमेनिरे । किन्नवाश्रुतङ्केनापि जगत्प्रसादकारिण्यपि प्रभातकाले श्रीमतो वायसस्य विरुतम् ? देशेकिलाद्य प्राचीन जीवनस्याकरभूतायै, भारतगौरवस्य प्राणरूपायै च संस्कृत भाषायै भक्तिः परिवर्धमाना केषान्न सहृदयानां हृदयानि रञ्जयति । एतादृशे समये, संस्कृतोदयाभिलाषिणः पुरुषस्य दृष्टि र्निसर्गत एव वाराणसीम्प्रति याति, यस्या हि किल

> प्रतिवीथि कथालापःप्रतिगेहं शिवालयः ।
> पाठशाला प्रतिद्वारं प्रतिजिव्हं सरस्वती ।

का ऽस्ति दशा साम्प्रतं वाराणस्याः ? किन्तस्या विद्यावैभव मुपचीयमान न्दृश्यते,अथवा ऽपचीयमानम् ? हन्त ! प्रश्नस्यास्योत्तर न्दातु मुद्यतानां नश्चक्षुपोरश्रुवारि प्रत्यासीदति । कम्पते हृदयं, शोकातुरश्चान्तरात्मा विषीदति यदा वयं प्रत्यहङ्क्षय ङ्गच्छन्तीं वाराणसीविद्यासम्पदमवलोकयामः । लोकान्तरंगाता

बालशास्त्रिविशुद्धानन्दरामशास्त्रिगङ्गाधरप्रभृतयः पंडितमंडली-ललामभूता विद्वांसः। द्वित्राणि पुरातनानि नामानि श्रूयन्ते, परन्न तत्र परिवृद्धिर्जायते। समुद्रो ऽपि यदि सूर्येण प्रत्यहं शोष्येत, न च नदीभिः परिपूर्येत, कियत्तस्य जीवितं स्यात्। ध्रुवं स स्वल्पेष्वेव वर्षेषु भयानकगर्तमूर्तिं धारयेत् । राजहंसविहीना सरसीव, पण्डितविहीना वाराणसी दशवर्षेषु भविष्यतीत्यत्र साम्प्रत न्न संशयः प्रतीयते । स्वभावतः प्रश्नोऽयमुदेति, कस्य हेतो रियमवनति र्विद्यापीठस्य ?

अस्माकं संस्कृतज्ञाः सखेदनिश्वासमिदमेवाभिधास्यन्ति 'अहो चपलङ्खलु चरितं कालहतकस्य। विलक्षणः किल विषयः समयचक्रस्य । तया एव चन्द्रचूडनगरी दीनामिमांदशां गच्छन्तीव प्रतीयते।' वयन्तु नैवमुक्त्वा निजमानसं सन्तोषमायया शमयितुं शक्नुमः। अस्मन्मते तु [ १ ] वाराणसीस्थानां विद्यावारिधीनां देवभाषाम्प्रति वैराग्यमेव तत्र मुख्यो हेतुः, प्रतीयते । गच्छन्तु भवन्तस्ताम्पुरी, मवलोकयन्तु च महामहोपाध्यायानाम्पुत्रपुत्रान्। कियन्तः किल तेषु संस्कृताध्ययने निरताः। त्रिचतुर्थांशस्तु कालिजसेवायां लग्न एवोपलप्स्यते । शनैः शनैः संस्कृतविद्यापारङ्गता विद्वांस एव संस्कृते ऽश्रद्धधाना दृश्यन्ते । न तेऽपि सम्प्रति 'एकः शब्दः सुष्ठुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीति' वचनस्य गरिमाणं मन्वते। यदा हृदय मेवा श्रद्धया ग्रस्तम्भवेत्, कथमङ्ग हस्तपादम्प्रचलेत् ? पण्डितानां न्तनया एव यदाऽऽङ्गलभाषापादोपजीविनो भवेयुः, कथन्नाम वराकी देवभाषालता सपुष्पा सप्रसवा च भवेत् ।

( असम्पूर्णो लेखः )

# अत्र तत्र सर्वत्र

## गुरुकुलोत्सवः

गुरुकुलोत्सवे समागतान्विद्यारसिकान्वयं सप्रणयं मभिनन्दामः। कोहि नाम सचेता गुरुकुलं वीच्य न प्रसीदेत् ? कस्य वा देशभक्तस्य मनसि गुरुकुलदर्शनेन आशादीपको न दीप्येत। धन्या हि वयं ये भवादृशाम्पुण्यदर्शनाना न्दर्शनेन पवित्रीक्रियामहे, सौभाग्यशालिनश्च भवन्तो, यैर्गुरुकुलविश्वविद्यालयसञ्चालने चातुर्यम्प्रदर्श्य जनताया धन्यवादः प्राप्यते। तदेवम्मिथोदर्शनेनोभयतः प्रशान्तपवित्र मिदमार्यमण्डल मनरवतिकल्याणम्भूयादित्याशास्महे

## परमार्थदर्शनम्

श्रीमता साहित्याचार्य श्री रामावतारशर्मणा परमार्थदर्शनाख्यन्नवीनन्दर्शनम्प्रकाश्य विस्मयम्पापिता पण्डितमण्डलीति मन्यामहे। परमार्थ सूत्राणि, तेषां व्याख्याकृते टीका, कारिकाश्च तस्या अपिस्फुटीकरणाय सहैव प्रकाशिता लेखकमहोदयस्य महान्तमुद्योगं वैदुष्यञ्च सूचयन्ति। एतस्मिन्दर्शने पाश्चात्यदर्शनस्य सिद्धान्ताः आर्षसिद्धान्तैः सह संमीश्रताः, क्वचित्क्वचित्तद्विरोधेऽप्युपन्यस्ताः। नवीनो ऽयमुद्योगो ध्रुवम्बहून् देववाणीप्रणयिनस्तोषयिष्यति, परांश्च खेदयिष्यतीति मन्यामहे। एतस्य दर्शनस्य विस्तृतालोचनन्तु समनन्तरम्प्रकाशयिष्यामः।

## क्षमाप्रार्थना

गतमासे सामाजिककार्यबाहुल्यादुपासम्पादकस्य स्थितिर्गुरुकुले नाभू,दतएव च द्वितीये तृतीये चाङ्के विशेषा समुन्नतिर्नासीत्, भूयांसिस्खलितानि च मुद्रणदोषा स्संजातानि आशास्महे उषाप्रणयिनः प्रथमग्रासेमक्षिकापात मप्यमुं क्षंस्यन्त इति प्रार्थयति

सम्पादकः

१ "उषेति"नाम्ना गुरुकुल विश्व विद्यालयात्पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते । अस्यां खलु वैदिकं साहित्य मुपजीव्यानवनवाः लेखाः प्रकाशयिष्यन्ते । आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते । किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते । अयं खल्वपरो महान्विशेषः सर्वतोप्याधिकोयं विशेषः यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति । लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम र्थाववोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति । अस्या वार्षिकं मूल्यम् तावत् सार्द्धरूप्यकम् १।।) षाण्मासिचतुर्दशाणकाः ।।।=) त्रैमासिकं च मूल्यमष्टावाणकाः ।।) एकस्याः प्रते मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते ।

२ आदश संख्या [नमूना अंक] वी. पी. द्वारा न प्रेषयिष्यते आदर्श संख्यां मभीप्सुभिः पत्रेणसह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [टिकट] प्रेषणीयानि । प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते ।

३. ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम् । तथाच प्रेषितपत्रेषु ग्राहकसंख्याऽवश्यमेव लेखनीया ।

४. प्रतिमास मुषा प्रकाशिता भविष्यति । यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः । विपर्य्यये यद्यस्माभिः मासद्वयं पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते ।

५. लेख विषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयक श्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यः

६. विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्यः अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते । प्रबन्धकर्त्ता, उषा

डाकघर श्यामपुर

# उषा

## संस्कृतमासिकपत्रिका

संवत्सरः १—चैत्र १९७० विक्रमी—अङ्कः ४



कांगड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता

॥ ओ३म् ॥

विषय सूचि ... पृष्ठम्

ओ३म्

# उषा

| प्रथमे वर्षे | ... ... चैत्र मासः ... ... | चतुर्थो मासः |
|---|---|---|

## वैदिक रत्नानि ।

### एक एवेश्वरः ।

इन्द्रम्मित्रं वरुणमग्नि माहु रथो दिव्यः स सुपर्णो गरुत्मन् ।
एकंसद्विप्रा बहुधावदन्त्यग्निं यमं मातरिश्वान माहुः ।

ऋ । १ १ १६ ४ । ४६

स एक एव देवो धर्माणामान न्त्यात् इन्द्र इति, मित्रमिति, वरुण इति अग्नि रिति सुपर्णइति, गरुत्मानिति, यम इति, मातरिश्वेति च विविधैर्नामभिः कथ्यते । तमे क मेव सन्तंविप्रा बहुभिर्नामभि र्वदन्ति ।

तदे वाग्नि स्तदादित्य स्त द्वायु स्तदु चन्द्रमाः ।
तदेव शुक्र न्तद्ब्रह्म ता आपः स प्रजापतिः ।

यजुः ।

तदेव ब्रह्म अग्नि रिति, आदित्यइति, वायुरिति, चन्द्रमा इति शुक्र मिति आपइति प्रजापतिरि त्यादिभि र्नामभि रुच्यते, तस्य धर्माणा मनेक त्वा द्विविध त्वा च ।

त्वमग्न इन्द्रो वृषभः सतामसि
त्वं विष्णुरुरुगायो नमस्यः ।
त्वम्ब्रह्मा रयिविद्ब्रह्मणस्पते
त्वं विधर्तः सचसे पुरन्ध्या । ऋ । २ । १ । ३

हे अग्ने । त्वं सतां सुखदाता इन्द्रः असि । त्वमेव बहुगीयमानोनमस्क्रियमाणः श्च विष्णुरसि । हे वेदाना न्धनानाः पते ! त्व मेव ऐश्वर्य शाली ब्रह्मा असि । हे जगता न्धारण कर्तः त्व न्धारण शीलया बुद्ध्या ज्ञायसे युज्यसे च । न ह्यल्पज्ञान त्वयि गतिरस्ति ।

त्वमग्ने राजा वरुणो धृत व्रत
स्त्वं मित्रो भवसि दस्म ईड्यः ।
त्वम र्यमा सत्पति र्यस्य सम्भुजं
त्वमंशो विदथे देव भाजयुः । ऋ । २ । १ । ४ ।

हे अग्ने ! जगदीश्वर ! त्वं व्रताना न्धारयिता सत्यस्य पालयिता न्यायकारी राजा वरुणः असि । त्वमेव पूज्यश्च पापनाशक श्च सन्मित्रो ऽसि । श्रेष्ठः पति रिति त्वमर्यमेतिनाम्नाख्यायसे । हेदेव त्वं अंशो ऽसि दीप्तिमानसि । पुनस्त्वं कीदृशोऽसि ? विदथे ज्ञानस्य प्राप्तये विज्ञोजनोयस्य सम्भुजं सहभोगं भाजयु र्भवसि । ज्ञानाय सुखाय च जनो यस्य योगमिच्छति यदानन्द राशे र्लेश मुपभोक्तु ञ्च वा ञ्छति ।

## चाणक्यः

वाचक वृन्द !

मां बहुविधं वीक्षन्ते जनाः । केचिन्मां छलिनमाचक्षते नीतिविज्ञमपरे कौटिल्यमित्यन्ये विष्णुगुप्तमित्येके विष्णुशर्माणमपि केचित्संदिहानाः । परमहं कोऽस्मि कीदृशोऽस्मि इति सम्यक्तया ज्ञातुं कश्चिदेवा पारयत् इत्यपि प्रायः सकलानां पृथक्-पृथङ्मतश्रवणाद्वेद्म्येव ।

प्रायः कतिपयै ग्रन्थप्रणेतृभिरहं स्तुतः,परं प्रत्येकं तन्मनस्यनुसार मेवात्मानं विविधरूपापन्नमैन्द्रजालिकमिव प्रत्यभिजानामि । स्थविरावलीचरितग्रन्थं निबद्धुं प्रवर्त्तमानेन हेमचन्द्रसूरिणा जैनमतावलम्बिनाऽहं श्रावकतनय एव कल्पितः, विशाखदत्तेन कविवर्येण "कौटिल्यः कुटिलमतिः स एष येन" "नन्दकुलकालभुजगीति" हास्यास्पद वचोभि रात्मनैवाहं दोषभाक्त्व मापादितोऽन्यविध एव वर्णितः । समालोचकाश्चाति तरां छलिनं, मिथ्या वादिनं, कूटनीति प्रयोग नदीष्णं, विषकन्यादिप्रयोग दूषितं, मामाचक्षते । वस्तुतस्तु सर्वेभ्यो विप्रतिपद्ये किञ्चित् २ । स्थविरावली चरितकर्त्रा साकं सर्वथा मम विप्रतिपत्तिः यद्यपि क्वचित् २ कथा भागजातं सत्यमपि निबद्धम् परं क्वचित् क्वचिदयुक्तव्यवहाराभियुक्तोमिथ्यैव वा मद्विरोधिभिषकाणां साग्रहकथानुरोधेन वा तादृश उपनिवद्धः । मुद्राराक्षससंविधानकर्त्रा चाहमुपदर्शितः समाश्वासयितुमप्यात्मानं प्रभवामि । यतोहि कवयो निज प्रबन्धे रसानाविर्भावयितुं रोचकं च तद्विधातुं सत्यकथामपि कथान्तरेण

  

नियोज्य सर्वं विपर्यासयितुं प्रभवन्त्येव तत्र कवीनां प्रकृत्या निरङ्कुशत्वात्तत्प्रति पादितमपि सह्यमेव।

समालोचकास्तु कदाचिदव्यवहारज्ञा अविदितनीतितत्त्वा अननुभूतराज्यशासनप्रकाराः अपरिगणितब्राह्मणमानाः मुधैवोपरोक्तदोषैरात्मनोऽज्ञानान्धकारगह्वरत्वात्सदसद्विवेकशून्या इ लिम्पन्तीति तेषां तु विचारणैवाप्रासङ्गिकी। शेषश्च तत्त्वतः कोऽस्म्यहं कीदृशोऽस्म्यहमिति यथार्थप्रकाशनपुरःसरं मदीयं सर्वं जीवनवृत्तं मत्त एव श्रुतं सदर्थद्योतकं भवतीति अहमेवतावदात्मनश्चरि भवन्नयनातिथी करोमि।

अस्ति किञ्चिद्भागीरथीतीरोपान्ते गोल्लप्रान्तं नाम स्थान यत्र चाधीतसकलशास्त्रः सचतुःषष्ठ्यङ्गज्योतिषतंत्रपारंगमो मतिमाँश्चणकेक्यत्यपरोपाह्वो धर्मचारिणी सहायो धर्मानुष्ठानतत्परो दानप्रतिदानोपार्जितविविधयशाः शिवगुप्तोनाम विप्रवर प्रतिवसति स्म। तस्यैव परमपावनीयसद्मनि यथाकालमहं तदात्मजो बभूव। मयित्वेकाकिनि सूनौ पित्रोरमन्दं प्रेमसुधावर्षण मिवानन्दं जनयति स्म। प्रथमे वत्सरे एवाहमयथाकालं समुत्पन्न रदनोजनकयोः कथंचिच्चिन्तास्पदमभवम्। शुभान्यशुभानि वेति सामुद्रिक फलानि विज्ञातु मुन्मनीभूता दैववशाद्गृहातिथीभूता न्कांश्चि ज्जैनमुनीन्मज्जननी ममाकालरदनोत्पत्तिं निवेदितवती ते चोचुः "अहो गुणसम्पत्ति बालस्य प्राक्तनशुभकर्मानुसार मस्मिन्नेव जन्मनि महतः साम्राज्यस्याऽयमधिपतिर्भविता बालः सम्यक्तया पोषणीयोऽयम्"।

"महतः साम्राज्यस्याधिपति" रिति । क महत् साम्राज्यम् । क्व सम्पत्तिवैपुल्यम्, क्वचविषयानर्थपरम्परा; क्वचनानाविलास चाटुत्वम्, क्वचमण्डलचिन्तासंतानवितानभूपपारतन्त्र्यम् क्व लक्ष्मी लीलाविलासाभासैराचार हीनत्वमितिमहतीवानर्थपरम्परा इतस्तावद् ब्राह्मणकुलं वेदादिसच्छास्त्राध्ययनं यज्ञादिपवित्रानुष्ठानं धर्माचरण मितिसर्वं सर्वतोविहाय पापाचरणे ममतनयस्य मागतिर्भूदितिचिन्तामग्ना जननी मम रदनानि घर्षितुं मनो दध्रे। गतेषु चातिथिषु माता मम तथैवा ऽकरोत् । व्यतीतेषु कतिचिद्वासरेषु दैवाच्च एव विद्वांसो मुनयः पुनरपि मत्सद्मन्येवा तिथिसपर्यामन्वभवन् । जननीतु पश्चाद्विहितरदनघर्षणादिकं सर्वोदन्तं न्यवेदयत् । ते समुदचरन् । देवि सकलार्थसम्पादिनी राज्यसम्पत्तिरस्तु विपर्यस्तैव, परं तथापि प्रतिबिम्बमेवाऽस्य साम्राज्यमुपभोक्ष्यते । कथंचिदाश्वासिता जननी मां सकलैः प्रयत्नैः पुपोष। अहञ्चसमुपारूढयौवनो नियमितविद्याधिगमो ऽधीतनाना शास्त्रतत्वो विज्ञातसकल व्यवहारो यथाकालं कुलीनस्यैकस्यब्राह्मणस्यात्मजामुदवहम् मम प्रियात्वात्मनो जनकस्यैव गृहे ऽयुषितवती ।

एकदातु तद्भ्रातुर्विवाहोत्सवः समजनि । तस्मिन्महोत्सवे दिव्याभरणाः परिहित महार्घदिव्याम्बरा, स्ताम्बूलीरागसुषमायितपङ्कजाननाः, प्रतिबिम्बिताभरणद्विगुणशोभायमानमुक्ताग्रहाराः समञ्जरीककर्णपूरादिपल्लवितकबर्यः कुलमहिला इतस्ततोमहोत्सवप्रबन्धव्यग्रा शशिकला इव सर्वत्रसंमोदसुधामिव वर्षन्त्यश्चकाशिरेतमाम् । तास्वेवाप्रतिमसौन्दर्यलीलासु ममाऽपि प्रियतमा कथञ्चिद्दारिद्र्योपहता लज्जाभरेण मलिनाम्ब-

शाएगेवोपरि दधती नात्मानं पारयामासा श्वासयितुम् । मंगल महोत्सवं विरङ्गिणीव विधुरंदैवमिव संभावयन्ती सहयोगिनी महिलारत्नानां कटाक्षोत्थितानि वचांसि मर्मभीन्ति शल्यानीवा भवन्ती मलीमसाश्चलेन मुहुर्मुहुरात्मनो गलितबाष्पपूरार्द्रीजा माननं करेणैव आच्छायदन्ती सगद्गदं स्खलिताक्षरा गृहकोणेशा तुरा तस्थौ। उत्सवानन्तरञ्चानुभूत दारिद्र्यविषमावस्था मदन्ति मुपाययौ । नानाप्रकाराणि भूषणानि दिव्यशोभा भिभूतानि वा सांसि च ययाचे । अहमपि कलितपूर्वोदन्तः प्रेमाश्रुनिर्भरमानस कथमपि स्तब्धचेतोवृत्तिः शनैःशनै र्वाचमालपम्ः—

देवि ! विधुरा हि दैवगतिः—

भूतिर्नीच गृहेषु विप्रसदने दारिद्र्य कोलाहलो
नाशो हन्तसतामसत्पथजुषामायुः शतानांशतम् ॥
दुर्नीतिं विधुरस्य दैवहतकस्याऽन्वीदयकोपानलै
र्दग्धौ किं विदधाव देवि ! यदहो साध्यं नु नः सम्प्रति ॥

अन्यच्च देवि !

मतिमतां मतिरेवनुवामनी नच परिश्रमिणां श्रम
शून्यता ।

निशिदिवाकरयो रुपरञ्जनं विधिकृते सकलं विफलायते

समाश्वसिहि सम्प्रत्येव कतिचिद्दिवसैरावाभ्यां नन्दरा ज्ये गन्तव्यमस्ति । स पण्डितेभ्यो नित्यं द्रव्यं वितरति तत्रैव चा नल्पसंताप विधायिनी दरिद्रता हिमानीवतापेन विलय मेष्यति । प्रभूतञ्च धनमनायासेन लप्स्यते ।' इत्येवं समाश्वासिता देवी शान्त-मानसाऽभूत् ॥

क्रमशः

चाणक्यः

# वीर चरिता वलिः

## महाराणा कुम्भः

( १ ) वीर मूर्धन्यानां राज पुत्राणां वीर्योत्कर्ष मनो हा
णि त्तात्र चरितानि को नाम भारतीयो न वेद । वयन्तु मन्
महे, स भारतीयो मातृभूमिगर्भवेदनाकर एव, यः किल मेवा
देशस्य मध्यकालीनशासकानामद्यापि चारणै र्गीयमानां
सहृदयैश्च श्रोत्र पुटद्वारा निपीयमानानि नृसिंहोचितचरितां
न जानीते । येषा न्नाम्ना देशो दृप्यति, येषा मुज्ज्वलाभिः
र्तिभिर्ज्योत्स्नात्तालितमिव धवली कृतञ्जगत्, येच निरुपमा
द्धार आसन्, तेषां समरलीला येनार्य कुलोद्भवेन न श्रुता, त
निष्फले कर्ण कुहरे, प्रयोजन हीना च मेधा ।

( २ ) यदा भारतस्य प्रतापसूर्यो मन्दायमान आसीत्
राज पुत्रैरेव दिव्य वंशाव लम्बेन तस्य दिविस्थापनं कृतम्,
वनमृदिता भारतपुष्पवनिका प्राणसंचारेण पुनर्नवीकृ
दौर्भाग्यस्य विजृम्भ माणो महानदः दिग्गजैरिव प्रबल कराति
र्येणविरुद्धः । एतादृशां वीराणाम्पुण्यानि चरितानि ये भा
या न जानते, केन हेतुना ते भारतीयाः ? केवलं भारत
समुद्भवतयैव ते भारतीयाश्चेद्धन्त पशुपत्तिवनस्पत्यादि
किमपराद्धम् ? ते ऽपि कुतोन भारतीय जनत्वेन गण्यन्ते।

( ३ ) तेष्वेव राज पुत्रेष्वन्यतमस्य नरसिंहस्य वीर च
मद्यवयं श्रावयामः, अयं कुम्भाख्यो महावीरः १४१६ तमे
ष्ट संवत्सरे मेवाड़ राजसिंहा सन मारुरोह । यवनैः सह अ

तेनसंग्राम जातेन, परस्पर मपि कलहद्वार तस्मिन्काले मेवाड़ राज्यन्नातिपुष्टायान्दशायामासीत् । कुम्भनृपतेः सिंहासना रोहणकाले सर्वेऽपि राजकीया जनाः 'किमयं करिष्यतीति' प्रश्नेन व्यापृत मानसाः साशं साशङ्कञ्च जयनाद मुत्थापया मासुः। किमनेन कृतं, जनानामाशा आशङ्कावा पूरितेति वय मधस्ताद्वर्णयामः।

(४) स हि नृपति र्नीत्या बलेन च निजं राज्य म्पालयामास। दशसुदिक्षु यस्य बाहुबलस्य ख्यातिः प्राभातिकी प्रभेव विस्तृताऽभूत्। मेघस्तनिते बलाकारुतमिव तस्य गर्जिते दिल्ली पतीनां यवनानां शब्दितं तिरस्कृतमभवत्। आर्य्य राज्यस्य गौरवरक्षायै स बहून्प्रयत्नानन्वतिष्ठत्। एवं श्रूयते, यथा तेन मेवाड देशे सैन्य संस्थापनाय शत्रूणा न्निराकरणाय च चतु स्त्रिंशति दुर्गाणि प्रणीतानि। स्थाने स्थाने दुर्गनिर्माणेन शत्रुभिरगम्य इव सम्पादित स्तेन मेवाड देशः।

(५) तस्य ख्यातिं वृद्धिञ्च निशम्य, किञ्चिल्लोभेन किञ्चिन्नासहनतया प्रेरिता यवनभूमिपतयस्तस्य विनाशाय महान्तं यत्न जाल मरचयन्। तद्राज्यस्य एकत्रिंशे वर्षे गुर्जर देशस्य मालवा देशस्य च शासकाभ्यां मिलित्वा मेवाड देश विजयाय यात्रा कृता। तयोः सैन्ये महावृष्टिभिराप्यायितौ महानदाविव मेवाड मही मास्कन्द्य गर्जनञ्चक्रतुः यवनाना न्तत्सह कारिणां देशद्रोहिणां भरतीयानाञ्च केषाञ्चित्क्रूरनादेन परितः परिपूरितमासीदाकाशमण्डलम्। समीपमापतितं हरिण शावक म्वेद्य न तथा केसरी मसीदति, यथा शत्रूणा,न्तत्रापि यव-

नानां सैन्यानि समागतानि विलोक्य कुम्भ नृपतिः प्रसन्नोऽभूत् । येभ्यो मृत्युरपि भयश्चक्रे, येषां हृदयाद् भीतेर्निर्वा सनाभूत्, एतादृशां वीराणां महतीं सेनामादाय मेवाड भूपति र्महतावेगेन समापततः शत्रून् पतङ्गान्प्रदीप इव जग्राह । तुमुलं युद्धमभूत् । रुधिरस्य स्रोतांसि घोर संग्रामस्य समाचारं दूर देशेषु गत्वा श्रावयामासुः । वीरा मृत्युभयं विहाय शस्त्रप्रहार मकुर्वन् । यवना अपि न स्वल्पं साहसमदर्शयन् । परन्तु 'यतो धर्मस्ततो जय' इति धर्मानुसारं राज पुत्राणां करवालेन यवन पाणिश्छिन्नोऽभूत् । गुर्जराधिपतिः कातर इव रणभूमिं विहाय दुद्राव, मालवेश्वरश्च लौहशृंखलाभि र्निगडितः कारागार तीर्थे प्रायश्चित्तश्चचार । अद्यापि चित्तौड महादुर्गे कुम्भ नृपतेः कीतिस्तम्भस्तस्येमां विजय गाथां श्रावयति, भारतस्य सौभाग्य दिवसांश्च स्मारयति ।

( ६ ) अयंनृपति रेकतः 'कर्कश खड्ग चक्र चालने' निपुणः सन्नपि 'काव्य कला विलासे' न हीनोऽभूत् । दक्षिणेन हस्तेन तीव्रकरवालं शत्रुकण्ठे निक्षिपन्, वामेन हस्तेन पत्रोपरि काव्यविन्यासंविदधौ । गीत गोविन्दस्य कुम्भनृपतिकृता टीका केन देवभाषा रसिकेन, वासुदेव भक्तेन वा न श्रुता । विविधानि खण्डकाव्या न्यप्येतत्कृतानि श्रूयन्ते । एतस्य नृपतेः सहधर्मिणी मीरांबाई अपि भक्तेषु विदितमाहात्म्या विद्यते । तेनो पनिबद्धानि भक्ति स्तोत्राणि अद्यापि जनै ग्रमे ग्रामे गीयन्ते ।

(७) कुम्भ नृपतिः प्रजा रक्षन्, शत्रूं स्तिरस्कुर्वन्, काव्यानि चानुध्यायन् पञ्चाशद्वर्ष पर्यन्तं मेवाड राज्यं शशास। तस्य समये राज पुत्राणां यशश्चन्द्रिका दशापिदिशः अतिजगाम। न को ऽपि यवनो वा देशद्रोही वा मेवाड देशपरिधिम्प्रति चक्षुरपि चालयामास। यवनास्तु मिथो युद्धेन हीनास्तस्य शौर्येण च क्षीणाः शृगाला इव भूबिलेषु निवासंलेभिरे। पञ्चाशद्वर्षावधि प्रजाः सुखेन पालयित्वा ऽयन्नृपति र्निजपुत्र दौरात्म्येनैव पर लोकम्प्राप।

---

# संशोधित पञ्चतन्त्रस्य ।

## प्रस्तावना

पञ्चतन्त्रमिदं किल संस्कृतसाहित्यस्य समुज्ज्वलतमं भूषणम् ।
केवलं भारते वर्षे, न केवलं देववाणिरसिकेषु, अपितु सर्वत्रापि भू
मण्डले अस्य ग्रन्थस्य महती प्रतिष्ठा वरीवर्ति । अद्यापि जगतः
योपदेशसाधनेषु ग्रन्थेषु प्रथममस्य स्थानम् । न चास्येयंकीर्तिर्नवीन
ख्रिष्टसंवत्सरारम्भादपि पूर्वमस्य भारतीयराजमण्डले समादरः
यते । षष्ठ्यां ख्रिष्टशताब्द्यां खुस्रो अनुशेरवाइत्याख्यस्य ससैनिय
नृपतेराज्ञयाऽयंग्रन्थः पहलवीभाषायामनूदितोऽभूत् । अष्टमशताब्द्यां
च तस्यैव पुनरारब्यभाषाया मनुवादः संजातइत्युपलभ्यते ।
यश्चिरकालात्संसारविदितमिदं पञ्चतन्त्रक मद्यापि तादृशमेवादरं
भते, यादृशं रचनाकाले लेभे ।

भाषाऽस्य रुचिरा मधुरा सरला च । न तत्र अप्रसिद्धपदान
समावेशो,नापि च समासबाहुल्यम् । बालैरपि प्रौढैरपि चास्याध्य
यनं विधातुंशक्यम् । कथाः सर्वा अपि मनोहारिण्य उपदेशप्रदा
यद्यपि तेषु पात्राणि प्रायः पशुपक्षिकीटादिभ्य एव संगृहीतानि
तथापि तेन पुस्तकस्योपयोगितायाः परिवृद्धिरेवजाता न क्षयः
भाषाया माधुर्यं,विषयस्य चोपयोगित्व मस्यग्रन्थस्य प्राचीनत्वे प्रबल
म्प्रमाणमस्ति । मध्यकालनिर्मितेषु ग्रन्थेषु शब्दाटोपो यथा भ
नुपलभ्यते, न तथा पञ्चतन्त्रे । ख्रिष्टाब्दारम्भादशीत्यधिकत्रिश
वर्षाणि पूर्वं वैशालीसभायां संग्रहीतासुगाथासु पञ्चतन्त्रस्य नाम
पलभ्यते । तस्मादति प्राचीनोऽयंग्रन्थ इति अनायासेनैव ज्ञातुं श

क्यते। केचित्तु महाराजचन्द्रगुप्तमौर्यस्य गुरुणा विष्णुगुप्तनाम्ना चाणक्येन तस्यशिष्येण वा केन चित्प्रणीतोऽयमिति वदन्ति।

निश्चितः कालः कोऽपि भवेत्; अस्य अतिप्राचीनत्वे सन्देहो नास्ति। बौद्ध कालात्तु अर्वाचीनत्व मस्येति यदितिहासज्ञा वदन्ति, तदपि सत्यं प्रतीयते। सन्ति बहूनि लक्षणानि ग्रन्थान्त र्गतान्येव, यैरस्य बौद्धधर्मोदयादुत्तरकालित्वं विज्ञायते। बौद्धानां विविधजातकेभ्यो रुचिरा उपदेशप्रदाश्च कथाःसंगृह्य, काश्चिच्च स्वतन्त्राः सन्निवेश्य, सरलयागिरा निबद्धमिदम्पञ्चतन्त्रं लोकहिताय विष्णुशर्मणा इत्यत्र सन्देहोनावशिष्यते, यदावयं बौद्धग्रन्थैः विशेषतया जातक ग्रन्थैः सहास्य तुलनाकुर्मः। गाथाः प्रायएव विधा दृश्यन्ते।

एकस्तु बौद्ध सिद्धान्तेभ्यो महान्भेदोऽत्रग्रन्थे स्फुट उपलभ्यते। बौद्धा हि मनुष्यजन्म दुःखा त्मकं हेयञ्च मन्यन्ते न तेऽत्र किमपि जीवितव्य मपश्यन्ति।। निर्वाणं क्रियाविराममेव च ते उपादेय मम न्यन्ते । पञ्चतन्त्रे पुनः जीवनं जीवितव्यत्वेन समुपदिष्टम्। जीवनोचिता एव चोपदेशाः प्रदत्ताः। कथं राज्यं रक्षणीयम्? कथं शत्रवो विनाशनीयाः? केन विधिना जगति विजयः प्राप्यः? इत्ये तेषां प्रश्नाना मेवोत्तराणि सर्वस्मिन्पञ्चतन्त्रके प्रधान तया समुपलभ्यन्ते। अतएव चायंग्रन्थ आर्यजात्यै विशेषतया लाभकरः शिक्षाप्रदश्च। सुप्ता विगतसारा सान्धकारा सन्ध्येव खेदप्रदा इयमार्यजातिः। इयं किल जीवनौषधमपेक्षते, न पुनः मरणो पायम्।

पञ्चतन्त्रं हि मनोहरकथोपनिबद्धत्वा दतिरुचिरं बालेभ्य श्चात्यन्तमुपकारकम्। संस्कृतभाषायाम्प्रवेश मिच्छुभ्यः नैतद्विधःको-

ऽप्यन्यो ग्रन्थः समुपलभ्यते । एकन्तु वैषम्यमुपलक्ष्यते । क्वचित्
चिदेतस्मिन्नीदृश्योऽश्लीलसीमानमाप्नुवत्यः शृङ्गाररस पूर्णाश्च ग
थाः सन्ति. यासामध्ययनं बालेभ्यो विशेषतया ब्रह्मचारिभ्यो
समुचितं प्रतीयते । गुरुकुले पञ्चतन्त्राध्यापन काले महादद
ठिन्यमनुभूयते । अतः 'यन्नवे भाजने लग्नः संस्कारोनान्यथा भ
वेत्' इति विचिन्त्य इदम्पञ्चतन्त्रस्य संशोधितं संस्करणं गुरुकु
लप्रबन्धकर्तृभिर्मुद्रापितम् । पञ्चतन्त्रात् शृङ्गाररसप्रधाना गाथा
बालेभ्योऽति कठिनाः श्लोकाश्च पृथकृताः तस्यमुख्योरुचिकाश्च क
थाभागोऽस्मिन्भागद्वयात्मके संस्करणे स्थापितः । न केवलं गुरु
कुल एव, अपि तु बहिरप्यन्यासु,, पाठशालास्वस्यो पयोगः साध
यः फलमुत्पादयिष्यति । संस्कृतभाषायाञ्च समुचितानि पा
ठ्यपुस्तकान्युपलभ्यन्ते । उत्तमानिचेदतिकठिनानि द्वितीयवर्षो
चाध्यतव्यानि भवन्ति, त्रतिसमुपयोगिनां ग्रन्थानां तु सर्वथा अ
भाव एव प्रतीयते । इयङ्गुरुकुलात्प्रकाशङ्गच्छन्ती ग्रन्थमाला यदि
पूर्त्तिमेष्यति, नायमभावश्चिरं स्थास्यति ।

इदम्पुस्तकमध्यापयद्भि रध्यापकैरवश्य मवधातव्यं यद
लास्तत्र कथितानाङ्कथानां सम्भव मेव चाभिप्रायं स्वीकुर्युः ता
पशुपक्ष्यादि पात्रेषु प्रदर्शितान्दुर्भावान्पापदृष्ट्या,सद्भावांश्च धर्म
दृष्ट्या पश्येयुः । उचितामेव शिक्षान्ततोगृह्णीयुर्नतदितराम् । अ
पकाश्च यत्र यत्र च क्वचित्स्त्रीजातिम्प्रत्यपमानजनकाः तत्राविश्व
सजनकाश्चशब्दा भावा वा भवेयुस्तत्र तेषा मसामञ्जस्यमवश्यम
दर्शयेयुः । एवं यत्र क्वचिद्द धार्मिकविचाराअपि भ्रमज्ञानग्रस्ताः स्यु
स्तेषां तत्रैव निरासङ्कुर्युः । यतो न शिक्षाकेवलं भाषापरिज्ञानाय
दीयते, अपि विचारसंशोधनाय धर्म शक्तिस म्पादनाय च ।

## × सुभाषितानि +

१

न सुखं न च कष्ट मागतं—
गणयन्ति कृतिनो मनागपि ॥
महता मथवा ऽन्यथा धर्मैः—
किमिव स्यादपरं विशेषकम् ॥

( २ )

अपि चैक गुणस्य गौरवाद्—
गरिमाणं भजते गुणी जनः ॥
ननु रौति पिको पि पञ्चमं—
अत एवा द्रियते जनैरयम् ॥

( ३ )

बलवान् खलु दुर्बलं सदा–
बलवन्तं नहि वाधते पुनः ॥
विधुमेव विधुंतुदो रविं—
ग्रसते नेति निदर्शनं मतम् ॥

( ४ )

नहि जातु कदापि संगतिः—
सह नीचैः सुफलाय कल्पते ॥
अपि सर्पनिवास हेतुना–
नहि सेव्यो हरिचन्दनद्रुमः ॥

विद्यासागरः

# श्री कालीदासः कदाबभूव !

( लेखकः साहित्याचार्यः श्री रामावतार पाण्डेय एम. ए.

प्रौढ़े वयसि कालिदास उज्जायनीमुपेत्य राज
स्यो भूदित्यनुमीयते । कुमारसंभव मालविकाग्निमित्रा
कवे र्बाल्ये ग्रन्थेषू ज्जयिनीसंबन्धो न द्रश्यते किं त्वस्य
प्रबन्धेषु मेघदूतादिषूज्जयिन्याः प्रासादोद्यान हर्म्यादेः सोत्क
स्मरणमुपलभ्यते ।

कः पुनरुज्जयिनीश आसी त्कालिदासस्य समये रघुवंश
षष्ठ सर्ग इन्दुमती स्वयंवरार्थमुपागतानां राज्ञां वर्णनावसरे का
मगधेश्वरो नृपवर्गस्यमूर्ध्नि स्थापितः । कोऽभिप्रायस्तस्य । उज्जयि
श्वरेणसंबद्धः कालिदासो ऽवन्तिपतिनृपाणां मूर्ध्नि स्थाप
मर्हति नपुनर्मगधेश्वरम् । तत्समये मगधेश्वरश्चेदवन्तिपते
म स्त देवेदं समञ्जसम् । मगधैरसंबद्धस्य यशोधर्मणो ऽन्यत्व
सदस्य श्चेदसाव भविष्यन्नमगधेशमीदृग्बहुमान भाजनं
स्यत् । कालिदासेन स्वयंवरा वसरे वर्णितानां सर्वेषां
मगधेशावन्तीश्वरौ महाप्रभाववमौ । क्षुद्रेष्वन्यनृपेषु स
मगधेश्वरे एव धराराजन्वती । अवन्तिश्वरस्य च प्रमाणेषु
खुरो त्थापितै रजोभिः सामन्तशिखामणयो धूसरी भवन्ति
आभिरसाधारण प्रशंसावाग्भिः स्फुट मनुमीयते स्य अवे

५८ यत्तादिर्लीपरथध्वज दुष्यन्तादयःसा ...विक्रवृत्तानुसा
लिपत चरिता इतिमदीये कालिदास विषयके महाप्रब
५६ पूर्व मेघे ।

ऽवन्तीशमगधेशयोरैक्यं प्रशस्तेश्च द्विधा विभक्तायाः परमार्थत एकविषयत्वम् । तदित्थं कवेः संभाविते समये ( चतुर्थ शत-कान्ते ) ऽवन्तिमगधोभयेश्वरः कोपि नृपोऽमुं सदस्यानं व्य-धत्तेति निश्चितप्रायम् । द्वितीय श्चन्द्रगुप्तश्च मगधेश्वर इतिहास प्रसिद्धो येन प्रायोऽस्मिन्नेव समये वन्तयो विजिता इति( ६३ )पुनरन्य-थापि गुप्तान्वयतिलक एव विक्रमः कविनानेन संबद्धो नृपतिः प्रतिभाति । किंच स्वयं वरार्थागतेषु नृपेषु मगधावन्तीश्वरावेव राजकुमार्या सबहुमानमतिक्रान्ता (६४) वन्येतु भूपतयः स घृणमेवो ल्लङ्घिताः (६५)। रुद्रदामान्वय धूमकेतुः प्रवया विक्रमः स्वप्रतिनिधौ परंतपे ऽनुरागरहितामिन्दुमतीं हन्तुं शक्तो नत्व-साविमामन्यनृपेष्विव तस्मिन्ननादरवतीं क्षमेत । नैतावदेव प्रकरणेस्मिंश्चन्द्र गुप्तस्य कालिदासेन संबन्धं व्यनक्ति । मग-धावन्तीशयो वर्णनोपक्रमे तत्संबद्धश्चन्द्रेन्दुशब्द प्रयोगो (६६)

---

६० रघौ षष्ठे ।

६१ कामं नृपाः सन्तुसहस्रशो न्ये राजन्वतीमाहुरनेन भूमिम् । नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसेव रात्रिरिति रघौषष्ठे ।

६२ अस्य प्रयाणेषु समग्रशक्तेरग्रेसरै र्वाजिभिरुत्थितानि । कुर्वन्ति सामन्त शिखामणीनां प्रभाप्ररोहास्तमयं रजांसि । इति च तत्रैव ।

ऽपि मुद्राराक्षस प्रस्तावनायां चन्द्र शब्द प्रयोग इव चन्द्र
संबन्धं ध्वनयति (६७)।

उक्तपूर्वातिरिक्तमपरमपि बहु विषय जातं कालि
सस्य द्वितीय चन्द्र गुप्तेन संबन्धं सूचयति। दिलीपस्य
कथयो रघुवंशे वर्णितयोः किमपि वैलक्षण्यं दृश्यते यस्य
कवे र्विक्रम संबन्धमकल्पयित्वा नावगन्तुं सुशकम्। प्राची
पुराण कथासु न दिलीपो श्वमेधेन यजन्वा रघुर्दि ग्वि
प्रतिष्ठमान उपलभ्यते। रघुश्चन्द्र गुप्त इव वर्णित इति का
यां तु सहेतुकं दिलीपस्या श्वमेधयाजित्वकल्पनं रघोश्च
जेतृत्वोत्प्रेक्षणम्। राघूरामश्च कालिदासीयनायकानां

---

६३ चन्द्र गुप्त प्रकरणे स्मिथमहाशयस्य प्राचीन भारतेति
६४ ऋजुप्रणाम क्रिययैव तन्वी प्रत्यादिदेशैनमभाष
ति रघौ षष्ठे।
६५ रघौषष्ठे।
६६ ज्योतिष्मती चन्द्रमसैव रात्रि रिति मगधेश वर्णनं
र्शयामास विशेष दृश्यमिन्दुं नवोत्थान मिवेन्दुमत्यै
चावन्ती शवर्णने रघौ षष्ठे।
६७ तत्र हि क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्ण मण्डल मिदानीं
अभिभवितु मिच्छति बलाद्रक्षत्येनंतु बुधयोग इति।
चन्द्रगुप्ताभिभवशङ्की विष्णुगुप्तः प्रविशति।

(६८)। तत्र सुप्रथितं रामस्य चरितं कविना नान्यथा कर्तु पारितमिति रघुरेव तेन स्मारकस्य चन्द्र गुप्तस्य नृपतेः प्रतिनिधिरकारि। चन्द्र गुप्तस्य पिता समुद्र गुप्तोऽश्वमेधयाजित्वेनेतिहासेषु विदित इति रघोः पिता दिलीपोपि कविनाश्वमेध याजित्वेन वर्णितः (६९)। चन्द्रगुप्तः प्रायः कस्याश्चिन्म गधराज कुमार्याः पुत्र इति रघुरपि मागधीपुत्रत्वे न व्यपदिष्टः। चन्द्रगुप्तस्य मातुर्नाम दत्तेति दत्ता शब्दश्च दक्षिणापर्याय इति रघोरपि मातुर्नाम सुदक्षिणेत्युत्प्रेक्षितं कविना। चन्द्र गुप्तो महाप्रभावो विजेतेति रघुरपि तादृश एव वर्णितः (७०)।

फाहियन नाम्ना चीनदेशीयेन गुप्तसाम्राज्यस्य प्रथमभागे भारतं भ्रान्तवता तदानी दस्यूनां सम्राड्रक्षितेषु प्रदेशेषु सर्वथानुपलम्भ एव तत्साम्राज्यस्यासाधारणलक्षणत्वेन वर्णितः (७१) कालिदासश्च स्वसमाड्रक्षितस्य भारतस्य तमेव विशेषं स्मरन् श्रुतौ तस्करता स्थिता दिलीपस्य राज्य इति वर्णितवान् (७२) कालिदासः स्वनायकान्गोप्तृशब्देन प्रायो व्यपदिशति अन्यैः संस्कृत कविभिर्विरलं प्रयुक्तोयंशब्दः। (७३) गोप्तगुप्तयोश्चैक प्रकृतिजत्व नूनं गुप्तानां स्मारकोयं गोप्तशब्दः प्रतिभाति। किंच

६८ रघोस्तृतीय चतुर्थ पञ्चमेषु रघुचरितं दशमादिषु पञ्चदशान्तेषु च रामचरितं द्रष्टव्यम्॥

६९ रघौ तृतीये।

स्व वीर्य गुप्ता हि मनोः प्रसूति रित्यत्र गुप्तशब्दोऽपि यथाऽ चिद्दिलीप विषये कविना प्रयुक्त एव ।

तथा च विक्रमादित्यविक्रमाङ्काद्यनेकविरुद विराजित द्वितीय चन्द्रगुप्तनृपते रापश्चिमसागरं गुप्तराज्यं विस्तारितवतो गु रीयशकसत्रपत्रासैक हेतोः कथासहस्रनायकत्वेनार्वाचीन रुत्प्रेक्षितस्य शकारेः समये कालिदासो बभूवेति सिद्धम्। सुह्म दीनतिदूरस्थान्पौरस्त्यां श्चोलादीन्दाक्षिणात्यां श्च कांश्चिद्विषयै देशान् विहाय प्रायः समस्तं भारतमस्याधिकारस्थमासीदि न तिरोहित मिवेतिहास विदाम् । अधिकचत्वारिं शतो वत्सरा ग्विजयात्पूर्वं रघुनृपते रधिकार गतत्वेन कविनोत्प्रेक्षितस्य भारत शस्यायं शासक आसीत् । रघुणा दिग्वि जयाय प्रस्थितेन विष न्तराणि सुह्म कालिङ्ग केरलादीनि मगधावन्त्यादीनां विजे त्वेन कथं नासौ कविना वर्णितः। चन्द्र गुप्तं स्मरता कविना त ज्यस्थितिरुत्प्रेक्षिता मगधावन्त्यदीनां च प्रथमत एव रघुरा

---

७० रघौ चतुर्थे ।

७१ फहियननाम्न श्चीनस्य यात्रेतिवृत्ते ।

७३ चन्द्रगुप्तजीवनकाले लिखितेषु रघोः प्रथमादि चतुर्थान्त सर्गेषु प्रायस्तथोपलभ्यते ।

७४ स्ववीर्यगुप्ता हि मनोः प्रसूतिरिति रघोर्द्वितीये ।

ऽन्तर्भावं व्यञ्जयता तद्विजयो नोक्त इतीदृशमेवास्य प्रश्नस्यो त्तरं संभवति।

कालिदासो दीर्घायुर्बभूवेति प्रायः संभाव्यते विक्रमे दिवं गते प्यसौ तत्पुत्रसभारत्नमासीत्। विक्रमपुत्रस्य कुमार गुप्तस्यैव समये प्रवयसा कविना शाकुन्तलं रघुवंशस्यन्तिमा श्च कतिचित्सर्गाः (७६) प्रणायिषत। विक्रम मिव तत्पूत्रं कवि र्नारोचयतेति प्रतिभाति सहि मेघदूत प्रणयन समये तथोज्जयिनीप्रियो पि पश्चिमेवयसि शाकुन्तलं विलिखन्नगरवासादति विरक्त इव लक्ष्यते वनवासं च वहुमन्यत (७७)। यौवने करुण वर्णनविमुखो मृतस्य कामस्य पुन र्जीवनाशां कुमारे (७८) वर्णितवान्वयोऽन्ते विरागबहुलः कविरप्रति विधेयानि मरणमहा (७९) शोकादीनि रघुवंशे

---

७५ रघौ चतुर्थे।

७६ अष्टमादिषु सर्गेषु

७७ तथाहि जनाकीर्णं मन्ये हुतवह परीतं गृहमिवेति प्रासादं प्रविशतः कण्व शिष्यस्योक्तिः।

७९ रघोरष्टादशे—नवेन्दुना तन्नभसोपमेयं शावैकसिंहेन च काननेन। रघोः कुलं कुड्मलपुष्करेण तोयेन चा प्रौढन रेन्द्रमासीदि—त्यादि।

वर्णयामास करुण मेव चास्य निर्वहणं विदधौ।

तथा च चतुर्थ शतकस्यान्ते पञ्चम शतकस्य चारम्भे कालिदास आसीदिति स्थिरम्। अशोकसमयानन्तर मस्मिन्नेव समये पुनर्भारत स्य गौरव माविरभूदजायन्त चास्मिन्नेव काले मेण्ठ सुबन्धु भासादयो महाकवयो दिङ्नागोद्द्योत कराद्या श्चान्ये दार्शनिकाः आर्यभटा दयश्च वैज्ञानिकाः (४१) अस्मिन्त्समये विद्योन्नति र्या भरते प्रादुरभू त्तस्या अवसानं प्रायो वर्ष सहस्रानन्तरं लक्ष्मणसेनराज्ये ऽतीते बभूवेति शिवम्।

---

श्री रामावतारः

---

८० तस्यास्तथाविधनरेन्द्रविपत्तिशोकादुष्णौर्विलोचनजलैः प्रथमाभितप्तः।
निर्वापितः कनककुम्भमुखोज्झितेन वंशाभिषेकविधिना शिशिरेण गर्भ इति रघोरुप संहारे।

८१ आर्य सिद्धान्तेआर्यभटस्य समयो वैक्रमपञ्चमशतकारम्भे। दिङ्नागाध्यापकस्य वसुगुप्तस्य ग्रन्थश्चतुर्थ शतके चीनैः स्वभाषायामनूदितः। तथा च दिङ्नागस्य पञ्चमशतकादनर्वाचीनत्वे निश्चिते दिङ्नागानां पथिपरिहरन्स्थूलहस्तावलेपानिति मेघदूते ध्वनितं तस्य कालिदास समकालिकत्वं संगतमेव। उद्द्योतकरस्तु दिङ्नागंप्रत्यादिशंस्ततो र्वाचीनः सुबन्धुना गृहीतनामत्वात्ततः प्राचीनः सर्वेपीमे षष्ठशतकोताद्धाणा त्प्राचीनाः।

## अत्र तत्र सर्वत्र

# उषायाः समालोचकाः

जगति कस्य नाम मित्राण्येव मित्राणि केवलं । सरसिजस्य परपक्षे चन्द्रमा, यो हि सर्वं जगदाह्लादयति । कुमुदमण्डलस्य शत्रुरादित्यो योहि जगन्मित्र मिति कथ्यते । एवंविधे संसारे कोऽभिमन्येत 'अशत्रु रहमिति ।' इय मभवस्कर वर्तिनी 'उषा' निर्गतैव मित्रै रभिनन्दिता, आत्मीयत्वेना ङ्गीकृता च । तान्प्रति इयं हार्दं धन्यवादं प्रकाशयति । परन्तु न ज्ञायते केन हेतुना समुत्कुपिता अमूत्र न्केऽपि सज्जनाः । तैर्हि मासपर्यन्त मुषायाः प्रतीक्षायां स्थीयते,तदनन्तर मासाद्य तां, दोष दर्शन धिया सा प्रतिपत्र मालोड्यते । केचिदुषाप्रणयिनो ऽस्मान्प्रेरयन्ति, यद-स्माभिस्त त्कृतानामप शब्द व्यवहाराणां संहाराय किमपि ले-खनीय मिति । तत्र वयं निवेदयामः अधिकोपयोगिनि कर्मणि व्यापृता ऽस्मल्लेखनी न तद्विहाय द्विज जल्पितान्यनुकर्तु मिच्छ-तीति । पौरोभाग्ये ऽपि विद्यते किञ्चिद निर्वचनीयं सुखं, यदनु भवन्नेव कणकः प्रयोजनं विनाऽपि कौरव कुल क्षयाय प्रयत्न मातेने । एतस्माद्धेतो र्वय मत्र विषये जोषमास्महे ।

## किम्बुद्धदेवो नास्तिकः ?

बौद्ध धर्मस्य संस्थापको बुद्धदेवः किंवस्तुतो नास्तिक आसीत् ? किं स ईश्वरस्य वेदस्य च सत्ताया न्न विश्वसिति स्म ! अयम्प्र श्नः साम्प्रत म्पुरातत्त्वज्ञेषु सावेशमालो ड्यते । बौद्धधिकार कारिणः साम्प्रदयिक भेद दूषित मतयो महताबलेन कथयन्ति,

'कथन्न बुद्धदेवो नास्तिकः' तत्प्रचारितो बौद्ध धर्मो यदा नास्ति सिद्धान्तस्य दृढतरः समाश्रय इति, पुरातत्त्वज्ञास्तु लिली प्रभृ नेम मेकान्तधिकारं सहन्ते। नास्त्येको ऽपि शब्दो बुद्धदेवेन मुखेन समुच्चारितः, यतस्तस्य नास्तिकता सिध्येत। न तेन पि ईश्वरस्य वेदस्य च सत्तायाः निषेधः कृतः। कथन्तर्हि प्र णमन पेक्ष्यैव नास्तिकत्वत्वधमालिका बुद्धदेवस्य गले नि शक्यते ? नास्तिकत्वन्तु नव्यमत प्रचारे सावेशमाविष्टै बुद्धा गामिभिर्ब्राह्मणैः सह विवदमानै रेव स्वीकृत मिति प्रती यदि वयं बौद्ध ग्रन्थाना ङ्गभीरस मालोचन ङ्कुर्मः। एवं सति कस्याप्यस्ति भारत भुवि समासादितजन्मनो जनस्याधि यत्स बुद्धदेवं नास्तिकं कथयेत्। सहि भूषण मस्मद्देशा तेन हि निज समये विलुप्ता कर्मानुसारिणी वर्ण व्यव समुज्जीविता, यज्ञेषु हिंसायाः प्रतिषेधः कृतः, समाजस्य नेक विधिभिः संस्कारः कृतः। केवल म्पुरातत्त्वानभि एव तं नास्तिकं भारतानपकारिणं च वक्तुं शक्नुवन्ति।

## होलिकासम्मेलनम्।

जयपुरात् सं कृत भाषामयं संस्कृत रत्नाकरा ख्य मेकं मासि पत्रं प्रकाश्यते। तस्य सम्पादकः श्री व्याकरणाचार्य न्यायशा श्रीगिरिधर शर्मा चतुर्वेदः। चतुर्वेदमहाशयः खल्वस्माक म्परि समीप वासी च तस्य योग्यतां शिष्टता ञ्च वीक्ष्य वय मिता

म्प्रसीदामः। रत्नाकरस्य नव्याङ्के सम्पादकमहोदयेन विलिखितः 'होलिका सम्मेलन' मित्याख्यो लेख एकः प्रकाशितः, यस्मिन् सर्वेषां संस्कृतपत्राणां होलिकानिमित्तम्मिथः सम्भाषणम्परिकल्पितम् । लेखो हास्यरसपूर्णो यथा होलिकायां युज्यते, परंतु न सर्वेपि तत्र विन्यस्ता उपहासा रत्नाकर कलेवरे शोभन्ते । सन्ति तत्र केचिदतिग्राम्या उपहासा ये रत्नाकरस्य देवभाषया पवित्रीकृतेषु पत्रेषु गङ्गारोधसि गोवधस्थानानीव न शोभन्ते । वयमेतेन लेखेन चतुर्वेदमहोदयस्य ध्यानमत्र विषये व्यापारयितुमिच्छामः ।



## अशुद्धि सुधारणा

उषाया द्वितीयाङ्के पं. नृसिंहदेवशास्त्रिण ईश्वरविषयके निबन्धे यत्प्रथमम्पद्यमासी त्तत्र 'बम्भ्रमन्तीहविश्वे' इत्यस्य स्थाने बम्भ्रमीतीहविश्वम्' इतीष्यते, पाठकै स्तथैव संशोधनीयम् ।

सम्पादकः

## × उषाया नियमाः ×

१ "उषेति„ नाम्ना गुरुकुल विश्व विद्यालया त्पत्रिकैका प्रति
संस्कृते प्रकाश्यते अस्यां खलु वैदिकं साहित्य मुपजीव्यानवनवाः
प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता
आविष्कारा यथायथं वर्णयिष्यन्ते। किंच सभ्यजगतः वर्त्तमा
लनोपन्यासपुरः सरं तत्र सम्यगालोचनापि विधास्यते। अयं खलु
सर्वतोप्यधिकोयं विशेषः यदस्यां धार्मिका गुरुकुल विषय
लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा
चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम र्थाव
काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या
मल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम्
षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासिकं च मूल्यमष्टावाणका
एकस्याङ्कस्य मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्
ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अंक ] वी० पी० द्वारा न प्रेषयि
आदर्श संख्यां मभीप्सुभिः पत्रेणसह स्वयेमद्याणकद्वयस्य शुल्कपः
[ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न
दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। त
प्रेषितपत्रेषु ग्राहकसंख्या अवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहक
शयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा ते
प्रागेव विज्ञापयितव्याः। विपर्य्यये यद्यस्माभिः सप्ताहद्वयं पर्यन
चिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन
प्रेषयिष्यते।

५ लेख विषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्ध
यत् श्च प्रबन्धकर्त्रैत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः।
कानि विज्ञापनानि न जातु स्वीकरिष्यन्ते।

प्रबन्धकर्त्ता उषा

डाकघर

* ओ३म् *

# उषा

संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।



काङ्गड़ी गुरुकुल-यन्त्रालये श्री ... मुद्रिता

॥ ओ३म् ॥

विषय सूचिः

ओ३म्

# उषा

| प्रथमे वर्षे | तिथि १९७१<br>... ... वैशाख मासः ... ... | पञ्चमो मासः |
|---|---|---|

## वैदिकरत्नानि ।

### एक एवेश्वरः ।

त्वमग्न इन्द्रो वृषभः सतामसि
त्वं विष्णुरुरुगायो नमस्यः ।
त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते —
त्वं विधर्त्तः सचसे पुरन्ध्या । ऋ।२।१।३

हे अग्ने ! त्वं श्रेष्ठानां सुखवर्षकः इन्द्रो ऽसि, त्वमेव बहुभिर्गीयमानो नमस्कारार्हो विष्णुरित्याख्यया ख्यायसे । हे ऐश्वर्यस्वामिन् ! वेदानाम्पते ! त्वमेव ब्रह्मेति ब्रह्मविद्भि र्निगद्यसे हे लोकानान्धारयितः ! त्वं महत्या धिया, महद्भिश्च कर्मभिर्लभ्यसे नान्यथा ।

त्वमग्ने राजा वरुणो धृतव्रत—
त्वं मित्रो भवसि दस्म ईड्यः ।

त्वमर्यमा सत्पतिर्यस्य सम्भुजं
त्वमंशो विदथे देव भाजयुः । ऋ।२।१।

हे अग्ने ! त्वञ्जगतां शासकः पालकश्चासि । अतएव वरणीयो देवः कथ्यसे । धर्माणान्धारयितः ! स्नेहशीलो मित्रस्त्वमेवासि । श्रेष्ठः स्वामी सुखस्यदाता अर्यमा त्वमेव श्रूयसे। हे अंशो ! हे तेजस्विन् ! सर्वेऽपि देवा ज्ञानलब्धये तवैव भागस्य सहास्वादं कामयमाना आसते। आनन्दैषिणस्तवैव पदमधिगन्तुं विचेष्टन्ते।

त्वमग्ने त्वष्टा विधते सुवीर्यम्
तव ग्नावो मित्रमहः सजात्यम् ।
त्वमाशुहेमा ररिषे स्वश्व्यं
त्वं नरां शर्धो असि पुरूवसुः। ऋ।२।१।५।

हे अग्ने ! तेजःस्वरूप जगदीश्वर ! सुवीर्यं विधते पराक्रमवते जनाय त्वं त्वष्टाऽसि । पराक्रमशालिनामपि पराक्रमाभिमानस्य शातयिताऽसि । हे ग्नावन् कवे ! हे मित्राणां जनानां महनीय ! वयं तव सजात्यम्भजेम। त्वमिवानन्दभाजो भवेम। त्वमाशुप्रेरकः सन् साधु धनम्प्रयच्छसि । नराणां महैश्वर्यशाली बलिष्ठो रक्षिता त्वमेवासि । त्वयैव प्राणिनो बलवन्तः, नान्यस्य कस्यापि बलेन

त्वमग्ने रुद्रो असुरो महो दिवः
त्वं शर्धो मारुतं पृक्ष ईशिषे ।

त्वं वातैररुणैर्यासि शङ्गय –
त्वं पूषा विधतः पासि नुत्मना । ऋ०२।१।६

हे अग्ने ! दुष्टानां रोदकत्वात्तव रुद्रे त्याख्या जगति प्रसिध्यति । सर्वभूतानाम्प्राणरूपत्वात्त्वमेव हि असुर शब्देनाभिधीयसे । द्युलोकस्य प्रकाशं, मरुतो बलं च संपृच्य त्वमेव कर्मणि नियोजयसि । हे शङ्गयः ! सुख प्रापक देव ! त्वमेव वातैश्च दीप्तमद्भिः पदार्थैश्च यासि । वायोरग्नेर्वा गतिस्तवैव गतिः । त्वमेव सर्वेषाम्पोषकत्वा त्सत्कर्माणि कुर्वतो जनानात्मशक्त्या तारयसि ।

एतैर्मन्त्रैः किल भगवानेक एव देवः स्तूयते । सहि मुख्यो-जगदीश्वर एकोऽपि सन्ननेकविधधर्मयोगादनेकाभिर भिख्याभिराख्यायते । न नाम्नामनेकत्वात्तस्य भूतभावनस्यैकस्य बहुत्वमवधारणीय, नापि तस्य विविधरूपै र्मानुषदेहेऽवतारः कल्पनीयः । सह्येक एव, एक एव, एक एव ।

———

# कथाप्रतिज्ञा यौगन्धरायणे

सिद्धसारस्वतासाराः जयन्ति कवयः सदा । वाक्सोपानमुपा-
यिषां गाथा सुधीयति ॥

गते कस्मिंश्चिदुषाया अङ्के समालोचितचरायम्भा-
पुनरपि विशेषशिल्पादिहेतुकतया पुनः प्रवृत्ते मेनस्तुपा-
ङ्कुरत्वाद्द्राग्विचारपदवीम्प्रसभमाक्रामति । सहृद-
नां मनांस्यपि पौनः पुन्येन बाला रसरसनपटवः स्वा-
मिव तदेव पुनः पुना रसयन्ते । कविकुलचूडामणिनापि
सकलकाव्यविशेषवेदिन्यां सदसि समुद्भासितः कव-
म्भासः कवि र्न विदितः । तस्यैव प्राचीन नाटके पुरसायनम-
प्रतिज्ञायौगन्धरायणस्य अथवा तत्प्रणेतृललटिका-
प्रति ज्ञा नाटिकायाः कथा भाग म्परिचाययितुम्प्रवर्तामहे
भारते वर्षे अवन्ति देशस्यराजा महासेनः प्रद्योतापरनाधेयो
कमण्ड लनिषेदितः सम्य ङ् नियन्त्रितोराजधानी म-
रते । तत्प्रतिद्वन्दी च तादृश पराक्रमः कुल क्रमा गत ग-
विद्यावदातचरितो वत्सदेशनरपति रुदयनोवत्सरा-
परनामधेयः कौशाम्बी नाम राजधानी मध्य तिष्ठत् । महा-
यमवन्तिराजः स्वकीयसनन्य शतुम्बलेनाभियोक्तु
मर्थ शक्लेनै नाभियोक्तुमान्नयाञ्चकार । अतो निर्जनवने श-
तं वत्सराजं व्याजेन [illegible] निग्रहयितुं व्यचिन्तयत

औषींश्च यदुदयनकुलक्रमागतगान्धर्वविद्यानिष्णातः काले कान्तारमटितुं मृगयापदेशेन गजयूथं वशी कर णाप देशेनागच्छति । एवं गुप्त सौहार्दान्तर्भावित पुरुषैस्तत्रागन्तुन्तऽप्रेऽयन् वन सीम्न आएदेकं कृतकं हस्तिरूपं निर्माय कृत्रिमावयवै निंपुणं संयोज्य नाना तरु गुल्म तथाऽ विस्पष्ट विषये स्थपायामास यतो हि वत्स राजस्तन्त्रीरव माकर्णयन्तमप्य नागतं हस्तियूथमवगत्य भृशं क्लान्तः स्वयमेव तत्रैति तत्रचते ष्वेव गहन तरुषु महती म्पदाति सेना न्निभृतां महद्वैशसमाचरितु न्नियोजयाम्बभूव । आत्मनश्च शालङ्कायनन्नामामात्यवर्यं राज्ञा साकं यथोचितोपचारमाकलयितुं न्ययोजयत् ।

एवञ्च मृगया मनु भवितुं समुपजात कौतु को वत्सराजो ऽन्येद्युः प्रत्यूष समय एव वाहनसुखायां वेलायां नर्मदापगावालुका निः श्रेण परम्परामवतीर्य तीरोपान्त रमणीये कीचकवने प्रमदावरोधमावास्य गजसम्मर्दनिमर्दन पटुना वलेनानु द्रुतो मग्नमदयन्तिकया वीथ्या नाग वनम्प्रययौ । ततो निवेश मा विष्टासु कि श्चत्काल मन्वेकः शङ्किता कलितवेशविशेषो नृप वर्यस्य सविध माजगाम ।

भूपस्तं शत मुद्रा विश्राणनेन संतोष्य मुहुगज यूथमवधारयितुं व्यग्रः समजनि ततो मुहूर्त स्थित्वोवाच—अयं श्यामलिततनुर्गज समूहो हस्ति शिक्षायामनुत्तमतमः पठ्यते । इतिनैवमेवं करगतो भविष्यति अहमेव वीणाद्वितीय एनमानयामि एवंभाषितवतिभूपाले

भव्यभावुको रुमण्वानमात्यः करसरोजपुटसम्पुटितनिटिलो
विज्ञापयामास—"सामन्तचक्रचूडाचुम्बितचरणाङ्गुलीरन्ध्रभाग
अस्त्येतच्छङ्कास्पदम्, निर्जनेऽस्मिन्प्रदेशेऽवश्यम्प्रच्छन्नैरारातिभिर्भा
म्"एवन्निवेदितो राजा नीलवलाहकाद्रुज पुङ्गवादवतीर्य
पाटल नामानमश्ववर्य माख्यानर्धागते गभस्ति मालिनि विश
पदातिभिः परिवृतस्तदपेत्य ययौ। ततः सुदूरमप क्रामन्वत्सरा
नाति नेदीयस्येव बहल सालत रुच्छायायां सावर्ण्य नया नृपलः
माणवत्यन्ततनुं सुधाकरसितेन रदनयुगलेन गजं निर्वर्ण्य गान्
विद्याधिदेवता म्मनसा चिन्वन् करकलित विपञ्चिकामनुशी
यितु मारभत। ततो विपञ्चि कालाप समकालमेव गहनान्तराद्
तो महान्कलकलः सर्वे च पत्तयो राजानं परिवार्य कलकल
धारयितु मुपचक्रमुः। यावत्सकृत्रिमो गन्धगजः सहैवोत्तरी
धीयैः प्रत्युज्जगाम। वीरवरो वत्सराजो भयस्थानं शङ्कमा
"नूनम्प्रत्यर्थिप्रयोग एष"इति मुहुर्मुहु राकलयन् न भेतव्यन्भो
व्यमित्येवन्तानाश्वास्य अहमेवारा ति कुलन्नमशेषंकरोमीति सोऽसि
म्पुरः सरन् नातिचिरेणैव सालकुञ्ज माजगाम। प्रविश्य च कृपा
पाणिश्चिरं युयोध। प्रहारपतिततुरङ्गमश्च शिथिलाङ्गो निष्पपात-
नानाविधरज्जुभिः प्रत्यर्थिभिः स तदा नियन्त्रितः। किञ्चित्काले
चैतन्ये राजनि, अनेन मे भ्राता, अनेन मे पिता, अनेन मे सुत, इत्या
विशेष भावनात्रस्ताः प्रतिभटाः पापा इव पलायाञ्चक्रिरे। ते
मेकः कृपाणपाणिर्वत्सराज म्प्रत्यकार्य कर्तुमधावत्। परमसङ्क
रण्यां भुवि पतित्वा मृतः। ततः प्रद्योतस्यामात्यः शालङ्कायन
वत्सराजं प्रणम्य पाशबन्धनान्मुमोच। गाढप्रहारजातदुः
पर्यङ्किकामारोप्य प्रद्योतराजधानी म्प्रति प्रस्थापयामास। इत

वत्साधीशस्यामात्यो यौगन्धरायणः क्षपणकवेशेनो ज्जयिनीं प्रविश्य कारागारस्थमपि भूपं सर्वन्तेषाञ्जीति भेदं विज्ञापयामास । प्रद्योतस्य कन्यायाः प्रेम वत्सराजेन सहोत्पन्नम् । यौगन्धरायणेनो भावपि गूढवर्त्मना प्रस्थापि तौ स्वयं चतयो निर्गमनार्थं शत्रुसैन्ये प्रविश्य युयोध । एवं सन्तीर्णप्रतिज्ञश्च बभूव

कुशाग्रः

एवं यदि पाठका नाटक कथायां समुत्पन्न कुतुका भविष्यन्ति तदन्येषामपि नाटकानां रोचककथाभागेन पाठकाः साल्हादा भविष्यन्ति ।

लेखकः

---

## मूर्तिपूजोपक्रमकालः

केचन मनीषिणः बुद्धधर्म्मा न्मूर्तिपूजासमुद्भूता मुद्भावय परंनेयं मदीया मतिः। अहंतु तां महाभारतकालेऽपि वर्तमा मन्ये। तत्र संस्कृतग्रन्थेभ्योऽत्र प्रमाणान्युपन्यसितुं नाह यासं सहिष्ये। यतो नः विसंवादिनः तानि प्रक्षिप्तानीति साहसिनः, त उत्तरं प्रति वक्तुमसुमेवमार्गं परिग्रहीष्यन्ति अतोऽहं तस्मिन्पथि प्रवर्तिस्ये यत्र न गतिः मम प्रतिपक्षि यश्च प्रमाणकुसुमैः निचितः संशयकन्टकादिभिर कीर्णः, यत्रचान्धमतीनांन प्रसरः, यत्र च मृत्पिण्डकुबुद्धीनां प्रवेशः, सत्यमेव च यत्र स्फुरति, मूर्तिपूजायाः प्राचीनताय निरवशंका भवति।

( १ )

बुद्धधर्म्मः देवानां प्रियदर्शिनः अशोकस्य समये राज्य त्वं प्रतिपन्नः। तेन राज्ञः अशोकस्य निष्करुणं हृदयं तथा जितं येन स आत्मानं बुद्धधर्म्मेऽभिषिच्य सर्वभूतान्यात्मनां कम्पया सम्भावयामास, बुद्धधर्म्मप्रचाराय च बलीयः प्राय तत्प्रयासाद्बुद्धधर्म्मः संसार धर्म्मः संवृत्तः। अशोकात्पूर्वं ब्राह्मणानां धर्मेऽप्रतिहतं साम्राज्यमासीत्। त एव न्याय रः, तएव धर्म्मोपदेष्टारः, अभवन्।

चन्द्रगुप्तः मूर्तिपूजकः आसीत्, स यवनानां मूर्ति तथैव यत् यथा च ब्राह्मणानां, वाहीक देशः यवन मन्दिरैः परि ऽलङ्कृतोऽपि सर्वमपि यवनलेखकैः पविस्तरमुद्लेख,

च इदमपि तैः प्रादर्शि यथा किल अलक्षेन्द्राक्रमणे तैः भारतीयाः हरि कृष्णस्य मूर्त्ति रूपा समानाः दृष्टाः– रोमक वासिनश्च शक्रासुरदलस्य, अन्येपाऽज्ञ भारतीयदेवीदेवतानां चित्राणि ईसोत्पत्तेः पूर्वमेव आत्मनः वस्त्रेषु गृहेषु प्रासादेषु च सर्वत्रैवाङ्कयन् इति बहवः पाश्चिमाः स्वग्रन्थेऽवर्णयन्. एवं सति मूर्तिपूजोपक्रमणदोषेण बुद्धधर्माभियोजनं अभियोक्तुः अज्ञत्वं प्रकटयति

( २ )

बौद्धानां ललितविस्तारनाम्नि ग्रन्थे बुद्धस्य उत्पत्त्यनन्तरं वरुणादीनां मूर्त्यभिमुखं गमनं प्रदर्शितम्। तथैव चावदानशतकस्य षष्ठेभागे वय मवलोकयामः–

"स गृह पतिरितिपुत्रस्य वच आकर्ण्यसर्वदेवेभ्यः पूजां कृतवान्
" सर्वब्राह्मणतीर्थकपरिव्राजकेभ्यो दानं दत्तवान्. तथापि तस्य
" रोगशान्तिर्न भवति। तदा तस्य महान्मानसं दुःखमभूत्।
" सर्वदेवेषु पूजा कृता दानमपि दत्तं पित्रा मम। तथापि स्वस्थः
" न भवति। तदा स बुद्धं नमस्कर्तुं प्रारब्धः;

अनेनापि मूर्तिपूजायाः आरम्भः बुद्ध धर्मेणजात इतिन मन्येतुं सक्न्तेमनीषिणः

( ३ )

बुद्धस्य जन्मग्रहणात्पूर्वमेव यूचिजातिः भारते प्रभाव मध्यगच्छत्। सा मूर्त्युपासिकानासीदिति कोऽहिनामजडचेता-इतिहासानभिज्ञः प्रतिपादयितु मुत्सहेत। एवंसति बुद्धधर्म्मात्मूर्त्तिपूजोपक्रमणं

सिकतायां तैलोद्भावनमेव नत्वन्यत् । नहि निर्दोषिणं दो साधयितुं प्रयतन्ते न्यायप्रियाः समदर्शिनः विद्वांसः ।

( ४ )

डाक्टर हिग्गन महाशयः एकस्मिन्स्थले फ्रान्सविषये लि

" ईसोत्पत्तेः बहुकालात्पूर्वं निर्मिताः इमाः प्र इदं परिगहीतुं मां परवशं कुर्वन्ति यदासां म मनं भारतादेव जातं नत्वन्यस्मात्स्थानात्, एतासु गणेशस्य च लिङ्गस्य च योनेश्च नान्दी दीनाञ्च प्रतिमाः सन्ति यासां उपासना भारता न कुत्रापि जगत्यासीत् ।

( एनकैलिप्सिस भाग पृष्ठ १३० )

एवं मते बुद्धधर्म्मान्मूर्त्तिपूजोपक्रमणं नहि विद्वान्सः परिग्र मन्ते।अस्योपक्रमणे दोषिणःतएव उदरंभरयःलोभिनःभगवन्त णाः । येषां लोभस्य ॥ फलं इदानीमपि नः भारतं सा सदुःखं अनुभवति । तेच भविष्यत्यपि पापं कर्म कार नचेद्भारतीयाः महर्षिणा दयानन्देन निर्दिष्टं मार्गं प ष्यन्तिः—

प्राणनाथ

---

# ॥ प्रातः प्रदीपः ॥

## प्रणेता—श्रीगोविन्द शास्त्री

यातिं प्रकाममिह मे महिमेति मत्वा
प्रातः प्रदीप! सहसा शुचमद्य मागाः ।
योऽतिप्रतापवशतस्तव भामहार्षीत्
वीतप्रकाशदिशि सोऽपि भवे त्त्कदाचित् ॥

—१—

मित्रत्वमत्र भुवने प्रथितं हि भानो-
स्तत्तै च ते कथम भूदयमप्यमित्रः ।
कुत्रापि सन्तु नियतं गलितश्रियस्तु
शत्रूयते निहत दीप ! सुहृच्च तेषाम् ॥

—२—

श्रुत्वा जगद्गुरुमुखादखिलास्थिरत्वम्
मत्वा च मित्र भचयैर्निशि तथ्यमस्मिन् ।
ध्यायन्निकाममयमत्युषसि प्रबुध्य
निर्वाणमेति दिन एव शनैः प्रदीपः ॥

—३—

नक्तं तमःकलुषितायजनाय भावान्
व्यक्तं प्रदर्श्य गुरुवद् गुरुकोपकारी ।

शक्तिक्षति झटिति याति निशान्तदीपः
प्रायोविपत्सु कृतिनोप्यनुयाति कष्टम् ॥

—४—

यावद्विपोः स्थितिरभूदयमेव ताव-
च्छायोधने तमहितं विहितं निहत्य ।
विश्राम्यतीव न विभाति विभातदीपः
तेजस्विनामपि चकास्ति सदा न तेजः ॥

—५—

# चाणक्यः

## प्रवासः

एवं कथं कथमपि प्रणयान्वितैः सरससरसितैर्भव्याशाद्योतकै-र्वचोभिः प्रियामाश्वस्य दारिद्र्योपहतमतिः चिन्तितमना विचार-पारावारपरम्परासु निममज्ज। इतो देवताराधनम्, इतः सब्रह्म-चारियायजूकसवनक्रियाः, इतोऽनवरत शिष्यनिर्वहा-गमनम्, इतो नानाशास्त्रमर्मोद्भेदनम्, इतोऽपराह्णवेलाभ्यागत-समर्चनम्, इतः उत्तानपाणिषु वनीपकगणेषु नानारसभोज्य-वितरणम् इतः कलहायमानकर्तान्तिकनिवहव्यूह्यमानरा-शिचक्रप्रबन्धसन्धानम् इतो नानावदातविद्याध्ययनाध्या-पनरतस्य परममहनीयस्यान्यगुरोस्तत्रभवतः सुगृहीतनाम्न स्तातपादस्य चरणकमलयुगलीनीराजनम्, इतो वासरावसा-नारुणायमानिवारुणीदिशमालम्बमाने सप्तसप्तौ संध्यावन्दनो पचर्या समर्चितनानाविहारेषु कलितकाषायाम्बराणां ल-म्बितशिखाप्रवालजनितोप पञ्चगोपचुम्बितमुण्डानां मुण्डित मुण्डानां नग्नकानां सुगतशास्त्रचर्यापरिचयः इतश्च शयन-भवनगतानां पुरवासिनां नानावाद्यकलितसप्तस्वरकलितीनां तालो लोलितकरवल्लिमण्डनकङ्कणानां तरङ्गोद्वेल्लितचरणा ङ्कलीयकनूपुरघुरुघुरुकशिञ्जाजनितविस्मयरङ्गस्थलीनां..........

पुरन्ध्रीणामनुपमाविस्पष्टनर्मालापः । इत्यहो सत्यपि दारि
पगमने नाकुलयते मनः । परमन्यतो हि नित्यधनापचयजनि
हृदयवैकल्यं शनैः सकलब्राह्मण्यकर्मसुविधानविगानभया
क्रामति हृदयम् । इतः प्रियावैकल्यं मुखरयति धन मुपार्जितु
विदेशादिकमटितुम् । इतस्तु विलीना विचार सन्ततिः पौन
पुन्येन हृदयं हंसीमानस मिवोपसर्पति । गच्छत्सु कतिपयगा
रात्रेषु कोणे कमपि प्रतिहतमंगलं विचार मुद्भावयन्ती प्रिया
धारप्लुतमुखी क्षणं क्षणं निभृतश्वासोच्छासविकस्वरल
विललाप । अहं च सहसोपजातरागो यावत्ता मपि वचो
म्प्रवर्ते, एक आकुलित हृदयो बालो धावन्नुटज द्वारि प्रविष्टः। मा
लोक्य चकितहृदयो मन्दिर मुपसर्पतो मम वृद्धतातपादस्याति तर
कुशकरांटकेन पादो विद्ध इति व्यज्ञापयत् । अहंच ससम्भ्रमं
मग्न मानसो यावत्तंप्रदेश मासाद्यावलोकयायि, पीड़ा जनित मू
विलुप्तहृदयं तातमीक्षे । कथं कथमपि मन्दं श्वसन् चतुर्भि जनैरु
प्य गृहन्नीतो यमराजसोदर्याणां वैद्यानां करग तोऽति मात्रंज
जर्जरित देहबन्धः स्वर्ययौ ।अहमपि यथा शास्त्रं दशमीं क्रिया
र्वाह्य काक्री गृहमधिवसन प्रभूतमुपायं व्यचिन्तयम् । अ
विदित्वागृहणीसहायः यावद्द्रव्य मादय प्राक्चिन्तितं प्रचुर
ननिकासं नन्दराज्यमेवोद्दिश्य प्रास्थिषि । मध्ये मार्गं परि
द्विज गृहाभ्या गतत्वं मनुभवन्तौ नानासौगतविहारानवलोक
तीर्थस्थानानि विशेषप्रीत्यानयनातिथीकुर्वन्तौ, स्थाने

पण्डितैः साधुभिश्च सह गोष्ठीसुखमनुभवन्तौ अतिमात्र मायाममार्गं पिबन्तौ इव स्वल्पेषु दिवसेषु कुसमपुरसमीप मा-वामागच्छाव । तत्रैव चैकस्यां नानासस्यश्यामलितायां कतिपय पल्लीसमलंकृतमध्यभागायामेकत्यांरम्यग्रामटिकाया मेकमति मनोहरं वृक्षनिवह परिवृतं घोषमध्यवात्सिष्व,राज्ञो दानावसरमप्रति-पालयितुं च व्यरमाव ॥

चाणक्यः ।

( क्रमशः )

# वैदिक नभसि दुर्दिनायितन्तत्र तरणेरावश्य

पाठकवृन्द !

कदाचित्तत्रभवन्तः शास्त्रीययाथातथ्यधौरेयाः शास्त्र धुरमप्यधारयन्तीं लेखिकाभासां माम् निश्चिन्वाना लेखन कालयापनमन्तरा कामपि परिणतिं नाध्यवसास्यन्ति, परं भाषणमपि रसातिशयव्यंजक मिति मन्वानाः 'सर्वसहा इत्युक्तिमपि कृतार्थयन्तोऽवश्यमेवातिस्तोकं लेखं स्वीकरिष्यन्त्याशासे ।

यद्यपि मया वेदोदधिपुलिनमप्यद्यावधि सम्यङ् न परं यो महिमा दविष्ठत एव मम दृष्टिपथमागतस्तेनैवाकृष्टचित्ता भवताम् पुरस्तात् किञ्चिद्विन्यस्तुमुत्सहे । मम व्यमेतत् " वैदिक नभसि दुर्दिनायितं तत्र तरणे रावश्यक यद्यपि साम्प्रतिका वैदिकाम्भोजवनविलासिनः विद्याचण युक्तास्तु तन्नभोमण्डलं सर्वतो मेघाच्छन्नं पश्यन्त्येव, ज्यानुगृहीतया मया यदल्पतरं दुर्दिनायितं दृष्टिगोचरी निवेदयितुं कतिपयैरुदाहरणैः प्रयतिष्ये ।

कश्चिदपि भिषगाचार्य्यः रोगं प्रतिकर्त्तुमशक्तः, याव म्भवनकारणानभिज्ञता भवेत्, एवं तदपहर्त्तुं दुर्दिनायित प्रथमं कारणमन्वेषणीयम् । यद्यपि विदुषामत्र

मतयः, परं यत् किंचिन्मया विचारितम् साध्वसाधु वा "वैदिक सिद्धान्तप्रदर्शक ऐतिहासिकपक्ष एवास्य मूलकारणम्" । तस्यचेयं विवृतिः

कञ्चन ऋषिं पार्थिवं वा लक्ष्यीकृत्य तद्दानं कर्म्म वा प्रथयितुमेकामाख्यायिकां प्रकल्प्य ऋक्सूक्तानि तदर्थोपयुक्तानीति प्रदर्शनमेव ऐतिहासिक पक्षस्य गूढाभिसन्धिरिति । तत्पोषकं चैतद् यास्कवचनमेपि " तत्र ब्रह्मेतिहासमिश्रमृङ् मिश्रं भवति" वैदिक सिद्धान्तानव वगम्य विक्रमोर्वशीयनाटकप्रभृति प्रणेतॄणां कवि कालिदासादीना मसम्बद्धप्रणयरचनाया वस्तुत ऐतिहासिकपक्ष एव निदान मभूत् ।

अत एव हरिवर्षस्थैस्तथाऽन्यैर्वैदिकसिद्धान्ता उपहासास्पदीकृता । तस्मादेव हेतोरस्मदीयाः प्राक्तना शबरा गोपालास्तथा आदिसृष्टौ संसारतत्त्वानभिज्ञाः प्रोक्ताः ।

तामुक्तिं पोषयितुमेव क्रमोन्नतिवादं पुरस्कृत्याशेषः संसारस्तैः स्वायत्तीकृतः ।

तत एव तात्कालिकयवनादिदेशीयानामेतद्देशीयैर्महर्षिभिः सादृश्यं प्रदर्शितम् ।

अत एव वेदार्थोऽसामंजस्यं गतः ।

अधुना एतदेव समालोच्यमस्ति, किमेतेषु दोषेषु ऐतिहासिकपक्ष एवत्याज्यः आहोस्वित्तत्पक्ष तत्त्वानभिज्ञतैव तद्दोषाणाम्

निदानमिति। अत्रोच्यते, यदन्यदेशीयैस्तथाधुनिकसायणा
ध्यादिभाष्यकारैश्च निरुक्तकारयास्कस्य तथा पूर्वमीमांसा
ष्यकर्त्तुः शबरस्य पश्चात्तैरैतिहासिकपक्षो न सम्यक् समव
तैः केवलं पूर्वकालिकवृत्तनिबन्धनमेवैतस्य पक्षस्योद्देश्य
मत्वा वैदिक सिद्धान्ता धूलिधूसरितां नीताः।

तेषां द्वित्राण्युदाहरणानि प्रदर्शयामि।

तेषु चाद्यं नयनपथगोचरीकुर्वन्तु तत्र भवन्तः। त
त्रिताभिधानो ऋषिः कूपे पतित स्ततो निःस्सतुमिच्छन्
क्तमेकं निर्मितवान्। तत्र सूक्तान्तरगत एष मन्त्रस्तत्रत्यमि
हासं स्थालीपुलाकन्यायेन प्रदर्शयति।

"सं मा तपन्त्यभितः सपत्नीरिव पर्शवः। मूषोन
श्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अ
दसी॥" यस्यैष स्थवीयान् भावः।

त्रितउच्चैस्तरां क्रन्दति, हे इन्द्राः! कूपस्यास्येष्टकाभिरा
पत्नीवत् सर्वतो भावेन पीडितोऽस्मि। हे शतक्रतो! यथा
वेष्टितं वसनमदन्ति मूषिकास्तथैव आध्यो माम् तव स्तोता
सन्तापयन्ति। हे देव आकाश! देविपृथिवि! मामस्मात्
न्निःस्सारयताम्।

उर्वश्यप्सराः तस्याः दर्शनान्मित्रावरुणयो रेतश्चस्कन्द
दभिवादिन्येषग् भवति।

" उतासि मित्रावरुणौ वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि

प्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवा पुष्करे त्वाददन्त ॥" यस्यैषभावाशयस्तैरुद्घाटितः ।

हे वसिष्ठ ! त्वमुर्वश्या मातुर्मनसो जातः, मित्रावरुणयोरात्मजोऽसि । अर्थस्ताभ्यम् पतिताभ्यामुत्पन्नोऽसि, भूपतनाशङ्कया विश्वेदेवास्तदभिधाना देवतारूचां पुष्करे (जलपूरणे कलशे) ररक्षुः ।

मन्येऽस्मिन् पतनमृषियुगलस्य तथाऽदृष्टश्रुतोत्पत्तिक्रमंचिलोक्यान्यदेशीयै रेष वेदार्थ उपहासविषयतामानीतः । एष इतिहासोऽपि प्रस्तुतं दुर्दिनायितं पोषयति । तद्यथा पैजवनसुदासराज्ञो विश्वामित्रः । पुरोहितो भूत्वा यज्ञे तस्मात् प्रभूतं द्रविणंगृहीवान् । गच्छन्तः स्तेना अपि तद्धनापहरणेच्छया तमनुधाविताः । तेभ्यस्त्राणमिच्छता शीघ्रंसायितम्, पुनश्च स शतद्रु विपाशयोः सङ्गमं प्राप्तः, ततश्च सङ्गमतः पारे गमनमतिकठिन मवलोक्य नद्यः स्तुताः,

यया स्तुत्या स ताभिर्गाधोदकाभिः पारं प्रापितः,
तदर्थ बोधक एवायम् मन्त्रः,

"रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्त्तमेवैः,
प्रसिन्धु मच्छावृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥"

अर्थः,

हे पूर्णोदका नद्यः ! स्वगतिभिः शीघ्रं निरुद्धा भवत । कौशिकोऽहं स्तोमि ।

श्रुत्वेदन्नद्यः प्रत्यूचुः,

"इन्द्रो ऽस्माँ अरदत् वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम्
देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम ऊर्वी।"
हे कुशिक पुत्र ! वयमिन्द्रेण वज्रबाहुना त्यजिताः, तस्य
ग्रहणे वृत्रे मृते सति पृथिव्यां निम्न प्रदेशा भूत्वा चलामः,
स एव वर्षाद्वारेणास्मानुदधिं प्रापयति। अन्ते च तामिः

प्रोक्तम्।

"आ ते कारो शृणवामा वचांसि, ययाथ दूरादनसा रथेन"
हे कौशिक ! याहि। स्वीकृता तव स्तुतिः।

एतान्येवोदाहरणानि प्रथमं समालोच्य पुन रन्या
लखिष्यन्ते। यथा ऽगस्त्यस्य देवापेः शन्तनोश्च वृत्तान्त
न्तत्र तत्र तत्त्वभाष्ये विन्यस्तम्। इदानी मैतिहासिकपक्ष
वेदार्थमीमांसां भवदीय संमुखं पुरस्करोमि, आशासे, तत्र भव
मान्या उचितांशमुररीकृत्य अनुचितांशं चोपेक्षया पश्यन्तो
राहीष्यन्ति।

पूर्वं ज्ञातव्यमेतत्-यद् वेदार्थान् सद्यः प्रभावोत्पाद
विधातुमृषिभी रीतिचतुष्टयेन मन्त्रार्था प्रदर्शिताः। यासां
द्वयेऽभिन्ने सति शैल्येव भिन्नेति प्रतीयते।

तद्यथा ऐतिहासिको याज्ञिक आधिदैवत, आध्यात्म
चतुर्ष्वेषु पुष्पफलवद्दैवताध्यात्मपक्षद्वयं वैदिकज्ञानस्य
फलमस्ति। अत्रशिष्टञ्च पक्षद्वयं तेभ्यो जिज्ञासुभ्योऽस्ति
शेमुषी वेदोक्तज्ञाने सद्यः प्रवेष्टुमक्षमा, केवलं प्रकल्पिता
यकाभिराशुतरं वेदार्थ मवगन्तुं शक्नुयात्, इममेव भावाश

समुखीकृत्य ऋषयो वैदिकसिद्धान्तान् मन्दबुद्धीनाम् हृदय-पटलेषु चित्रयितुं कल्पितेतिहासरूपेण वेदार्थं वर्णयामासुरिति ।

एतदेव प्रस्तुतस्यैतिहासिक पक्षस्य स्थितेर्निदानमिति । प्रमाण बाहुल्यमप्यत्र वर्त्तते । तद्यथा—

प्रातः स्मरणीयस्वामि दयानन्देन स्वकीयभूमिकायां यत्र तत्र विन्यस्ता ईदृग्विधा इतिहासाः । यथा गौतमाऽहल्ययोः प्रजापतेस्तात्पुत्र्याश्च,

परं सामान्या अनेन कथनमात्रेणैव न सन्तुष्टा भवन्ति, यत् वैदिकेतिहासाः प्रकल्पिताः सन्ति, केवलमार्य्यसमाजस्था एव श्रद्दधते, स्थाने च तेषां विश्वासः। परं तद् व्यतिरिक्तान् सनातनधर्म्मस्थान् तथाऽन्यांश्च वेदमूलकमिति स्वमतं मन्यमानान् प्रार्थये,यन्महर्षेर्दयानन्दात् प्राक्तनेन शबर स्वामिनापि एष एवाभिप्रायः ऐतिहासिकपक्षस्याविष्कृतः स आलोचनीयः । यथैकस्मिन् स्थले प्रश्नकर्त्रा पृष्टम् , वैदिकेतिहासोऽयम् कथं वेदनित्यतां न व्याहन्ति, यत् "प्रजापतिरेकदा यज्ञं प्रारब्धवान्, स च स्वकीयां वपामुच्छिद्याग्नौ हुतवान्, ततश्च प्रजाः सञ्जाताः" ॥ अस्मिन्नितिहासे शङ्कात्रयमुद्भावितम् । प्रथमा-प्रजापतिर्यस्मिन् काले जुहाव,तस्मिन्नेव समये मन्त्रोऽयम् निर्मितः। द्वितीया-न कश्चिदपि स्वकीयां वपामुच्छिद्य होतुं शक्नोति । तृतीया-ततश्चाजोत्पत्तिरसम्भवा । अस्मिन् शङ्काजाते प्रदर्शिते सति तत्र मान्यः शबर-उत्तरं प्रयच्छति

"नित्यः कश्चित् पदार्थः प्रजापतिः स्यात्, वायुरा आदित्योवा। स स्वकीयां मेघावयवरूपां वपामुच्छिद्य पार्थि जुहोति, ततश्च अजा इति अन्नादिकं जायते, ततश्च पशवोप्यु इति ॥"

अतः प्रतीयते यच्छबरस्वामी ऐतिहासिकपक्षस्य त्वाभिज्ञः।

वाचकवृन्द ! अद्यावधिकिन्तत्रभवन्तो नास्मिन् नि:शङ्काः संजाताः यदैतिहासिकपक्षः सद्यः प्रभावोत्पाद तथा जिज्ञासून् सद्यः प्रवर्तयितुं शक्नोति, यद्यन्यान्यपि प्रमाण जिघृक्षन्ति, तर्हि शङ्कराचार्य्यसमकालिकस्य पण्डितप्रवर कण्ठस्य महाभारतीयशान्तिपर्वटीकां विलोकयन्तु

तेन तत्र विन्यस्तं,"आख्यायिकानाम् स्वार्थे तात्पर्याभा कश्चिद्विधेयोऽर्थ उन्नेयः" ॥

वैदिकाख्यायिकाः शब्दार्थं न बाधयन्ति अपितु लक्ष्या बोधयन्ति। अत एव सविनयं निवेदये, तत्र भवन्तो वैदिक नाङ्गणे दुर्दिनायितस्य निदानमपनेतुमैतिहासिकपक्ष उदाहरणानाम् समालोचनां कर्णावतंसीकुर्वन्तु।

प्रथमेतिहासस्य समालोचना स्वयं यास्कमुनिना स्वकीय विहिता "त्रितस्तीर्णतमो मेधयेति" त्रिताभिधानो व्यक्ति वि नास्ति। परं योमानवः मेधयाऽनुगृहीतः, सएव त्रितो भवि क्नोति।

अत्युत्तमजिज्ञासूनाम् भावा कीदृशः स्युरिति इममाशयं प्रदर्शयितुं मन्त्रोऽयमृषेर्हृदयपटले परमात्मना प्रादुर्भावितः। यस्यायम् भावाशयः,उत्तम जिज्ञासवः कूपोऽयमिति संसार स्तथा सांसारिकघटनाकूपस्येष्टका इति । मानसिकवासना मूषिकवत् योऽन्नवेष्टित वसनमुद्दिश्याति, तथैव जीवात्मनः सन्तापयन्ति इति जानन्ति ? ततश्च त एव विचार्य्य ब्रह्मनिष्ठानामन्तिके यान्तु प्रार्थयन्तुच ।

हे संसार तत्वाभिज्ञाः। निःस्सारय न्त्वस्मानपि संसारकूपादस्मात् अतएव सूक्तस्यावासाने जिज्ञासुनीश्वरोबोधयति । तेपरमधामस्याश्च भवन्तीति लिखितम् ।

एवमेवद्वितीयस्येतिहासस्य भावार्थो ऽयमिति । उरु अभ्यश्नुते उरुर्वा वशोऽस्य ।

अर्थः । विद्युत् शीघ्रगतिस्तथा तदधीनानि बहूनि कार्य्याणीति प्रदर्श्य उर्वशीशब्दो विद्युतः पर्य्यायवाचीति स्वष्टतया निरुक्तेलिखितम् । "अप्सरा अपसारिणी भवति" ।

विद्युत उत्पति कारणमप्यत्र प्रदर्शितम्, सा जलेएव बाहुल्येन वर्तते, सा दर्शनीया नतुभोग्याऽस्ति। अस्या गुणा उपयोगाश्च अग्रिममन्त्रे प्रदर्शिताः ।

"विद्युतोज्योतिः परिसंजिहानं मित्रावरुणायदपश्यतांत्वा"
तत्तोजन्मेतैकं वसिष्ठागसयो पश्चाविश आजभार"

अस्य भावाशयोऽयम् । संघर्षणजातं विद्यु,ज्ज्योतिर्वस्तुजाते

बहुविधं चेष्टते तन्मित्रावरुणाभ्याम्, तत एवाग
स्तं वसिष्ठं भूमावानयति। यन्त्रादिषु उत्पन्नो विद्युतोऽशनि
स्त्वकार्य्यं विदधाति सएव वसिष्ठाभिधानः। अतएव पदार्थवे
त्तृपुरुषा विश्वेदेवा (अखिला देवताः) त्वाम् वासिष्ठमसि
तं कार्य्यानुष्ठानार्थं धारयन्ति।

अथावशिष्टौ मित्रावरुणौ विवेचनीयौ। तत्रैतरेयब्रा
प्रमाणं पुरस्कृत्य केचिद् भणन्ति—

निशादिनमेव च मित्रावरुणशब्देन अभिधीयेते। त
"अहर्वै मित्रो रात्रिर्वरुणः" अथवा मित्रावरुणशब्देन
विशेषो गृह्यते ययोर्बलेनाभ्रवृन्दस्य परस्परं संघर्षणं जा
ततस्ताभ्याञ्चोत्पद्यते विद्युज्ज्योतिरिति। नात्र सन्देहः
एवाप्सरो ऽपरपर्य्यायभूताया विद्युतो वसिष्ठजन्मकार
द्यत्वे हरिवर्षस्था प्रयतन्ते। तत्परीक्षणार्थञ्च वितस्ताया शत
जलप्रपातप्रपातनाय परीक्षयन्ते। परममद्यापि न सफलीभू
आशासे तत्र कृतकृत्या भविष्यन्ति।

# अत्र तत्र सर्वत्र

## संस्कृतसाहित्यसम्मेलनम्

हरिद्वारे ऋषिकुलाख्यमेकं विद्यास्थानं विद्यते यत्र पौराणि क्रमथानुसारं बालकानां शिक्षणं क्रियते । ज्येष्ठमासस्यशुक्लाष्टम्यां भौमवारे तस्य कुलस्य वार्षिकोत्सवो भविष्यति । तस्मिन्नवसरे संस्कृतसाहित्यसम्मेलनाख्य मेकं विदुषां सम्मेलनं करिष्यते तस्मिन्नेव विविध प्रान्तेभ्यः समागतैः पण्डितैः गभीरा विचारपूर्णाश्च निबन्धाः श्रावयिष्यन्ते । तत्सहकारिमंत्रिणा श्री गिरिधरशर्म चतुर्वेदेन निमन्त्र्यन्ते सर्वेऽपि संस्कृत रसिका स्तस्मिन् मङ्गलावसरे समागन्तुम् ।

## शुक्रनीतिः

शुक्रनीति र्हि नाम संस्कृतसाहित्येविदितो ग्रन्थः । एवं श्रूयते यत्पुरा संयुक्त प्रान्ते तावदस्याः गृहे गृहे पाठोऽभूत् । किन्तु सम्प्रति विस्मृतप्रायेव साधारणजनैरियम् । येतु पश्यन्ति तेजानान्ति यत्सन्ति तस्या तानितानि नीति विचार रत्नानि यानि किलान्यत्र दुर्लभानि । श्रीमता ख्यातयशसा विनयकुमार सरकारेण तस्याः सुशोभित मेकं संस्करण माङ्ग्ल भाषाया मनूद्य प्रकाशितम् । तस्य प्रस्तावनायान्तेन प्रदर्शितं यथा नास्ति काऽपि विद्या भौतिकी सामाजिकीवा, यस्याबीजजातं स्मृतिग्रन्थेष्नुनोपलभ्यते । सर्वैरपि भारतगौरवं ज्ञातुमिच्छुभिर्द्रष्टव्यमिदमांग्लसंस्करण मिति नो मतम् ।

## संशोधितहितोपदेशः ।

गुरुकुल विद्यालये पाठनोपकाराय अध्यक्षै र्हितोपदेशस्य संशोधितं संस्करण म्प्रकाशितं,यद्धिच्छात्राणा मत्यन्तलाभकरम् । विद्यार्थिभिरनध्येतव्याः श्रृङ्गाररस प्रधानाः,अनुचिता वा सर्वाअपि गाथाः पृथक्कृताः । पुस्तकं बहूपयोगि, कन्याभ्यो विशेषतया सौम्यकरम् । गुरुकुलकार्यालयाद्उपलब्धुं शक्यते ।

# उषायाः नियमाः

१ "उषेति" नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशि... आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयि... किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरः सरं तत्र सम्यगालोचनापि विधा... अयं खल्वपरो महान्विशेषः सर्वतोऽप्यधिकोयं विशेषः यदस्यां धार्मिका गुरुकुल... श्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहा... ... येन मनागपि संस्कृतमवबुध्यमानानाम र्थावबोधे काठिन्यं न प्रतीं... ...मभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रचितमिति। अस्या वा... मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासि... मूल्यमष्टावाणकाः ॥) एकस्याः प्रतेः मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषण... ग्र ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श... मभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणी... प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषि... ग्राहक संख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रि... कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं शीघ्रमेव विज्ञापयितव्याः। यदि... ...स्माभिः सप्ताहद्वयं पर्यन्त काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीयाऽ... ...न्येन मूल्येन प्रेषयिष्यते।

५ लेख विषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयक... प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यः।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह प... ... कार्य्यः। अनुचित वि... पनानि न जातु स्वीकरिष्यन्ते।

**प्रबन्धकर्त्ता, उषा**
**डाकघर शामपुर**

Registered Numbre A. 639.


* ओ३म् *



# उषा

संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानिविश्वा । ऋग्वेदे



काङ्गड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता

॥ ओ३म् ॥

विषय सूचिः — पृष्ठम्

ओ३म

# उषा

| प्रथमेवर्षे | तिथि—१—१९७१<br>... ... ज्येष्ठ मासः ... ... | षष्ठो मासः |
|---|---|---|

## सम्पादकीया विचाराः

### विश्वविद्यालयेषु देवभाषा

राजकीय विश्वविद्यालयेषु संस्कृत भाषायाः अध्यापकै र्ये विद्यार्थिनः शिक्ष्यन्ते, ते खलु, संस्कृतज्ञानलवदुर्विदग्धा एव जायन्तइत्यत्र नास्ति कोऽपि संशयः। पठन्ति ते रघुवंशं, जानन्ति ते 'शाकुण्टलं' अपि स्पृशन्ति ते 'ॠग्वेडम्' परं किन्ततोऽधिगम्यते तैः? दूरे तिष्ठतु ताव त्संस्कृतकाव्यावबोधः, कथाऽपि न क्रियतां वा लेखनभाषणयोः, किन्नाम लभ्यमनया देवभाषयेत्यपि परिचयस्तेषा म्भृशमसम्भावित एव। परीक्षायामङ्कलाभाय आंग्लभाषा ऽनुवादा अपि यदि तैः स्मृतिक्रोडे निधीयन्ते,तदपि ननूदारचरितन्तत्रभवताम्। विश्वविद्यालया त्परीक्षाक्रमं समाप्य कृतकृत्याः सन्त स्ते संस्कृतपाठ्यपुस्तकानि, दुःखदमित्राणीति मन्वाना मित्रेभ्यो वा वितरन्ति, जीर्ण ग्रन्थविक्रयिणे वा समर्पयन्ति। हन्त! दीनेयं हीनेयं भारतधरणी, यस्याः सन्तति स्तद्गौरवभूतामप्राणरूपाञ्च सुरगिरं विमातरमिव परित्यज्य आङ्गलभाषां स्नेहमयीं जननी मिव समाश्रित्य तिष्ठति। परङ्कस्तत्रा-

पराधो विद्यार्थिनाम् ? "ननु यद्येतस्ः कुञ्जलीलां विडम्बयति तत्कस्य दोषेण ? ,, महात्मन इति वक्तुं कोऽप्युत्सहेत ! एवं विश्वविद्यालयस्थाश्छात्रा यदि देवगिरं गौणतयाऽधीयते, अधीत्यापि च न तदास्वादोपलब्धये शक्नुवन्ति, तत्र विश्वविद्यालयस्य शिक्षापद्धति रेवदूषणीया। सन्त्यनेकानि दूषणानि तस्यां शिक्षापद्धतौ यानि किल सकलमपि परिश्रमम्फल्गु मेव विदधति । तेष्वाद्यं तावदांग्लभाषाद्वारा संस्कृताध्यापन मेव। या भाषा संस्कृतेन केवलन्दूरतएव सम्बद्धा; साम्प्रतं यस्या स्तया सह समुच्चारणसाम्यमपि नास्ति, तया भारतीयाश्छात्राः संस्कृतं शिक्ष्यन्ते। इदमेव लोके गृहकोणम्परित्यज्य वने शय्या गवेषण मिति न्यायेनोच्यते । बङ्ग महाराष्ट्र गुर्जरादिभाषाः, विशेषतश्चार्यभाषा संस्कृतगिरा सह निकटसम्बन्धपाशेन सम्बद्धाः, कुतो न तासामाश्रयेण कालिदासादि कविमूर्धन्याना म्भणितीः स्फुटीक्रियेरन् । आंग्लभाषाया मध्यगतेन न भारतीयकवीनां हृदयगुहासु विद्यार्थिनः प्रवेष्टुं शक्नुवन्ति। ते केवलं जलप्रकटिततले तरन्ति । आंग्लभाषा प्राधान्यं भजते, देवगिरा च गौणस्थितिं याति । संस्कृत विद्यां विहाय केवलमांग्लभाषायां दत्तचेतसे विद्यार्थिने केवलमिदमेवोच्यतेऽस्माभिः—

जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त चिन्तामणि स्त्वया।

प्रार्थ्यन्ते च विश्वविद्यालयाध्यक्षाः संस्कृता ध्यापनस्यसुप्रबन्धं विधातु मितरथातु शिथिलसाधनैः विद्यावृद्धये प्रयतनं, 'महापातकैः स्वर्गाभिलाषतुल्य' मेव स्यात् ।

# वेदानां विचार गरिमा

एवं हि वेदानुशीलिनो महाबुद्धिशालिनः पाश्चात्यपण्डिताः कथयन्ति, यथा नास्ति वेदेषु किमपि तत्त्वम्। भवन्तु कतिचिदु-त्तमाः दार्शनिकविचाराः, सन्तु वा केचिदात्मसन्तोषिणो धर्मोप-देशाः। अन्यत्र तु गायतां नृत्यताञ्च संगीतसहायभूता ऋच एवो-पलभ्यन्ते, नान्यत्किमपि। यज्ञेषु प्रयुक्ताः सोमरसाद्विनिमित्तकाः स्तोमा अपि केचिदुपलभ्येरंश्चेद्वहु मन्तव्यन्तत्। यदा तेषां सम-क्षतो बहुसंख्या आध्यात्मिका अधिभौतिका आधिदैविका वा गुणगरिमयुक्ता वेदार्थाः स्थाप्यन्ते, तदा तान्निर्मूलका इति कृत्वा निरस्यन्तिवा, केवलं ऋग्वेदस्य पश्चात्कृते दशममण्डल एव-तेषां स्थितिरित्याक्षिप्य समादधति वा। अङ्ग! किम्प्रतिविधेयन्तत्रे त्याकुलितचेतसो वेदानुगामिन ऊर्ध्वं मुखाः निबद्धश्वासा श्वासते। सावधानमालोडिते तु भगवति वेदे सर्वेऽपीदृशाः सन्देहास्तूलोड्डाय-मुड्डीयन्ते। नात्र वयं सर्वेषां वेदविषयकसन्देहानां निरासाय प्रयतिष्या-महे केवल, मेक मेवोदाहरणं प्रदर्शयितु मिच्छामः। एक ईश्वरः, सच प्रतिद्वंद्विरहित इत्येष सिद्धान्तः पौरस्त्यैः पाश्चात्यैश्च निःसंशय-मङ्गीक्रियते। ऋग्वेदस्य सप्तम एव सूक्ते वममेतौ मतावुपल-भामहे।

य एक श्चर्षणीनां वसूना मिरज्यति ।
इन्द्रः पञ्च क्षितीनाम् । ऋ। १।७।९

इन्द्रं नो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः । ऋ। १।७।१०

अत्र मुख्यो देव इन्द्रः, एकस्च केवलश्च कथ्यते। नात्र शब्दे वर्तते किमपि अस्फुटत्वम् । नापि अर्थे प्रतीयते किमपि वक्तव्यम्। एवं वेद प्रारम्भ एव जगदीशस्यैकत्वमुपलभ्यापि ये दशमण्डलस्यैव महत्वं गायन्ति, किमस्माभिस्तान्प्रति वक्तव्यम् ।

---

# रामायणे

## कस्य चित्पाश्चात्यस्योद्गारः

(समालोचनात्मकः)

अतितरामस्मि विस्मितोरामायणाभिधनिबन्धमाद्यन्तं पर्यालोच्य, बहुत्र स्थलेष्वस्य सन्दर्भशैली निकृष्टकोटिकानां पाश्चात्यकवीनां सरणिमनु सरति।

नखल्विद मल्पस्य गौरवस्य निमित्तं भारतीयकवीनाम्। यदि पुनरनेन कविना कियन्तं चिद्र अधिकमनेहसं परिश्रम्य अभ्यासपाटव मुपार्जितं स्यात्, नूनमय मुच्चकोटिमधितिष्ठत्सु कविष्वन्यतमतासादयेत्।

काव्यस्यास्य प्रधानं लक्ष्यं वानराणां महत्ववर्णन मेवास्ति। इदानीन्तनानां बोरवाल (BoRbal) नामकानां हिमवत्प्रान्तवासिनामसभ्यजातीयानां ते (वानराः) पूर्वपुरुषा आसन् इति प्रतीमः। अनार्यवानराणां लङ्काविजयो राक्षसानामामूलमुन्मूलनश्च काव्यस्यास्य वर्णनीयो विषयः। तदानीन्तना आर्या असभ्याः अनार्याश्च सभ्या आसन्।

रामायणे नीतिपूर्णाः कथा अपि काश्चनोपलभ्यन्ते। सुबुद्धिविरहे सम्भवतां दोषाणामपि निदर्शनाय यथाशक्ति चेष्टितं कविना, तथाहि—

कस्यचिज्जरन्मूर्खस्य राज्ञः चतस्रः स्त्रिय आसन्, अचिरादेव चाऽस्य प्रसूतं बहुविवाहरूपाया विषवल्ल्या अरुन्तुदेन फलेन,

यत् तासु अन्यतमा निपुणमतिः कैकेयी निजतनूजोऽन्नतिमभिल-
षन्ती असख्यममुं जरन्तं राजगवं कैतवेन प्रतार्य ज्येष्ठ सापत्न्ये
वने प्रवासितवती । सोपि ज्येष्ठो राजतनूजो भारतीयानां स-
भाव सहसुवा ऽऽलस्येनाभिभूतः स्वाधिकाररक्षोपायमवीक्ष्यै
प्रवयसः पितुराज्ञया वनं प्रतस्थे ।

सभ्याः ! अलसेनाऽनेन रामेण सह अतिप्रतापस्य तुरुष्कवं-
शीयस्यमहाराजाऽवरङ्गजीवस्य तुलना माकलयन्तु भवन्तः स्वान्ते
किंचित् । एवं कृते ऽनायासेनैवाविर्भविष्यतीदं तत्त्वं यदेतावन्तं काल
कथमिव मोहम्मदीया यवना भारतीयानध्यकुर्वन् ।

वनाय प्रतिष्ठमानो रामो युवतीं निजपत्नीमपि सहनिन्ये।
कार्येणानेन तदेव आपतितं यदेवंविधे ऽवश्यम्भावि । भारतीया
स्त्रियः स्वभावतो दुश्चरित्रा असत्यश्च भवन्ति । सीताया संव्यव-
हार एवात्र पर्याप्तं प्रमाणम्, यदियं मन्दिराऽलिन्दान्निर्गत-
मात्रैव पुरुषान्तराऽऽसक्तमनाः रामं परित्यज्य राज्यसुखभोगलि-
प्सया निःशङ्कं रावणेन सहाऽधिलङ्कमुपगतवती । बोधविधुरो
रामोपिरोदनमात्रशरणोद् वना वनं परिबभ्राम, इदमेव निमित्तं यद्
भारतीयाः स्त्रीणां गृहाद् बहि निर्गमनं नानुमन्वते ।

भारतीयानां जघन्यस्वभावताया लक्ष्मणो द्वितीयमुदा-
हरणम् । अस्य चरित्रं यथा चित्रितं कविना तेना ऽसौ कर्मवीर
प्रतीयते, यद्यसौ भारतादन्यस्मि न्देशे ऽजनिष्यत, नूनं कदाचि-
न्यतमो महापुरुषः समपत्स्यत, परं भारतीयत्वादेवाऽयम् आजन्म

न कदाचिन्महन्त्रायउदमनायतापि, केवलं रामस्य पृष्ठानुपृष्ठिकया विलसो यावज्जीवं कालमयापयत्, भारतभुवां जनिसहस्त्रो ऽक-र्मण्यताया एव फलमिदम् ।

अत्रचरिते ऽपरो ऽसभ्यो मूर्खताभरितश्च भरतो दृश्यते यदनेनाऽनायासलब्धं करतलगत मपि प्राज्यं राज्यं भ्रात्रे सम-र्पितम्, तत्वतस्तु निखिलमेव रामायण माद्यन्तमकर्मण्यानां मूर्खाणामितिहासेनैव पूर्णमस्ति, एतादृशं हि वर्णनं ग्रन्थकृता उद्दिष्टमेव ।

रामेण हापितायां पत्न्यां तस्यं दीनतापरिपूर्णायां कातर-तायां दयमानैरनल्पै र्वानरजातीयैः सवंशं रावणमुद्धृत्यसीता तस्मै समर्पिता, परं रामस्तु बर्बरजातिसुलभया नृशंसतया क्रोधा-भिज्वलितः सन ताम् (सीतां) अग्निसात् कर्तुं आक्रमत, दैवादे-वाऽसौ वराकी न तदा वियुक्ता प्राणैः, अनन्तरन्तु गृहमागतोऽयं कतिपयान्येवाहानि तया सह सुख मवात्सीत्, ततश्च कस्यचिद् वचने विश्वस्य जघन्यजातिसुलभेना ऽतिरोषेणाभि-भूतोभार्या तां गृहाद् विवासितवान् ।

अथाऽतीतेषु कतिपयेषु वत्सरेषु भोज्यानुपलब्धेः क्षुत्क्षामा सीता पुनरपि रामस्यान्तिकमाससाद । रामस्तु तद्दर्शनमात्रादेव समुज्ज्वलितः । असभ्यजातिषु बहुशएवंभवति । आपाततो रामायणस्येदमेवतात्पर्यम् । रामायणं केन प्रणीत मिति-तुनसुशकमध्यवसातुम् । परं जनश्रुतिरियं यदेतत् वाल्मीकिना

प्रणाति ... कांश्चिद्बन्धकारो आसीन वा,

इति महान् सन्देहः। वाल्मीकिशब्दो हि वल्मीकशब्दान्निष्पन्नो-ऽस्ति, तस्मिन्मतसम्मतौतु क्वचिद्वल्मीके प्रच्छन्नो ऽयंग्रन्थः समु-पलब्ध स्तेनास्येयं संज्ञा संजातेति।

रामयाणाभिधो हिन्दीभाषायामप्येको ग्रन्थो मया ऽवलोकितः, अयं तुलसीदासेन प्रणीतः ग्रन्थद्वये प्यत्रातिघनिष्ठंसादृश्यं दृश्यते तेन नेदमप्यसम्भवि यद् वाल्मीकीयं रामायणं तुलसीदासकृत-स्यैव रामायणस्य रूपान्तरगतोऽनुवादः स्यात्।

वाल्मीकिना स्वकं रामायणं तुलसीदासकृतरामायणा-धारेण निर्मित मितितु अतीव दुःशकंमीमांसितुम्—मयाऽपी-मनुभूयत एव—परं'रामायण' शब्दएवा ऽत्र दृढ़तरं प्रमाणम्, यतो हि संस्कृतभाषायां न रामायणशब्दस्य कोप्यर्थः सम्भवति, हि-न्दीभाषायान्तुभवत्येव।

एवंतावद नुमिनुमो यद्, 'रामायण' शब्दो, 'रामा' 'यवन' इति द्वयोः शब्दयो रपभ्रष्टं रूपान्तरमात्रम् केवलं 'व'शब्दो ऽत्र विलुप्तः। एवं हि प्रतीयते यदादौ तुलसीदासेन 'रामा' नामक-कस्यचिद् यवनस्य चरित्र माश्रित्य ग्रन्थस्य रचना व्यधायि, अन-न्तरन्तु केनचित्संस्कृते तदनूद्य क्वचिद् बल्मीके निगूहितम्, का-लक्रमेण च वल्मीका दुपलब्धोयंग्रन्थो बाल्मीकिनाम्ना प्रसि-द्धः।

रामायणस्य मया क्वचित् प्रसंशा ऽपिकृता, परमतोधिकंतु प्रशं-सितुंनाऽहमुत्सहे, यतोऽत्र बहुसंख्याका महीयांसो दोषगणा जाग्रतितराम्। आमूलचूलमयं ग्रन्थो ऽश्लीलताया आकर ए-

सीताया विवाहः, रावणेन सीताहरणंचेत्यादिकंहि कथमिव नाश्लीलं स्यात्, रामायणे करुणरसोऽतिविरल एव दृश्यते ।

केवलं वानरैः सेतुबन्धनमेव एकोरामायणे करुणरसाश्रितो विषयः । लक्ष्मणस्य भोजने च किञ्चिदिव वीररसोऽपि प्रतीयते, वसिष्ठादि महर्षिषु हास्य रसस्याभासः, महर्षयो हि अतीवकौतुकिनो रसिक पुरुषा आसन्, धर्मस्य मिषेण ते बहुधा प्रमोदाय परिहासान् विदधुः

रामायणस्य भाषा यद्यपि प्राञ्जलविशदा स्ति तथापि अत्यन्तमशुद्धा– तथाहि—

रामायणस्य एकस्मिन् काण्डे न कापि योधानां कथा वर्णिता, अतएव तन्नाम,अयोध्या काण्डमिति प्रायु ज्यत, अत्र ग्रंथकृता 'अयोद्धृकाण्ड' मिति 'अयोद्धृकाण्ड' मिति वा शुद्धं रूपमप्रयुज्य अयोध्याकाण्ड मित्यशुद्ध रूपं प्रायोजि, प्रचीन संस्कृतग्रन्थेषु एवं विधा अशुद्धयो बहुशः समुपलभ्यन्ते

वस्तुतस्तु साम्प्रतिका यूरोपीयपण्डितप्रवरा एव विशुद्धसंस्कृतस्य सर्वाधिकारिणः ।

---

श्री युत महामान्य बङ्किमचन्द्रचट्टोपाध्यायमहाशय लिखिताऽन्यतमलेखस्या नुवादः ।

---

## भारतीयाऽऽचारव्यवहारपारगामित्वम्

वाचकमहाभागाः! वाचंवाचमिमांवाचं प्रशस्यतां पाश्चात्यपुङ्गवानां विचारचारुत्वं, समालोचनकौशलं, संस्कृतज्ञान

गाम्भीर्यम्, अनाघ्रातेपि विषये ऽनधिकारचेष्टाधार्ष्ट्यं च परीक्ष्यता श्चैषां पुरुषाकारज्ञानोपायो, धर्मविश्वासो, लक्षण श्चासभ्यतायाः, मूलश्च निपुणमतित्वस्य । वयुन्तु स्वरूपव्याक्रियैव पराक्रियेतिभारतीयशिशूनामप्युपहसनीयमि- मं विषय मुपेक्षामहे । परं गौरङ्गगुरूणां गता- नुगतिकतयैव सर्वपथीनामुन्नतिमीहमानैः किमप्येतस्मात्शि- क्षणीयं स्यान्नवेति तु नाद्यापि तत्वतो विद्मः । शतशः प्र- शंसामश्च शब्दमयीं चित्रणचातुरीं चट्टोपाध्यायमहाशयस्य येन पाश्चात्येषु बहुत्र विकीर्णमिदं सत्यं संगृह्णता दर्शिता काष्ठा कौशलस्य ।

कवोष्णनिःश्वसिमश्च श्री मद्रामायणेएवमुक्त्वा यत्,
'आत्तं पक्वफलभ्रमेण, परितोदृष्टं, विलीढंमुहुः
घ्रातं, चुम्बित मन्ततश्च कुपितेनाऽऽक्षिप्तमप्येकतः ॥
हे माणिक्य ! तवैतदेव कुशलं यद्व वानरेणाऽमुना
अन्त स्तत्त्वनिरूपणव्यसनिना चूर्णीकृतं नाश्मना । १
विरमाम श्च पुनर्हृदयमेतेषामेवं प्रणम्य,
'उपकृतं बहुतत्रकिमुच्यते, सुजनता प्रथिता भवतापरम्
विदधदीदृशमेव सदा सखे ! सुखितमास्स्व ततः शरदां शतम्

इति

साहित्याचार्यः
श्री शालिग्राम शास्त्री

# भारते भाषैक्यम् ।

कस्मिन्नपि देशे जातिमेकामभिनिर्वर्त्तयितुं साधनत्रयमेव मुख्यत्वेन मेधावद्भिरुपन्यस्यते । तथाहि—धर्मैक्यं, भाषैक्यं, किंच राजनैतिकस्वार्थसाधारण्यम् । तत्र प्रथमं तावत् साधनं भारते अशक्यानुष्ठानकल्पम् । मतान्तरेषु विरोधवन्हेः बहुलमुदग्रत्वदर्शनादिति युक्तमुत्पश्यामः । नापि तृतीयं साधनं संभवति यवनानां भारतस्य मातृभूमित्वानभ्युपगमात् । तदत्र साम्प्रतं द्वितीयमेव साधन मवशिष्यते । तदर्थमेव विचारयितुं प्रवर्त्तामहे; आलोचयामश्च किमिदं साधनमस्मत्समीहितं सम्पादयितुमलं नवेति । अथापि चेदलं तत्र कतमाभाषा युक्तमुपादातुमिति । तत्र प्रथमं तावन्नान्तरेण भाषैक्यं यत्नान्तरशतेनापि जातीयतानिर्माणं संभवतीति निर्विवादमभियुक्तैरभ्युपगम्यते । कथंहि नाम भाषामेका मनाश्रित्य भिन्नप्रान्तीयाः परस्परं व्यवहर्त्तुं प्रभवन्तीति नावगच्छामः । ख्रिस्तानां वाईविल नामके धर्मपुस्तके अस्ति तावदेकं कथानकं यदेकत्र राजाज्ञया शिल्पिभिर्भवन मेकं निर्मातु मारब्धम् । तत्र हि शिल्पिभि र्यदुच्यते भारवाहैर्न तदवबुध्यते । यच्च पुन र्भारवाहै रुच्यते शिल्पिभिस्तन्नावगम्यत इति शिल्पिभिरिष्टकानयनार्थ मुच्यमाने भारवाहा मृदमानयन्ति, मृदानयनकाले चेष्टका इति वर्षशतेनाऽपि तद्भवनं न पारितं तैः पूरयितुम् अथवा किमेतावता दूरतो मगनेन । साम्प्रतमेव पश्यामः यदि कश्चन महाराष्ट्रीयः केनचित्पाञ्चालीयेन कंचिदालापं चिकीर्षति तदा तावुभावपिभिन्नप्रान्तीयत्वा त्प्रथमं तु नैव किंचिदालपतः, चिकीर्षन्तोऽपि आंग्लभाषयैव तत्साधयन्ति उभयोस्तत्परिज्ञानात् । अथ चेन्नताबांग्ल भाषां जानीत स्सदा मुहूर्त्तमपि न तौ परस्परं विचारान्प्र-

काशयितुं समर्थौ। हन्तभोः! यदा भाषैकापरिज्ञानाद्धेतो स्तौ साधारणमपि भावं प्रकाशयितुं न प्रभवत स्तदानीं राजनैतिक भावानां प्रकाशनं तु दूरापेतमेव। तदित्थं गते कैव प्रत्याशा जातीयतानिर्माणचिन्तायाम्। साम्प्रतं विचारान्तर मुपक्रमामहे। कानाम भाषा साम्प्रतं सार्वजनीना भवितु मर्हति। तदत्र भाषा-चतुष्टयमेवाधिकारमर्हति। आंग्लभाषा; संस्कृतम्; वंगभाषा, हिन्दी भाषा चेति। तत्रप्रथमं तावदांग्लभाषा मीमांसयितव्या। साहि खलु सर्वजनप्रचारमर्हति। कथमिति चेत्, ब्रूमः। प्रथमं तु तस्यां निरतिशयं साहित्यम् नहि तस्याः साहित्यं काऽपि भारतीया भाषा अणुमात्रेणाप्यतिशेते। अपरं च सा राजभाषेति वलादकामैरप्यस्माभि स्तस्याः समुन्नतौ सुमहान्प्रयत्न आस्थेयः। तथा चोक्ताद्धेतोः तस्याः अवश्यमध्ययनीयत्वाद्भाषान्तरे कृतः प्रयत्नः नूनं कालमेवातिपातयेत्। सत्यमेवमेतत्। तथापि आंग्लभाषायाः वैदेशिकत्वादध्ययनासौकर्याच्च तदध्ययनमाव-श्यकं कल्पयतो व्यर्थः प्रयासः स्यात्। तावत्येव हि काले स्वमा-तृभाषया ततो वहुतराध्ययनसंभवात्। अद्यत्वे प्रत्यक्ष मेवो-पलभामहे, यद्राजकीयविद्यालयेषु वर्षदशकेनाप्यांग्लभाषा मधीत्य ततोऽपि विद्यार्थिनोन पारयन्ति तस्यां यथा यथमधिगन्तु मिति। तत्कृतमेव सायास कारिण्यांऽग्लभाषया। तदेव मांग्लभाषा मिहैवो त्सृज्य संस्कृत माश्रयामः। ननु मा नाम भूवन्, आंग्लभाषाला-भाः, संस्कृतं तु सर्वथैवोपादेयता मर्हति। साहि खलु देववाणी-त्यभिख्यां भजते। प्राचां चाऽस्माकं मातृभाषा। पावनाः श्रुत-योपि तस्याएव महात्म्यमुद्घोषयन्ति। किंबहुना, षड्दर्शनान्यपि तामेव पावनी मित्याकलय्य तयैव प्रवर्त्तन्ते। कालिदासादीनामपि

तत्रभवतां निसर्गमधुरा वाक् तामेवाश्रयति । विद्यान्तराणि चायुर्वेदादीनि खलु भगवत्पूज्यपादैश्चरकादिभि स्तस्यामेव चरकादिषु संदर्भेषूपनिबद्धानि । किंच पुरातनः सर्वोऽपीतिहासः संस्कृतादेव शक्यः समुपलब्धुम् । तथा च सर्वस्मिन्नपि प्रायेण नैकमपि स्थानं यत्र जनाः संस्कृते नार्थमधिगन्तुमर्हन्ति । तदित्थंगते सर्वथाप्यस्योपादेयत्व मेवोपपद्यत इति चेत्, नेति ब्रूमहे । संस्कृतं हि साम्प्रतं सर्वथाऽपि व्यवहाराय न कल्पते, तस्याप्रयुज्यमानत्वात् । नहिखल्विदं कुत्रापि प्रयोगेधिक्रियते । सर्वथापि खल्विदं तेन तडागेन तुल्यतामापद्यते यत्र परीवाहो न प्रवर्त्तते । नहि संप्रतितनमभिनवं विज्ञानमणुमात्रेणापि शक्यं संस्कृतेनाधिगन्तुम् । किंच यत्किंचिदनूद्यतेऽपि भाषान्तरेभ्य स्तदपि महान्त मायासं जनयति । तथाच आंग्लभाषा मधीकृत्य यं काठिन्यदोष मुपरिष्टादवोचाम,स एव अत्राप्यापतति यथा घ नांग्लभाषास्माकं मातृभाषा, तथैव नेद मप्य स्मन्मातृभाषाभिधेयतां गच्छति । न चाद्यतनीनाभिर्मातृभिः सर्वस्मिन्नपि जन्मनि स्वप्नेपि संस्कृतस्य नामापि श्रूयते । तदित्थं गते यदि किंचिदवशिष्यते संस्कृताध्ययनप्रयोजनं तत्खलु प्राचामितिहासमुपजीव्यैव । नह्यद्यापि भाषान्तरेषु प्राचामितिहासः सामस्त्येनोपलभ्यते । किंच तैस्तैः कविभिः प्रणीतानि तानि तानि काव्यान्यध्येतुं प्रथमतराण्येव चेदधीयेरन्, तदतीव समञ्जसं स्यात् । तस्मादस्माभिः कानि चिदेव प्रयोजनान्युपजीव्य संस्कृताध्ययनं तथैव कार्य्यं, यथांग्लैलातीनी भाषाऽभ्यस्यते । तदित्थमिहैव संस्कृतं परित्यज्य भाषान्तर मालोचयामः । साम्प्रतं वंगभाषामाश्रयामः । ननु मा नाम भूत् संस्कृतं सार्वजनीनम्, बंगभाषा

त्वसंशयं संभवत्येव। नहि सा संस्कृतमिवाऽप्रयुज्यमाना दृश्यते। यदि अद्य हिन्दीभाषायां केचनाप्युपन्यासाः लभ्यन्ते ,तेखलु बंगो-पन्यासानुवादादएव । तदेवं सत्स्वपि बंगभाषा साधकेषु हे-किंचिदस्ति निमित्तं यत्खलु बंगभाषाप्रचारं सर्वथा निषेधति तद्धि बंगभाषायाः प्रान्तविशेषपक्षपातित्वम्। यत्रासौ प्रान्तविशेष-माश्रयन्ती भाषान्तराणां प्रचारमवरोद्धुं महान्तमभिनिवेशमुपद-यति,तत्र भाषान्तराण्यपि स्वस्वप्रान्तैकपक्षपातित्वादस्याः प्रचा-यथासंभवं वारयन्ति। यदि जातु बंगभाषायाः प्रान्तान्तरेष्वपि प्रचारो ऽभविष्यन्नूनं प्रान्तापरनिवासिनोऽपि जनास्तदर्थं प्रा-तिष्यन्त। इदमेव च गुजरातीप्रभृतीनां भाषाणां सार्वजनीनत्व-निमित्तमिति युक्तमुत्पश्यामः। तदित्थं भाषान्तराणामपि विचा-मुत्सृज्य केवल मार्य्यभाषा मालोचयामः।

ननु प्रतिषिद्धासु भाषान्तरासु किमित्यार्यभाषाया मपूर्व-पक्षपातः,यदनालोच्य भाषान्तराणि इयमेव विशेषादालोच्यते। यदि नाम प्रान्तैकपक्षपातित्वा द्विचारणायां तानि प्रतिषिध्यन्ते तदा आर्य्यभाषायामपि प्रान्तैकपक्षपातित्वं स्पष्टं पश्यामः। तस्मा-दियमपि सामान्येन प्रतिषिध्यताम्। अथापि चेदुच्येत, अस्याः साहित्यं भाषान्तरसाहित्यादतिरिच्यत इति तदपि नोपपद्यते निपुणतरं विभाव्यमानें आर्य्यभाषासाहित्यं साहित्यान्तरा-णां षोडशीमपि कलां नार्हति ,तदाऽस्य निरतिशयत्वापाद-तु दूरापास्तम्। नह्यस्यां भाषान्तरपुस्तकाना मनुवादा-प्युपलभ्यते, अभिनवपुस्तकानां निर्माणस्य तु कैव कथा तत्कृतमेव मनिष्टानुबन्धिन्या आर्य्यभाषया। एवंप्राप्ते ब्रूमहे आर्य्यभाषा सर्वत्रापि देशे प्रचार मर्हति,सर्वत्रापि तस्या अवबो-

धात् । अवबुध्यते हि सा बंगेषु, दाक्षिणात्येषु, मद्रासीयेषु चा विशेषेण । ननु सम्प्रत्येवार्य्यभाषायाः प्रान्तविशेषपक्षपातित्वमु-पन्यस्तं तत्किमिदं पूर्वापरविरुद्धं वचः । बाढम् । अस्तिहि मध्य-म्बु संयुक्तप्रान्तयो रार्य्यभाषाधिक्युं परं नैतावता प्रान्तपरेष्वस्याः प्रचारस्यापलापः शक्यते कर्तुम् । यत्पुनरस्या साहित्यमुपलक्ष्य उच्यते तत्र तावदित्थं प्रतिवदामः ,यत्प्रत्यहमेवमहता परिश्रमेण नवनवानि पुस्तकानि प्रकाश्यन्त इति त्वरयाभिनव पुस्तक प्रका-शनमात्रमेवास्याः उदयं गमयति । किं चातिमात्रमियं सुलभा-शिक्षितुमिति न तिरोहितं विपश्चिताम् । तदेवमापादिते सत्यार्य्य-भाषाप्रचारसंभवत्त्वे केवल मेतावदेवाभिदध्महे यत्परस्परं विचा-रान् संक्रामयितुं हरिवर्षप्रदेशे प्रवृत्तं "एस्परेन्टो" भाषापरकं प्रयत्न मनुकृत्यास्माभिरपि सर्वत्र भारते हिन्दीभाषैव सामान्येन प्रचा-रणीया । अयमेव हि पन्था अनुस्रियमाणः श्रेयसे स्यादपरथ तु महदनिष्ट मापद्येतेति दिक् ।

कश्चिद्

# चाणक्यः

## दिग्दर्शनम्

( ३ )

"नक्रोऽपि बलवाञ्छूरो धर्म मुल्लङ्घ्य गच्छति।
अणु रुल्लङ्घितो धर्म्मोऽवसाने भूधरायते ।"

प्राघुणिकतया न्युषिते मयि सर्वोऽप्यपरिचितजनो ब्रह्मोचि विचारतो मान्यदृष्ट्यै वातिथेय्यादिक मुपाचरत्। गच्छत्सुकतिपये दिवसेषु सभार्य्योऽहं तस्यैव ग्रामस्य साधारणकुटीरे निवासमरच यम् । प्रवाससञ्जातनित्यकर्मप्रत्यूहसमूहोऽपि शनकै रत्यक्र मत् । सौहार्दं प्रपन्नाश्च सब्रह्मचारिणः सह निवासो जातपरिचयविशेषाः काले सौहादितिशयेन जनपदं प्रस्था कामं माम् "अनभिज्ञ एवायं जनो विदेशस्थ्ये" ति विचिन्वन्तो मां चानुसरन्तो नवनवतिशतद्रव्यकोटीश्वरस्य महामहिम्नो राजवर्य्यस्य नन्दभूपस्यौदार्य दाक्षिण्यादि नाना गुणान् विवि धाभि र्भङ्गीभिरुपश्लोकयन्तः कादाचित्कविश्राणनमनस्तोपा वसरानप्यात्मनः सामोदमुपबृंहयन्तः कति नु कति वारान् भूयसा प्रेम्णा सकलस्यापि साधारणस्य हृदयप्रणयिनम कार्षुः । अहमपि जात्या विप्रः सदैव नीतिस्मृतिश्रुतिको तुकी सदैव स्वाध्यायेज्यादानादिभि रात्मनो धर्म्मोपचारं नि पुण मदर्शयम् । पूर्वतोऽनुभूता च सकलखेदवैवधिकीभूत दरिद्रता नितरां राजदक्षिणाभिः प्रभाभिस्तामिस्रपटली क्षणेन निलिल्ये । इतस्ततो भूयांसो विद्यालोलुपा व्रतिनो म

मैवैकं नयनिपुणमाचार्यं मांकलयन्तोऽति शयोत्साहेन मुहुः रपि मत्सन्न मात्कन मिवाकुर्वन् । एवं सुखेन सकला अपि नृपा अनीयन्त ।

एकदां तु समस्तदिवसव्यायामोपखिद्यमानरथतुरङ्गमसमूहे निजोष्मसंतप्यमानर्जजरितदेहभृत्तया ऽतिशयितप्रोज्जृम्भमाणसिःस्नासाऽभिभूते दिनक्रीडकसन्ताड्यमानपाटलकन्दुकायमाने,नक्तं दिवं विरहानललोहितायमानास्ताचलतनयायमाने ऽथवा पाःताल भूतलोभयलोकसेवापरिश्रान्ते वारुणीपिपासाकुलिते वरुणाःलयमालम्बमाने धरणीमतीत्यावाक् पतितुमुत्सुके तरणिमण्डले सन्ध्या रागपाटलितायाश्च वारुणीदिशि नियमानुसारं मधुतःक्रामत्रमादाय प्रियजनकापरोपोपद्रवजनककुशान् प्रतीकारबुःद्धया मूलत उच्छेत्तु महं प्रास्थित । एकैकशश्च प्रतिकुशं प्रतिमूलं तक्राद्यभिषेकेणात्मानं कृतार्थमकरवम् । यावदहं सहसा चतुर्दिगन्तावलोकननिपुण स्तिष्ठामि किंचिदश्वचङ्क्रमःणमभिनिरूपयितुं, तावेदकः प्राचीदिशि पाटलिततुरङ्गमधिरूढः सन्ध्यासंदीपितकर्पटकपरिधानो जगन्नियममुल्लङ्घयन्नेकः तुरगाधिरूढोऽपरभास्कर इव महतावेगेननेदीयस्तरमागच्छति । क्षणेन च खरतरकविकाकर्षणस्थापिततुरगो मत्सन्निधाःवेव समुपायात् । आगत्यच सततधावनायासप्रवर्त्तमानोच्छ्वास निःश्वासक्रमो मध्ये मध्ये विलम्ब्य कमलमुकुलाकारमञ्जःलिं मौलौ कलयन् प्रणामवर्णगुञ्जितमुखकुहरो मां प्रत्येवःमभाणीत्—श्रील श्रीमन् कौतस्कुतोऽयमुपचारः । श्रोतुमिच्छा मां मुखरयति अहं चाकर्ण्य धीरगंभीरवाचं

निरूप्य वेशादि सम्भूत्या कंचिद्राजकुमार मवेत्य आकार परिस्थित्या दयाकाङ्क्षिणं मत्यवोचम् कुमार, तातस्य कृतेऽय चारः कुशोद्धातः मरणनिमित्तभूतत्वादेषाम् ।" कुमारः किञ्चिन्मुख एव निर्वर्ण्य दीनदीनया गिरावद "श्रीमन्! विमवर्य न तिरोहितं भूतिमतोनृपवर्य्यस्य नाम तत्र भन नन्दस्य। तस्य चाहमधुना दूतो ऽस्मि परश्व एव च भवि तस्य पैत्र्यं कर्म्म। नहि भवतो ऋते पश्यामि विप्रान्तर मत्र सनस्ययोग्यम्। भूयसीनं कृपावतरणिका श्रीमतां यद दासीभूतस्य जनस्यकृते महतश्च राज्ञस्तातस्य वाकृते शुभ लक्षणस्य भवच्चरणसंस्पर्शजनितं मेध्यत्वं नाम।,,

इत्युक्त्वा स च मूक इव तस्थौ। अहंच दैन्याविलंचक्षुर्द्वन्द्व म लोक्य मानस मत्यक्षेणेव भूतभावि वृत्तान्तमाकलय्य "कार्यसिद्धि स्ते भवत्विति" आशिषो दत्वा ओमिति स्वीकृतकुमारमण सर्व्वमपि राज मासाद वर्णनं संक्षेपतोऽपृच्छम्। सच सर्व मपि सेतिहासं राजप्रासादमवर्णयत् अहंच सर्व माकल श्राद्धदिवसस्याशासन मलङ्कर्तुं कृतनिश्चयः "स्वस्ति" इत्युक्त दिनद्वयञ्च क्षणद्वयमिव क्षणद्वयं च निमेषिका द्वयमिवाति वा तस्मिन्दिने परिहितनवीनाम्बरः कतिपयप्रियान्ते वासिभिर नुगत स्तेनैव राजकुमारेण मदर्शित मार्गः कैश्चित् सतीर्थ्यैर्ब्राह्मणसुहृद्भि परिवृतो राजधानीं मति मास्थिषि।

# विकासवादः

( १ )

विकासवादाभिधं पुस्तक मार्यभाषया गुरुकुलविश्वविद्या-लयमहोपाध्यायेन श्री विनायक गणेश साठे एम. ए. महोदयेन साम्प्रतमेव प्राकाशि। विकासवादमाङ्गलभाषायां "एवोल्यूशन थ्योरी" इति वदन्ति। अस्त्यस्मिन् सिद्धान्ते पाश्चात्यानां बहु विस्रम्भः। सन्तिच भारतीयेष्वस्मिन् विषये बहवः किं वदन्तयो यतस्ते न विदन्त्य स्याभिप्रायम्। आर्यभाषाया मिदं पुस्तकं विलिख्य बहूपकृतं लेखकेन, तदेव पुस्तक मुपजीव्य प्रयतामह उपापाठक महाभागेभ्यः किमपि विकासविषये वितरीतुम्।

अयंहि खलु विषयो लेखकेन पञ्चधा निभज्य व्याख्यातः। तत्र चाद्यखण्डद्वयमेवात्र संक्षिपामः।

विज्ञानमेवास्य सिद्धान्तस्याधारभूमिः, विकासवादिनो हि सर्वं प्रत्यक्षसिद्धं विज्ञानसिद्धञ्च प्रमाणत्वे नोपन्यस्यन्तीति ये के चिदपि पक्षपात कलुषित दृष्टयः "पाखण्डिनः एतेविकासवादिनो यथाकामं जल्पन्तिवाञ्छन्ति च, जनानलीकविश्वासेषु भ्रमयितु मिति" वदन्ति, तेहि खलु विज्ञानरङ्गभूमौ भूयो भूयो मिथ्या विश्वासविघटनाय ऽऽहूयन्ते, निवेद्यन्ते च शोभनपथप्रदर्शनाय।

अस्ति हीदं लक्षणं सतां यत्ते मानयन्ति न्यायसिद्धमात्मप्रतिकूलमपि वस्तु।

अस्तुसाम्प्रतं प्रकृत मेवानु सरामः

दृश्यन्ते ह्यस्मि श्चराचरे जगति बहवः पदार्था विसंवदन्ति येऽन्योऽन्यतः । न चापि किमपि ध्रुवं वस्तु। प्रत्यहं भिद्यन्ते वस्तूनि आकृतिषु । विकासवादिनश्च 'यथाधुना भिद्यन्ते वस्तूनि, तथैव पूर्ववयस्य प्यभिद्यन्ते त्याचक्षते। भवतु नाम वस्तु चेतन मचेतनं वा सर्व मपि नियमेषु निबद्ध मुत्तरोत्तरं चित्रंविचित्रं रूपं बिभर्ति।

इयं हि दृश्यमाना पृथिवी, नच सर्गारम्भत एकरूपाऽऽसीत्। असंख्येयान् विकारानध्यगच्छदियम् । अहरहश्च छायाऽऽतपजपरिणामैर्वर्षाजलपूराभिहता च विपरिणमते। बिलसितमिदं विकासस्य। भूगर्भ ज्योतिष शास्त्र विदश्च-सूर्यमण्डलात्प्रच्युतेयं भूः क्रमशः शिशिरां दशामापन्ना बह्वोः काला दौषधि प्ररोहारोहयोग्या ऽभूदित्यादिकमाचक्षते सर्व मप्येतत्कार्यजातं विकासमेव पुष्णाति।

उपरिप्रदर्शितं निदर्शनन्तु दृष्टिपथमतिक्रान्तं वर्ततेऽधुना प्रत्यक्षस्य घटिकायन्त्रस्योदाहरण मादाय प्रयते विकासार्थ विघटनाय । कदाचिज् जनाः समयमातपग्रहादिदर्शनेन निर्णिन्यु स्तदूर्ध्वंञ्च बालुकायन्त्रेण जलघटिकया च तदूर्ध्वं श्च

प्रत्यन्ता घटिका ऽऽविष्कृता केनचित् । इय मपि क्रमशो ऽनेकरूपा ऽभवत्, सम्प्रति च ह्रस्वदीर्घभेदेन नानाविधाः सन्ति । एवमेवबाईसिकलाभिधयन्त्रस्य विकास क्रमः । पञ्चाशद्वर्षपूर्व मस्या आविष्कृति र्जाता । अस्य यन्त्रस्य चक्रेषु बहूनि परिवर्तना न्यस्मिन् अल्पावकाशे जातानि । आदावस्या अग्रिमं चक्रं द्वितीया पेक्षया त्रिगुणतोऽपि परिधौ बृहदासी त्परं तन्निर्मातृभि र्बुधैवेयं कुरूपतेति कृत्वा चक्रद्वयं, समानाकृति निर्मितम् । पूर्वश्चक्रं काष्ठमय मासीत् ततश्च लोहमयं घनरबरमयं साम्प्रत ञ्च वायुगर्भितरबरमयं वर्तते । एव मेव तदधुना मोटर साईकलयन्त्रे परिवर्तितं वाष्प सहकारेण प्रचलति । अखिल मपि परिवर्तन जातं देशकालपरिस्थित्यानुसारि । उदाहरणद्वयेन सुपस्ष्टो विकासक्रमो ऽर्थश्च । "परिस्थित्यनुसारि परिवर्तनं विकासः"।

यथा ह्यचेतनपदार्थेषु परिवर्तन मेवमचेतना वत्स्ववपि । वैज्ञानिकानां नये शरीर मपि यन्त्रं वर्तते न शरीरे किमप्य पूर्वं तत्वं, यै स्तत्वैः पृथिव्यादयो निर्मितास्त एव शरीरे विद्यन्ते । शरीरस्या नयत्रा बहुभिःकोष्ठै निर्मिताःसन्ति । एषु कोष्ठेषु प्रोटोप्ला-ज्मेति ख्यातो जीवनोत्पादकरसो वर्तते, यथाहि शतघ्न्याः कृष्ण क्षोदे ( बारूद ) यथावा घटिकायन्त्रस्य चक्रे ( स्प्रिंग ) निहिता निभृता शक्तिस्तद्द २ चालन आविर्भवत्येव मेवाङ्गचालनादिभि

श्चेत नोत्पादकरसस्यापि शक्ति रावि र्भर्वति । जीवनो त्पादक रस एव जीवनस्य मूलम्,

रसश्च कर्बन अम्लजनादिभिः षोडषपदार्थैं निर्मितो वर्तते । केचिच्च वैज्ञानिका कृत्रिमोपायेन चेतनोत्पादकरसं निर्माय कृत्रिमजीवनोत्पत्तिं कर्तुमप्युत्सहन्ते यद्यपि नतैः साफल्यं स्व प्रयत्न उपलब्धं तथाप्याश्वेव रेवसफल प्रयत्ना भविष्याम इति मन्यन्ते । अपरे च कामप्यप्राकृतिकीं जीवनोत्पादक शक्तिं मन्यन्ते यन्न कृत्रिमोपायै र्निर्मातुं शक्या ।

वस्तुतस्तु विकास वादिनो जीवनो त्पत्ति मङ्गीकृत्य विकास पथि पदं निदधते ।

अधुनाच प्रयतिष्ये विकासक्रमपदर्शकानिकानिचिदु दाहरणानि प्रदर्शयितुम् ।

तत्र निदर्शनाय परिचितानामेव प्राणिनां विचारः । अति परिचितः कुक्कुरो मनुष्येभ्यः । सन्ति चैतेषां बहवः प्रकारा उपजातयो वा । नगरे भ्रमन्तो विविधप्रकारा दृश्यन्ते श्वानः तेषां केचिद्वर्णेनान्य आकृतावन्ये कचै रन्योऽन्यतो भिद्यन्ते । केषाञ्चिदीर्घा अपरेषां ह्रस्वा अन्येषां मृदवः कचा सन्ति, च पीनाः, कृशाः, दीर्घाः, वामनाश्च श्वानः । परस्परं भिद्यन्तोऽप्यनल्प सादृश्येन श्वान एव विज्ञायन्ते । कथ्येत चेत् पतन

स्य भिन्नप्रदेशवासिनः श्वानः पूर्वमेकस्या एव शुन्याः सुता आसन्" नालीक मेतत् । एकस्या एव शुन्या सहजा शिशवोवर्णादौ न संवदन्तीतरेषान्तु का कथा । एवमेव भिन्न भिन्न नगरवासिनः श्वानो भिद्यन्ते स्वभावादिषु—क्वचिद् आखेटकुशला अपरत्र रक्षाकुशला दृश्यन्ते श्वानः । तथापि सर्वे ते श्वजातिं नातिवर्तन्ते अस्ति च यथा कथञ्चित् तेषु साधर्म्यम् । भवति च बहुसदृशां प्राणिना मेकैव प्रसव भूमि रिति नियमः ।

विस्तार्ये चेद्विचारक्षेत्रं, तर्हि भिन्न भिन्न देशवास्तव्येषु स्वरूपतो भिद्यमानेष्वपि, ग्रेहौन्ड बुलडौग न्यूफौन्डलैन्डा मिधेषु रशिया-इग्लैण्ड -न्यूफौडन्लैण्डवास्तव्येषु श्वसु यथाना भिहन्यते श्वजातित्वं तथैववृकशृगालादि ष्वपि नाति वर्तते । एवमेव सिंह व्याघ्र तरक्षु प्रभृतयो बिडाल जातित्वं नाति वर्तन्ते । सन्ति चात्र युक्तयः

(१) शुनोवृकस्यबिडालस्य सिंहस्य चान्तरिकी रचना आहारव्यवहारादयश्चापिसदृशाः

(२) एषां परस्पर सम्बन्धेन प्रजा जायन्ते, लुब्धकाः शुनीवृकसम्पर्कजान् कुक्कुरानधिकं मानयन्ति यतस्ते स्वामिभक्ताः शूराश्चापि भवन्ति । एवमेव व्याघ्र तरक्षूनां परस्पर संगमेनापि ।

प्राय: प्रश्नोऽयं समुदेति चेतसि किं साम्प्रतमपि विकास-क्रमो दृश्यते नवा ? तत्र च कथितव्यमस्ति यद्द युगपदेव न वि-कासो जायते, परं शनैः २ परिवर्तनं जायते वर्षाणां शतेषु भवति रूपान्तरापत्तिरिति । साम्प्रतमपि कंगरू डकबिल प्रभृतयो जन्तव ईदृशा एव सन्ति येषु च विकासचिन्हमुपलभ्यते । अत्र विस्तृत मवशिष्टं श्च वर्णनं लब्धावकाशाः समयान्तरे उपायनं करिष्यामः । देवः

इति ।

काव्यानि यस्य कुसुमानि मनोहराणि
शास्त्राणि षड् बहुफलानि च यस्य शाखाः
आद्यावसानसमयस्थिरवेदमूलो
जीयात्स संस्कृतवचोमयकल्पशाखी,



( २ )

यद्गौरवं किमपि शास्त्रगणप्रभूतम्
यत्सौरभं च नरसिंहकथाप्रसूतम्
सर्वं यदेकवशगं भरतान्वयानां
रामेश्वरः सुरगिरं फलितां करोतु ।

( ३ )

प्राचेतसानि सरसानि वचांसि पीत्वा
श्रीव्यासदेवभवकाव्यसरिन्निपूताः
अन्तर्बहिर्मलविलेपविलोपयुक्ताः
यूयं प्रयात नियताः सुहृदः प्रमोदम्

( ४ )

आरामभूमिरिव बोधमधुप्रियेभ्यो
रम्यस्तडाग इव खेदपिपासितेभ्यः ।
कश्चित्सुधारसकिरोपमहर्षवर्षी
देयान्मुदं स भवते सुरवाक्पयोदः ।

रसिकः

॥ ओ३म् ॥

विषय सूचिः

*ओ३म्*

# उषा


| प्रथमेवर्षे | तिथि—१—१९७१<br>... ... ...आषाढ़ मासः ... ... | षष्ठमो मासः |
|---|---|---|


## संस्कृतभाषायाम्
# समासः सन्धिश्च

(लेखकः श्रीयुत घनश्यामसिंहः बी.एस सी.एल एल बी.)

विद्याप्रचारदृष्ट्या भाषालालित्यदृष्ट्या च लम्बीभूतानि समस्तपदानि दूषितानी त्यत्र विदुषां न कश्चित् सन्देहो विद्यते । नैष तर्हि आलोच्य विषय एतत्पत्रस्य । व्याकरणं खलु किमस्मिन् विषये निश्चिनोती त्येवाहमालोचितुमिच्छामि । नाहं वैय्याकरणो, नचाहं संस्कृतज्ञो व्याकरणविवादोऽपि न मे रोचतेतराम् ।

विद्वद्भिरेष जटिलः प्रश्नः सुविचार्य स्थापितो भवेत्; संस्कृतसाहित्याच्च कंटकमेत न्निःसृतम्भवेत् । एतदेवाह मिच्छामि ऐषैव च मे मनोभिलाषा ॥

अस्तु। समासे प्रायः नियतः सन्धिरिति प्रसिद्धमेव। यत्र सन्धिर्विहितः तत्रैव समस्तपदं शुद्धं नान्यत्र ; यत्र तु सन्धिर्निषिद्धः तत्र समस्तपदं निषिद्धमेव तिष्ठति । आलोच्यमिदमेव विद्वद्भिः—'कुत्रसन्धियुक्तः अयुक्तश्च कुत्र, कुत्र सन्धिर्विहितो निषिद्धश्च कुत्र।' पाणिनिमुनिना कृतं व्याकरणं जगति यत् प्रसिद्धं तदेव प्रमाणतां लभते व्याकरण पुस्तकेषु । स एव मुनिरस्माकमपि पथप्रदर्शकः ॥

"संहितायाम्" इत्येतद् अधिकार सूत्रं सन्धिविषये। संहितायामेव सन्धिर्भवति तत्रैव सन्धिर्विहितोस्ति । उत्सर्गत स्तत्रैव समस्तपदं शुद्धम् ॥

संहिता खलु का ? अस्मिन् विषये न कस्यापि विवादो भवितुमर्हति; मुनिनैव परिभाषितं सम्यक् । तच्च—"परःसन्निकर्षः संहिता" १।४ १० ॥

परःसन्निकर्षः शब्द एव विवादास्पदंऽधिको वर्तते । एनमेव अवलम्ब्य सर्वा खलु विवादशृंखला परिभ्रमति। अस्यैव विवादे कुशाग्रबुद्धिभिः विद्वद्भिः स्वतन्त्रेण मनसा गतानुगतिकतां विहाय मनो दीयताम् । जगत् प्रसिद्धाः कवयः पुरातना नूतना वा, नूतने विचारे ऽस्मिन् न भेतव्यम् । नैषा युक्ति विद्वन्मण्डलेषु ग्राह्या भवति यद् धुरन्धर कविभिः स्वप्रबन्धेषु मान्येषु प्रलम्बसमस्तपदानि प्रयुक्तानि, प्रलम्ब श्च सन्धिः कृतइति नास्मादृशैः अल्पधीभिः स विषयः शंकनीयः । न च मयापि स्वीकरिष्यते अयुक्तिरेषा ।

विविधसमये जगति आसन् विचाराः सुप्रचरिताः तदात्तनेषु विद्वत्सु, ये च कालान्ते नूतनपरीक्षणकारणात् विलयंगताः। को न जानीते प्रकाशशास्त्रे सुगृहीत नामधेयस्य न्यूटनस्य कण सिद्धान्तः दृढ गृहीत आसीत् पदार्थ वित्सु इति। कस्तदा आणविक सिद्धान्तम् ( Atomic Theory ) प्रकृतेरन्तिमायां अवस्थायां शशंके। किमधुना संवृत्तं तस्य कणसिद्धान्तस्य अस्य च आणविकस्य। सन्ति बहूनि उदाहरणानि एवंविधानि, न मे तदुल्लेखने समय यापने वा प्रयोजनं किञ्चित्।

मम तु एतावती एव प्रार्थना यद् भवद्भिरपि स्वतन्त्र विचारो ऽवलम्बनीयः; सुतर्कैश्च खंडनीयः पोषणीयो वा एष मे विचारः। न खलु पुरातनऋषिभयात् तिरस्करणीयोऽयम् विषयः।

अस्तु! 'परःसन्निकर्षः' इत्यस्य शब्दार्थस्तु न तावान् कठिनः। शब्दार्थस्तु तस्य परं सामीप्यं, अत्यधिकं निकटत्वं वेति। कठिन प्रश्नास्तु निम्नलिखिताः सन्तिः—

सामीप्यं कस्य कस्मिन्विषये वा ?
कियन्मात्रं सामीप्यं परःसन्निकर्षः ? इति

सामीप्यं कस्य ? —इत्यत्र शास्त्रकाराणां सम्मतं विद्यते। सर्वैरेव शास्त्रकर्तृभिः वर्णानामेव अत्यधिकं सामीप्यं संहितासंज्ञं स्वीकृतं। :—

काशिकाः—
पर शब्दो ऽतिशये वर्तते सन्निकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षो वर्णानाम्

अत्र मिताक्षरा—"अतिशयितः संनिधिः वर्णानां संहितासंज्ञः स्यात् ॥"
सिद्धान्त कौमुदी—"वर्णनामतिशयितः संनिधिः संहितासंज्ञः स्यात् ॥"

ममाप्यत्र न कश्चिद्विवादो वर्तते। शब्दशास्त्रं खलु व्याकरणम्। वक्तुः लेखकस्य वा भावानां समीप्यं संहितासंज्ञया पाणिनिमुनिना निश्चितमिति केनापि पुंसा न स्थापयितुं शक्यते। विवादो ऽयमतः कारणतयायैव। अस्य विवेचनायां मयापि पुनः श्रीमतां परिषत्सभ्यानां कालो न यापयिष्यते॥ स्वीकरोमि च वर्णाना मेव अत्यधिकं निकटत्वं संहिता संज्ञमिति। अस्तु॥

## लिखिता वर्णा उच्चरिता वा

वर्णानां सामीप्यं संहितेति निश्चिते विकल्पो ऽयमुत्पद्यते किं वर्णानां रूपम्? वर्णसंज्ञया किं सूचितं भवति?

मसियुक्त कीलकेन यानि चिह्नानि पत्रे (कागज़) क्रियन्ते लेख-कैः किं तेषां वर्णसंज्ञा? उच्चरिताः शब्दा वर्णाः किंवा शब्दानां लिखितचिन्हानि। अस्य सम्यक् परिज्ञानं आवश्यकमित्यस्य विवेचनं करोमि। अस्तु।

उच्चरितशब्दाः किमुत तेषां लिखित चिह्नानि । अस्य सम्यग् विवेचनार्थं आदितः सन्धिशास्त्रस्य मूलान्वेषणं आवश्यकम् ।

यत्र शब्दबहुलाना मुच्चारणे काठिन्यं कालक्षयो वा भवति यत्र च तेषां उचिते सन्धियुक्तउच्चारणे सौलभ्यं भवति कालस्य च तावान् क्षयो न भवति तत्र सन्धिः ( यूटिलिटी नियमेन ) उपयोग नियमेन प्रवृत्तास्ति । उदाहरणमत्र स्पष्टी करिष्यति :—"किम् अत्र"; "कः चित्"; "सत् चित् आनन्द"; "तत् लयः"—एतेषां शब्दानां पृथगुच्चारणे कालक्षयो भवति मुखञ्चापि काठिन्य मनुभवति । "किम् अत्र" इत्यस्य झटिति उच्चारणे मुखात् "किमत्र" निर्गच्छति; तथैव "सत् चित् आनन्द" इत्यस्यापि झटिति उच्चारणे "सच्चिदानन्द" इति मुखान्निर्गच्छति, एवमेव अन्यत्रापि ॥

उपयोगनियमोऽपि सन्धेरुत्पादकः प्रचारकश्च । परं हा हन्त किमधुना संवृत्तम्; स्वजन्मदातुः उपयोगनियमस्य हननायैव संधिः समासश्चापि भवति । सर्वथैव विरुद्धमाचरितम् आधुनिक लेखकैः कविभिश्च । परं नैष एतल्लेख विषयः ।

उच्चारणे सौलभ्यं कालस्य अक्षेपश्च सन्धिसिद्धान्त इति स्थाने स्थाने पाणिनिसूत्रेभ्योऽपि स्फुटं निर्गच्छति । "दूराद्धूते च" इति सूत्रेण दूरत आह्वाने सन्धिर्निषिद्धा; यथा "आगच्छ—इन्द्र अश्व धावयामः ।" अत्र आह्वाने 'इन्द्र' शब्दस्य विशेषतया उच्चारणस्यावश्यकता वर्तते; अतः 'इन्द्र' शब्दः 'अश्व' शब्देन सह झटिति उच्चारयितुं न केनापि शक्यते ।

'इन्द्र' 'अश्व' इति शब्दयोः झटिति एकत्वेन उच्चारणाभावान् संयोगो न भवितुमर्हति अतः सन्धिर्निषिद्धा ॥

उच्चारणमेव सन्धिमूलमिति निश्चिते वर्णस्य रूपम् निश्चितम् । सन्धिशास्त्रे वर्णसंज्ञया उच्चरिताः वर्णा एव चिता सन्ति, न पुनर्लिखितचिन्हानि ॥

## अत्र शास्त्रप्रमाणम्:—

वर्णानां किं रूपम् वर्णसंज्ञया सूचितम्भवति इति म तर्क विवादेन निश्चितम् । अत्र न केवलं तर्कविवादएव अस कं सहायको ऽपितु शास्त्रप्रमाणान्यपि । तान्यधुना सं रूपेण श्रीमत्सु विनिवेदयामि ॥

पाणिनिमुनिना कृतं शिक्षाशास्त्रमेकं लभ्यते । तत्र नि वचनानि सन्तिः—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । म कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥

मारुतस्तूरसि चरन् मन्द्रं जनयतिस्वरम् ।
प्रातः सवनयोगं तं छन्दोगायत्रमाश्रितम् ॥ ७ ॥

कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टु भानुगम् ।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥

सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ६ ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥

अत्र स्वयंमुनिना वर्णानां सम्यग् रूपो दर्शितः । "वक्त्रमापद्य मारुतः वर्णान् जनयते "अष्टौ स्थानानि वर्णानामुरः कण्ठः " इत्यनेन श्लोक द्वयेन निर्भ्रान्त रूपेण निश्चितानि यद् वर्णा उच्चरणशीलाः । पत्रे ये लिख्यन्ते न ते वर्णाः । तानि वर्णचिन्हान्येव ॥ अस्तु ॥

अनया विचारशृंखलया कुत्र वयमागता इति संक्षेपेण कथयामि ॥

१. संहितायामित्यनेन संहितायामेव सन्धिर्भवति, अतएव समासोऽपि च ॥

२. परःसन्निकर्षः संहिता' इत्यनेन वर्णानां परमंसामीप्यं संहिता । अर्थात् वर्णानां परमे सामीप्ये सन्धिर्भवति समासोऽपि च ।

३. उच्चरिता वर्णाः । अतएव मुखादुच्चरितानां वर्णानां परमे सामीप्ये सति सन्धिसमासौ भवतः ॥

स्मरणीयमेकं श्रीमद्भिर्वर्तते । तदिदम्

यन्मया पुर्वमुक्तं तेन नेदं निर्याति यद् वक्ता एव संहितशब्दानुच्चारयेत् न पुनः लेखकः स्व लेखे संधिं कुर्यादिति । प्रधानतया तु भाषा उच्चार्यमाणा एव कथ्यते, उच्चारण सौलभ्य-

श्च सन्धिमूलम् । परन्तु विदित एव एष नियमो यदुच्चार्य-माणाया भाषायाः व्यवहार सौलभ्यायविश्रामप्रचाराय च लिखितचिन्हानि विद्वद्भिर्निश्चितानि ॥ उच्चरितभाषैव लेखे परिणम्यते । आदौ मुखादुच्चरिता भाषा, पश्चाच्च सैव लेखबद्धं रूपान्तरम्भवति; अनेनैवनियमेनउच्चार्यमाणानां संहितशब्दाना मनुरूपो लेखो भवेत् ॥

यदुच्चार्यते तस्यैव अनुरूपो लेखः, यच्च उच्चारणे शुद्धं तदेव लेखनेऽपि शुद्धम् । यदुच्चारणे अशुद्धं तल्लेखेऽपि तथैव । अतः सुलभ नियमेन निर्याति यत्—यावन्तः संहित वर्णा मुखादुच्चारणे नियमानुकूलाः शुद्धाश्च स्युः, तावन्त एव संहितवर्णा लेखनेऽपि नियमानुकूलाः शुद्धाश्च भवन्ति, नाधिकाः न चापि, अन्यथा । अस्तु विषयशृंखलामनुसरामि ।

( क्रमशः )

# चाणक्यः

## ( ४ )

मध्ये च नानानोकहराजिभिरुपचितसमृद्धं वर्त्मातिक्रामन् शनैः शनै र्भाविनो महीभृतः समानं सम्भूतेरलौकिकमिव दृश्यं मनसा चिन्वन् हृदयहर्षमपरिमेयमिव गणयन् प्रतिपदम् प्रतिभूरुहम्, प्रतिहरिणम्, प्रतिगोवत्सम्मध्येमार्ग नवीनेनैव वेषेणोपचितां शोभां भावयन् राजधानीप्रधानद्वारं प्रविष्टः। अभूच्च मे मनसि यदहो विशालेयं नगरी समन्ता द्वप्राकाराकीर्णा विशालेव शालते। नूनं कुसुम पुरमिदं नगरमधितिष्ठन्नयं भूभृद्व भूभृतां पतिरिव नानागुणरत्नै रलंकृतः स्यात्। बाह्य सम्पत्ति रेव यस्य मनसः कौतुकजननी किमिवतस्यान्तरङ्गा समृद्धिः। रम्याणिहर्म्याणि वज्रलेप घटितानि चन्द्रकान्तोपलोच्चयपरम्पराविडम्बना मा लम्बन्ते। सततप्रवृत्तमहोत्सवस्य कृते शोभाञ्चितनवहरितारुणदलकुसुमसंहति व्रततिवेल्लितै र्नानामणिशकलखचितैः स्तम्भप्रकाण्डैः शाखिभिरचला इव राजप्रासादाः पुरतो विराजन्ते। मध्येवीथि शतशः सहस्रशश्च पुरवासिनो राज्ञः पितृमहोत्सवजनितहर्षोत्फुल्लमानसा निजसुहृद्भिः प्रियकिंकरैर्वा नूतन वासो वेष्टिताः इतस्ततो हिण्डन्ते। परस्परंच विविधमयै रालापै र्नितरां मोदन्ते। किं बहुना, सर्वोऽपि पौरजनः हर्म्यगर्भप्रविष्टः काकलीलापमनोहरै र्बहुलवादित्रझांकारैः सकलमपिपुरं नादयन्ननुपमशोभां वितनोति।

अहं तु साधारणो ब्राह्मणो विचित्र विभवेन विषयपारावारे कथमपि मग्नः पुनः प्रकृतिमागतः। पुनश्च शतशो ब्राह्मणाः कलितभव्यवाससः नवरुद्राक्ष मालिकासनाथितशया, नागकेशररजोविलिप्तोपवीतमण्डितकबन्धावयवाः स्नेहसंवासितशिखाः सुरभिहरिचन्दनद्रवचित्रितनिटिलपटलाः अविरतं मन्त्रजपपरायणा मध्ये नमस्कुर्वतां प्रकृतजनानां सन्ध्याभङ्ग्या जयजीवनारायणेति आशिषां धारा सम्पातैः स्वयं परांश्च स्नपयन्तो राजमण्डपद्वारं प्रविशन्ति। इत्यवलोक्याहमप्यात्मीयै र्वयस्यै रेकत्र नीयमानो मण्डपे प्रवेश मकारिषि।

पूर्व त एव केचन स्थविराः अपरे युवानः इतरे वटवः अन्ये च स्नातकाः सस्वागमन वचन पुरःसरं मामनाययितु मुपस्थिताः आगम्यताम्, आगम्यातां, सनाथ्यता मिदमासनम्, इति बहुश उपचारवचनै रवासने मामुपावीविशन्।

अहं कथं कथमपि परितः समुपस्थापितदण्डकमण्डलुरूपविष्याग्रासने वन्यहरिण इव चलनयनः इतस्ततो दत्तदृष्टिरवर्णनीयामेव च सुषमां मण्डपस्य पिबन्निव तिष्ठामि। सर्वत्र नाना भूषणमण्डिता, रमण्यः प्रबन्धव्यग्रा अप्सरस इव राजन्ते नानापरिचारकाश्च विविधोपकरणोपस्थापनरतमानसा भूयोऽपि तगमत्सागतानि कुर्वते

बहुत्र साम्प्रतमपि नाना कुसुम मण्डिताभिः सदृशशाखाभि र्बध्नन्ति स्तम्भान्। धूपागुरु हरि चन्द नादिसुर भिद्रव्यै रुपकल्पयन्ति भित्तीः। पार्श्ववर्तिषु आसनेषु न कमपि जन-

मन्य मवलोक्योपविशान्तम्, अहमेव निजोपकरणानि दण्डकम-
ण्डल्वादीनि प्रत्येकमेकैकशः प्रत्यस्थापयम्।

तथानुष्ठिते मयि प्रस्तुतासु च सकलासु सामग्रीषु इतो राज-
सखीभिरनुगम्यमानो राजपण्डितैरनु गतो भूपति रेकस्माद
पत्रकात्प्रविवेश मण्डपम्। तदन्वेवैकादासी भ्रूभङ्गभुग्नवदना
विकृतानना पिशाचिनीव सहसोपसृत्य मां पृष्ठवंशे चरणे-
न तरसाऽताडयत्। साम्रेडमुवाच च—

"अयि कोयमनार्यइव श्यामगात्रः कुरूपोत्र स्थापितः।
उत्तिष्ठ निस्सरेति"।

अहमित्थं दासी चरणेनावज्ञां गमितः सहसा उत्थाय शोण-
लोचनः, भुजङ्गइव भीषणनिश्वासोच्छ्वासक्षुभितसमीरणः राज-
कुल विध्वंसिनीं धूमकेतुशिखामिव शिखां परामृशन् एकेन
चक्षुषा नन्दमीक्षमाणो ऽपरेण च सकलमपि सामन्तमण्डलं
विबुधमण्डलं च महाजन गणं च सम्बोध्य अब्रुवम्।

"अये महोदयाः कोयमाचार उत्सवस्य अयमस्माकं
विप्राणां पवित्रतमस्य ब्रह्मवंशस्या वज्ञाकरो नृपशुः पामर इव
नन्द भधरोऽपरो जडभूधर इवान्तर्गुहानिभृततमोमलीमसः न-
जानाति भवितव्यताम्। (कमण्डलूदके स्पृशन्) अयं चा-
णक्यश्चणीगर्भसम्भवः इमं वसुमतीभारभूतं भूभृतं यावन्न
रसातलं गमयति न तावदियं तस्य ब्रह्मपताकिनीव शिखा
ग्रन्थि मङ्गीकरोति"। अहमपि सकलान् विदुषो लज्जावनता

ननान्निरीक्ष्य सामन्तमण्डलं च विवर्णवदन मवेत्य सहसा प-ण्डपद्वारान्निरक्रामम् ।

भूयो भूयः प्रतिज्ञां महतीमनुस्मरतो ममाभूच्च मनसि य-द्यो महान्नरपतिरयं मूढो विविधवलवैचधिकी भूतः । क चा-साधारणो विप्रः । अस्तु यद्भवतु तद्भवतु । ब्रह्माधारं क्षत्रं न कथमपि ब्रह्म अतिशेते । अतिशयानश्च नितरा मवाङ् याति ध्रुवमस्य नाश एव । ततोहं मनःस्थिरं चिकीर्षन् दुस्तरां प्रतिज्ञा तटिनीं रङ्गस्थलीं नट इव विशेषमोदभाजनं विधित्सया विसृत सकलवयस्यसार्थः नानानोकह शवलितं विलुलितलहरीमा-लम् नीलीच्छटाच्छुरिततरनीरं पुण्यवाहिनीभागीरथी तटिनी तीरमुपाश्रयिषि ।

## देवि सर्वंसहासि

उदर कुहरदाह स्तत्र दुर्भिक्षचिन्ता
दिशि दिशि विधवानां कातरक्रन्दनानि
विपदुदधि निमग्ना न्वीक्षमाणाऽपि पुत्रान्
यदसि विहितमौना देवि सर्वं सहासि ! ॥ १ ॥
यवन नृपति दर्पो येनचूर्णीकृतोऽसौ
दशवदन कृपाणान्मोचितो येन लोकः
तदिह यदि न तेजः स्वीकरो ष्यार्त्तनादे
दिशि दिशि परिवृद्धे देवि सर्वं सहासि ! ॥ २ ॥

# स्वप्नवासवदत्तिकम् ।

"स्वप्न वासवदत्तस्य दाहकोऽभून्न पावकः"

पूर्वपरिचितस्य कविता कामिनीहासभासस्य नैकेष्वेकतमं नाटकं स्वप्नवासवदत्ताख्यं नव्यमिव पुनः पाठकानामुल्लासविकसितं मनो जनयति । वास्तविकं स्वरूपन्तु नाटकस्य वासवदत्ता नाटक एवा वगम्यते । यदि परिचितचरं चक्रचूड़ामणिमपि भासः कस्मिन्न प्यंशेऽति क्रमितुं मनो धत्ते तत्स्वप्नवासवदत्तिकसंविधानकबलेनैव । श्रूयते हि पुराकाले केनाऽपि भूपेन सर्वाण्यपि नाटकानि दैवीपरिक्षार्थं न्यस्तानि । दंदह्यमानेषु समस्तेषु भास संविधानकेषु इदमेव नाटकं वास्तविकतया नाटकत्वं ख्यापयन्नाभूदग्नि दग्धम् । अतएव राजशेखरस्यैवं वचः प्रास्फुरत् " स्वप्नवासवदत्तस्य दाहकोभून्न पावकः । " अस्य कथावस्तुनः सम्बन्धस्तु प्राक्प्रतिपादित कथासारस्य प्रतिज्ञा नाटकस्य कथया सम्बद्ध्यते । स एव वत्सराजः, सैव वासवदत्ता, स एव यौगन्धरायणः, स एव महासेनः, सैव घोषवती वीणा, सएव रूमण्वान् परं कथा वैचिध्य वशात् पद्मावती ललना दर्शकस्य राज्ञः कन्यका दैवज्ञ वचनान्वयितया वत्सराजस्यकरपीडनभाजनतामन्वभूदिति तत्पुरस्कृत्य नवीनः कथाप्रपञ्चो नाटकान्तरे संविधीयते । तच्चेत्थम्ः—

महासेनराज्ञो देशादपक्रान्ते हस्तिनमध्यारूढे वासवदत्ता सनाथे वत्सराजे, नाम्ना निजराजधानीत्यत एव लावा-

णकनामकग्राममध्यासीने तस्मिन् पुनरपि राजक्षत्रिय स्वभावगोचरत्वा न्मृगया पुनरपि सावकाशा जनि लेभे। वत्सराजश्च पुनरूपारूढमृगयाविनोदो गृहीतसैन्यविभागो दण्डकावनं प्रतस्थे। प्रस्थिते च तस्मिन् राजनि लावाणके ग्रामे भगवानुषर्बुधो महताजवेन सर्वं मपि दिधक्षुरिव प्रादुरभूत्। अदहच्च सर्वमेव। राजपरिजनरक्षणार्थं मभूच्च महान् सपरिदेवनः कोलाहलः। इतश्च व्यतिकरे वीरवरो मन्त्रिप्रवरो यौगन्धरायणो, नृपतिमेव स्वार्थसार्थ माकलयन्ननन्यात्मना महतोत्साहभरेण द्विगुणजवीयसा धूमायमानदिगन्तराले, दहदहज्ज्वालापटलारुणायमानान्तरिक्षमण्डले, चटच्चटत्पटत्पटच्चटित वेणुसमूहे, शिखिव्यूहे दिनकरकान्ताश्मनिर्मितमूर्त्तिरिव शमिताऽऽशुशुक्षीणप्रभावः, निर्विवेश। प्रत्यक्षतस्तु यौगन्धरायणो जनैः प्रविशन् गोचरीकृतः सोऽपि वासवदत्तया सार्कं दग्धः इति को वेद ?।

यौगन्धरायणस्य कोपि परिचय विशेषो न कर्णकुहरमाविशति इति सोऽपिदग्धः सापि दग्धेति जनप्रवादः सहसा सर्वहृदयंगमतामयासीत्। राजाऽपि प्रामाणिकामात्यादिभिः सखेदं निवेद्यमानः भूयो भूयो महासेनकन्यकास्वरूपं ध्यायन् मृत मिव प्रणष्टम् स्वयमेवाग्निना दग्धमिव, विरहानलेन सुष्टमिव शोकेनात्मानं भावयन् नदीमातृकं विललाप। कथञ्चिदाश्वस्तो दैवज्ञैः, कथञ्चिदावेद्यमानो ऽमात्यप्रवरैः, कथमपि विनोद्यमानो वन्दिभिर्न कथमपि यौगन्धरायणमन्तरा ऽमात्यं, वासवदत्तामन्तरा हृदयदेवतां, वत्सराजो वैकल्यं जहाति तदितरथैव सर्वेऽपि प्रपन्नाः।

बहुदिवसेषु व्यतीतेषु विरलायमाने हृदयदेवताविर-
हानले नव्याशानीराजिते च वत्सराजमानसे दक्षिणपथा
दागतो दैवज्ञ एवं राजानं व्यज्ञापयद् देव ! दर्शकस्य मगधाधी
शस्य यः कन्यकां परिणयति नूनं स गतमपि राज्यमण्डलं पुनः
करतलगतं करोतीति"। राजा स्वीचकार। पात्रिकवाचनिक
विशेष विज्ञापनाभि र्निश्चिते द्वितीये परिणये दर्शनीयामुपा
रूढ यौवनां पद्मावतीनाम्नीमात्मनस्तनयां मगधाधिपोऽनुमे-
पयामास। सा च पद्मावती कतिचित्सखीभिरनुगम्यमाना
राजपुरुषैश्च परितः संरक्ष्यमाणा मध्ये मार्गं सुपोपनिवेशेषु
तापस कुटीरेषु क्षपाः क्षपयन्ती, अवसर विशेषतः लावणक
ग्रामात्परिमित योजन मेव कस्याञ्चित् कुटीरिकायां वास-
मकार्षीत्। तत्र चैको विप्रस्तापसरूपोपशोभितः कयाप्य-
वन्तिकाह्वया सुन्दर्या व्यक्त्या सह निवसति। तां च स भगिनी
त्वेनो पचरति। स च विप्रस्तां प्राघुणिकायमानां नृपस्य
वत्सराजस्य भाविनीं पट्टराज्ञीमवेत्य अवसरापेक्षी तां भगिनीं
तस्यां न्यासीकृत्यान्यत्र प्रवस्तु कामः पद्मावतीमूचे—"भवति!
विदेशं प्रस्थितोऽस्मि इयमवन्तिका मम भगिनी न्यासरूपेण
तव सखी भूत्वाऽस्तु इति। ततश्च सावन्तिका पद्मावती
सखी संवृत्ता। सैवाऽवन्तिका, विप्ररूपमाकलय्य विचरता यौ
गन्धरायणेनाग्निशिखामुपारूढाल्लावणकग्रामात्संरक्षिता।
पद्मावत्या सह राज्ञो विवाहमवश्यभाव्यमभ्युपेत्य तां सं-
गोप्य इत्थं प्रकारेण वत्सराजस्यैव गृहे न्यासत्वेन वासयति।

स च ब्राह्मणो देशान्तरमगमत्। पद्मावती चावन्तिकया-
सह वत्सराजस्य महिषीसुखमनुभवन्ती कालं नयति पर

मिव मवन्तिका हृदयदैवतं पतिमासन्नमपि विप्रकृष्ट मिव विचिन्वन्ती सततशोक पराभूतमानसा कालं क्षपयति। पद्मावतीचेटीष्वेकतमा महिष्याऽऽदेशमुपलभ्य मालां ग्रथितुं पुष्पाण्यवचित्यावन्तिकामुपजगाम। ऊचे च "आर्ये! महिष्या आदेशेन वैधव्यहरावल्ल्याः कुसुमानां मालावर्णक मारचय। सा च स्वानि भाग्यानि दूनेन चेतसा भावयन्ती जग्रन्थैव स्रजम्। परं च वसन्तकेन विदूषकेणा नुगम्यमानो वत्स-राजः प्राक् चिन्तामणीयितां वासवदत्तां काले कालेऽनु-स्मरन्नेवाऽमुश्चद्विरहयोगम्।

एकदा च पद्मावती शिरोवेदनया पीड़िता शीतलोप चारैरपि शान्तिमलभमाना राज्ञा विदिताभूत् राजा च प-द्मावतीं द्रष्टु कामः सामुद्रिक गेहे संज्ञयाऽऽजगाम विदूषकेणा-नु गम्यमानः। तत्रप्रास्तीर्णां शय्या मधिष्ठाय निद्राभरमन्थरितलो-चनः विदूषकेण कथाभिर्विनोद्यमानः शिश्ये। इतश्च वास-वदत्ताऽपि पद्मावतीं द्रष्टु कामा तत्रैव चेटीवचनेरिताऽऽययौ ददर्श चोत्स्वप्ना यमानं भूपं वत्सराजं—'हा अवन्ति राजपुत्रि हा वासवदत्ते इत्यादि'—साचाऽभास्वरदीपेषदुज्ज्वलिते स-द्मनि प्रेम्णाऽतिशयेन तत्रैव शय्यायां निषण्णा उत्स्वप्नायमानेन भूपेन सह समयोचितमालापं चक्रुषी, भूपश्च समुत्पन्नरागः सदिव प्रतिभासयन् यावत्तां व्यायोगेनाश्लिष्यति सा-त्वरयैव गृहादभिनिश्चक्राम अनूत्तिष्ठंश्च राजा द्वारपत्त्रे-णाभिहतो प्रकृति मायया।

कालान्तरे सभामासीनो भूपतिः प्रतीहारवचसा प्रति हार भूमि मुपस्थितां वासवदत्ताधात्रीं विदित्वा संजात शंकः पद्मावत्या वाश्वासितमतिः तत्समकालमेवाहूतावन्तिकः धात्रीसमानीतप्रतिकृत्या विसंवादितरूपानुकारः संजातप्रेमा, तत्समकालमेव च समागतेन तेन विप्रेण प्रत्यायाचितन्यासस्ततएव संविदितयौगन्धरायणः, तन्मुखेन च कलितसकलनीतिप्रकाशः, पुनरपि हृदयैकदेवतां च वासवदत्ता मुपलभ्य भार्याद्वय सनाथः सुखेन शरदां शतं निनाय ।

कुशाग्रः

# साहित्यतत्त्वम्

( लेखकः—कविराज रामाधीन शास्त्री )

समानं सर्व भूतेभ्यो हितं सहित मुच्यते ॥
तस्य भावस्तु साहित्यम्, तत्काव्यं परिचक्षते ॥१॥

अहह ! परमाश्चर्यः कालमहिमा यद्द विधातुः सृष्टि रसाधिक्यतयाऽतिवर्तमानाऽपि कवितुः सृष्टिरहरहस्तिरस्क्रियतेतराम्। क्व "साहित्य संगीत कला विहीनः......" इति प्राचां संवित्, क्वेदानीन्तनानामसंख्यातकल्पानां विपरीतसङ्कल्पः । अथवा नेह साम्प्रतिकानां दोषगन्धोऽपि वक्तुं शक्यः, माध्यमिकानां टीकाकृतां धिय मनुगच्छता तदाश्रयप्राप्तपक्षपातया धिया साहित्यस्य विनिन्दनात् । यदि च साम्प्रदायिकानां टीकाकृतां विवृतिषु समाश्रयः, अथापि परिवर्जितसकलविवृत्या केवलया स्वधिया विचारः, इत्युभयथापर्यालोचनं संप्रकाशयति साहित्यरहस्यम् ॥

द्विविधं किल साहित्यं गीर्वाणवाग्याः लौकिकं वैदिकञ्चेति। तत्राद्यं पुनर्द्विविधम्, प्राच्यं पाश्चात्यं च । प्राच्यं पुनरपि द्विविधं गद्य पद्यात्मकं सूत्रात्मकं चेत्यार्षम् तच्चप्राचीनानाम् । पाश्चात्यं पुनरर्वाचीनानां कालिदास भवभूति मुख्यानां शब्दाडम्बरबहुलम् इतीदं साकल्यं लौकिक साहित्यस्य ॥

वैदिकं पुनर्वेदेन मंत्रात्मकेन संबद्धम् ब्राह्मणेतिहासपुराणकल्पगाथाद्यनेकनामधेयम् उपनिषदाख्यम् साङ्गोपांगम् ॥

तदिदमुभयात्मकं लौकिकं वैदिकञ्च साहित्यं साहित्यशब्दं भजते, अन्वर्थभावात्। उभयत्रापि साम्प्रदायिकबुद्धिपरित्यागः सौष्ठवमावहतीतिसंसाधयितुमिहप्रयासः। प्राचीनानां लौकिके तावत्—

अर्वाचीनं पदमधिवसन् योगुणग्रावयुक्तो
वामाङ्गार्धेनिवसति सदा पर्णयावद्धकेलिः॥
यश्चाभेद्योविगतकरणः केवलं ज्ञानमूर्तिः
सोऽयं शान्तं पदमधिगतः पातुवः शूलपाणिः॥

(चरकः)

अत्र विप्रवदन्ते नव्याः ,साहित्यद्विषः विगतिवादहेतवश्चतेषां गरीयांसः समुपलक्ष्यन्ते तद्यथा—१—"अथ" शब्देन मंगलाचार इति प्राचांशैली। १—आयुर्वेदग्रन्थे सर्वभूतदयापरायणे सर्वप्राणिभयंकरस्य प्रलयाधिपस्य संस्तवोऽनुपयुक्तः॥ ३—अथापि वैदिककालीनेन श्रीचरकाचार्येण पौराणिककालीनस्य रुद्रस्य संस्तव इतिहासविरुद्धः। ४ अपि च क्वचिदुपलंभात् क्वचिच्चानुपलंभाद्व अस्य पद्यस्य प्राचीनत्वं दुःसाध्यम्॥ अत्रोच्यते मन्येतावदथशब्देन मंगलाचारः प्राचां प्रणालीति अत एव "अथातोदीर्घजीवितीयमध्यायं व्याख्यास्यामः" इति चरकः। परञ्च आशीर्नमस्क्रिया वस्तुनिर्देशोवापि तन्मुखम्" इति साहित्य पर्यालोचनया वस्तुनिर्देशात्मको मंगलाचारोऽनेन विधीयत इत्यनुपद मेव संसाध्यते। "रुद्रसंस्तवोऽनुपयुक्त" इत्यादिः सर्वोऽप्युपालम्भः साम्प्रदायिकच्छायासंजनितः नतुसाहित्यबुद्ध्या। यस्तु काचित्कभाव उपालभ्यः सहेत्वाभास एव, "चरकस्यकृतिः

कैश्चिद्बहिष्कृता" "अन्येषांवातद्ग्रन्थेप्रक्षिप्ता" इत्यनयोः साध्यत्वात् ॥ साहित्यपक्षपातिनस्तु—"त्रिविधं खलु ब्रह्मणः पदं सर्गस्थिति प्रत्यवहार कारणत्वात्, तत्र चिकित्साशास्त्रे प्रकृतत्वात् शूलपाणिस्तवापदेशेन वस्तुनिर्दिश्यते,, इत्याहुः तदित्थम्—(अर्वाचीनम्) अर्वाग्भवं प्रलयकालीनमित्यर्थः (पदं) रुद्ररूपं (अधिवसन्) भजमानः (शूलपाणिः) शूलं दुःखमेव पाणिर्यस्य तदानीन्तनव्यवहार साधनार्थम्। ननु शूलं त्रिशूलाख्यायुधविशेषः पाणौ यस्येति भ्रमितव्यं स्यात् "विगत करणः केवलंज्ञानमूर्तिरिति" अनुपदं व्याख्यास्यमानत्वात्। एवं विधः परम एव (वः) युष्मान् (पातु) दुःखेभ्यः पालयतु। एतेन सत्स्वपि धन्वन्तरिकल्पेषु भिषङ्मूर्धन्येषु ईश्वरानुकम्पामन्तरेण रोगाणामवश्यंभावित्वमृतथविधानाश्चगदानामगदंकारस्यात्यन्ताभावएवेतिध्वनिसात् सम्पद्यते।

अथकिंविशिष्टोऽसौ शूलपाणिरित्याह–(योगुणग्रावयुक्तः) ग्रावकल्पानामनल्पानां गुणानां राशिरिति भावः, अथ कदा? इत्याशंकांसमाधातुं भूतप्रत्ययेन विशिनष्टि "युक्त" इति स्पष्टः प्रागनादिकालतः सर्वगुणसनाथ इत्यभिप्रेतम्। यत्तदोर्नित्यसंबन्धनियमप्रम् (सः) पूर्वोक्तः (दाः) दाता सुखानां शिष्टानाम् दाता खण्डिता च दुष्टानाम्, (पर्णया) प्रकृत्या (बद्धकेलिः) रचितजगत्क्रीडः "क्रीडन्निवैतत् कुरुते परमेष्ठी पुनः पुनः" इति दर्शनात्। "पर्ण" शब्दो जीवेश्वरप्रकृतीनां वाचकः "अज" शब्दवत्। (वामाङ्गार्धेप्रविशति) वामं चतदङ्गार्धं वामांगार्धम्। प्रकृतेर्वामत्वप्राधान्यान् पुरुषस्यत्वत्रदक्षिणत्वं प्रधानभावात्। एतेन वामायाः अंगार्धे प्रविशतीति व्याख्यातागे

वभ्रमुरेवेति । इहापि—कदा ? इत्याशंका निरासार्थं वर्तमानेन प्रयुक्ते "प्रविशतीति" एतेनस्थितिकालोलक्ष्यते प्राकृतेषु भौतिकेषु कायेषु जीवःशुभाशुभकर्मसाक्षिभावेन यावज्जीवं वर्तत इत्यर्थः । हे मनुष्या ! यूयंतमेवान्तर्देहचारिणं शरण्यं मन्यध्वम् इत्युपदेशः अथापि (यश्चाभेद्यः) अणोरणीयस्त्वात्, अणोरणीयान् महतो-महीयानात्मास्यजन्तो र्निहितोगुहायाम् इतिश्रुतेः । स्वयमभेद्यः सन्नपि सर्वेषामहिताहारविहारवतां भेदकः शूलपाणित्वात् इति अलक्ष्यक्रमव्यंग्योध्वनिः । पुनः ( विगतकरणः ) पृथग-वस्थितः करणेभ्यइन्द्रियेभ्य इति तत्त्वम् „नतत्रचक्षुर्गच्छति नवागच्छतिनमनः इतिवचनात् । अथवा विगतानि करणानि इन्द्रि-याणि यस्मात् सत्त्वविगतकरणः " अयपाणिपादो जवनो-ग्रहीता पश्यत्यचक्षुः सश्रृणोत्यकर्णः " इतिवचनात् । एते-न "विगतकरणः विगतसाधनः केवल ईश्वरः सर्वं रचयतीति-भाषमाणा वेदान्तिनः परास्ताः ॥

(केवलं ज्ञानमूर्तिः) स्पष्टीकृतो ऽनेनपरमात्मनोनिराकारभा-वः । ननु—अन्यत्रसच्चिदानन्दरूपो भाष्यते तेनाधुना विरोधापत्ति रितिचेन्न—सद्रूपायाः प्रकृतेर्वामाङ्गार्थ भावेनव्याख्यानात्, आन-न्दस्वरूपस्यच शूलपाणिपदेन व्यज्यमान त्वात् केवलं ज्ञानमूर्तिः इतिसाधीयः ॥ किञ्च—केवलं ज्ञानंसम्पादयतो नरस्य जराव्या-धिरूपंदुःखं विनश्यतीति ध्वनिविषयः,यथेश्वरः केवलंज्ञामूर्तिः शू-लंदुःखजातंपाणौ वशे कृत्वा आनन्दस्वरुपो ऽस्तितथैव मर्त्यो ऽपि ज्ञानंसमुच्छ्रायन् अनन्दस्वरुपंप्राप्तुमर्हति तदुक्तम्,-विज्ञनसार-थिर्यस्तुमनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोतितद्विष्णोः पर-मंपदम् इति योऽयंज्ञानमूर्तिः स शान्तंपदं किन्नाधिगच्छेत्, ज्ञानेनशा-

न्तिः अज्ञानेनाशान्तिरेवदुःखम् 'सुखमेवारोग्यम्' दुःखमेवचरोगाः, तस्मात् सर्वरोगप्रशान्तये ज्ञानं सम्पादनीय मिति चरकाभिप्रायः ॥

---

अपर आह-- 'यः अर्वाचीनं पदमधिवसन्,'--"अर्वाग् भवमर्वाचीनं पश्चात्कालीन मित्यर्थः यद्वा--अर्वाचीनमैहलौकिकमित्यर्थः । नतुप्राचीनंब्रह्मर्षिगणसेवितं नापिपारलौकिकं तपःस्वाध्यायात्मकमित्यर्थापतिः (पर्ण्याबद्धकेलिः) प्रकृत्यासहरचितविहारः नैव धर्म्याणि कर्माण्यारभते सः पुरुषः ( सदा ) सर्वदा (शूलपणिः ) शूलं दुःखमेव पाणौ यस्य तथाविधोभवति दुःखमन्तरानकिमपितस्य हस्तगतंभवति । किञ्च स तथाविधः पुरुषः गुणग्रावयुक्तो बहुगुणसनाथो ऽपिसन् सदा (वामांगार्द्धंप्रविशति ) वामंचतदङ्गार्द्धं नरकापरपर्यायोबन्धः 'दक्षिणमङ्गार्द्धंतु स्वर्गापरपर्यायोमोक्षः यद्वा--वाममंगार्द्धं सर्वेरोगाः दक्षिणमंगार्द्धं तु आरोग्यभावः, ऐहलौकिकानि पृथिवीतत्वप्रधानानिद्रव्याणि सेवमानस्यसर्वेरोगाः सम्भवन्तितएव वामांगार्द्ध शब्देन लक्ष्यन्ते । तैजसद्रव्याण्युपसेवमानस्यतुनैव ते संभवन्तीत्यभिप्रायः प्रकृतौप्राकृतेषुवापदार्थेषु रममाणः जन्ममरणात्मके बन्धेपतति रोगान्वाऽवाप्नोति इतिचरकाभिप्रायः ॥

( क्रमशः )

# सम्पादकीया विचाराः

## कला कुमारी श्रीमती विद्यावती।

भारतीयेषु विद्याध्ययनं हि विरलमेव क्रियते। तत्रापि पुरन्ध्री-शिक्षणं तु मरुभूमौ जलमिव क्वचिदेवोपलभ्यते। भारतीय महिलानान्दौर्भाग्यमेघः विद्यातरणिमावृत्य स्थितः उपरमा-मपि न कारयति। परं यत्र तत्र विच्छिन्नपटलान्तरादागच्छ-त्तदो रश्मिरुद्दीपयति नभोमण्डलस्यैकदेशम्, सूचयति च विद्याधिगमचातुर्यम्, यस्मै हि नीतिकारा आमनन्तिबुद्धिस्ता 'चतुर्गुणा' इति। विद्याप्रणयिनो भारतीयमहिलासु भाविन्याः सततः जीवनाशां पश्यन्तश्च महोदया ध्रुवमनेन वृत्तेन सुप्रसन्ना भविष्यन्ति यदस्मिन्वर्षे प्रयागविश्वविद्यालस्य कलाकुमार (B. A.) परीक्षायां श्रीमती विद्यावती समुत्तीर्णा। इयन्देवी हि लख-नऊनिवासिनः प्रसिद्धस्य सेठवंशस्य नवकलिका, आर्यसमाज-स्य परमानुरक्ता भक्ता। संस्कृत भाषाया मपिप्रशंसनीयः परिचयोऽस्ति श्रीमत्याः। एतस्मै साफल्याय वयं श्रीमतीं कला कुमारीं विद्यावतीं सानन्दमभिनन्दामः।

## अस्तिकिंब्राह्मणेषु पशुवधः?

अस्तीति सायणप्रमुखाः पौराणिका भाष्यकृतः। नकेवल ब्राह्मणेष्वेव, अपितु वेदेष्वप्यस्ति; न केवलम्पशुवधएव, अपितु नरबधोऽप्युपलभ्यतइति पाश्चात्यदृश्यालवः। नास्ति पशुवधो ब्रा-ह्मणेषु, यत्र यत्रेदृशोर्थः क्रियते, तत्रतुभ्रमसूलक एवार्थ इति श्रीमच्चरणा दयानन्दाचार्याः। तत्र एतादृशे विरुद्धमतवीचीनां मध्ये निपतितो जिज्ञासुर्विह्वलितमति र्विचिन्तयति हन्त भोः! किं करोमि कगच्छामि" 'स्वयमेव ब्राह्मणा मनुशीलय, स्वबुद्ध्या च विचिनुइत्यशरीरिणी वाक् प्रतिभाषते। स्वय मनुशीलनयन्त्रो निपीड्यमानानि ब्राह्मणानि सत्यरसमुद्गिरिष्यन्तीति निश्चितमेव

स्थूलदृष्ट्या निरीक्षणेन तावद्यज्ञेषु पशुहिंसाया विधानं समुपलभ्यते स्थाने स्थाने उपलम्भच्छलेन गतजीवस्य पशोरङ्ग विभागो प्युपलभ्यते तत्र यावत्सूक्ष्मेक्षिका न प्रयुज्यते, ताव न्नान्यः कोप्यर्थः प्रतिभासते परन्निपुण स्परीक्षिते तस्मिन् सन्दर्भे सर्वे सन्देहा निवर्तन्ते। दृष्टान्तरूपेणास्माभिः छिन्नानि स्थलानि समुद्धियन्ते, व्याख्यायन्ते च। ऐतरेयब्राह्मणे ज्योतिष्टोमप्रकरणे समुपलभ्यते—"सवा एष पशुरालभ्यते य त्पुरोडाशस्तस्य यानि किंशारूपाणि तानि रोमाणि ये तुषाः सात्वग्ये फलीकरणास्तद सृग्यत्पिष्टं किकसास्तन्मांसं, यत्किं ञ्चित्कंसारं तदस्थि, सर्वेषां वाएष मेधेन यजते यः पुरोडाशेन यजते,, २।१।८। एतेन विधानेन स्पष्टं प्रतीयते यद्यज्ञेषु पशु शब्दो न चतुष्पदा मेव वाचकः अपित्व न्येषा मपि द्रव्याणाम्पदार्थानां वा। एव मेव,तस्मिन्नेव खण्डे अन्य दपि दृश्यते'पशवो वा इडा'इति,एव मेव छितीय... ञ्जिकाया छितीयाध्यायस्य प्रथमखण्डे अपि बर्हि षां पशुत्व मुपलभ्य... एता दृशै दृष्टान्तैः पशुहिंसा विधानं सन्देह पदवी मारोहति। नव... वदामः,नकापिब्राह्मणेषु यज्ञार्थ पशु हिंसा विधिरस्तीति,। परं वि... र्थमाणानि सन्दिग्धानि स्थलानि प्रायः अर्थान्तर मेव प्रतिपादया... प्रतीयन्ते। विधेयस्तत्र गम्भीरो विचारः प्रकृष्टमतिभिरित्ये... निवेदयामः।

'शारदा'

माघमासस्य सहयोगिनी शारदा शरदृतौ शीत भीतेव चिरका... 'शारदा निकेतने' स्थित्वा दलितजाड्यपाशे ज्येष्ठमासे प्रकाश... मापेति संस्कृतप्रणयिभ्यो विनिवेदयन्तो भृशं नन्दामः। उत्तम लेखै... परिपूरितेति कथनं लोकाचारनिर्वाहमात्रं प्रतियेत, तथापि सूचनी... मिति सूच्यते। पूर्व प्रकाशिताङ्कत्रयापेक्षयातु लेखपत्रमुद्रणादौ नि... ष्टतरेयमिति हृदयं विषीदति। पञ्चविंशतिपृष्ठपरिमितलेखोत्तरं ... विंशतिपृष्ठेषु मुद्रिता संस्कृतपरीक्षोत्तीर्णच्छात्रसूचिर्मासिकपत्रिका... न समुचिताप्रती यते। सा समुज्ज्वलता सम्प्रति नास्ति, यां प्रथम... संख्यायांविलोक्यअस्मादृशां हृदयानन्दवारिधिः सीमानमप्युल्लङ्घ... आशास्महे, शारदाया विज्ञः सम्पादकः अस्माकं निवेदने दत्तावधानो भविष्यतीति।

## ग्लाडस्टन महोदयस्य चरिता-
दुपदेशः।

न केवलम्पुरुषकृतानपि तु प्रकृतिकृतानपि प्रतिरोधान्विजित्य-
द्दशौर्यैः सर्वदा दृष्टसूर्यं सुमहत्साम्राज्य म्प्रतिष्ठापितं, तस्यांग्ल-
देशस्य महिमा पृथिव्याः प्रतिकोणं विस्तृतः: केन न श्रूयते? यैर्मन-
स्विभिरसौ देशः समुन्नतिपथे संचालितः' यैश्च तस्य कीर्तिपताका
आकनाडमाभारतञ्च समारोपिता, तेष्वन्यतमः खलु ग्लाडस्टन महो-
दयः। नासीत्सकलेऽपिधरणिवलये कोऽपि राजपुरुषः प्रजापुरुषो वा
तत्समकालीनः यस्तत्तुल्यं प्रभाव मुपदर्शयितुं शक्तः अभवत्।
तेन कथ मेतावती सिद्धिः कृता! केन चिन्तामणिमन्त्रेण स मानवल-
भ्यम्परमगौरव मुपलेभे?

तस्य शरीर मति पुष्टं कार्यक्षम आसीत्। स दिनस्य चतुर्विंश-
ति होराणां मध्याच्चतुर्दशहोरा पर्यन्तं कार्य व्यापृतः सन्नपि प्रायोनीरो-
गोतनु रबभार। कारणमस्य नियतो व्यायाम एवासीत्। प्रातः सायं
भ्रमणं समये समये मृगया एवं विधाश्चान्ये व्यायामास्तस्य शारी-
रीं शक्ति सुरक्षितां चक्रुः। अतएव स प्रायः जीवेम शरदः शतम,
न प्रार्थनां कर्मणि संघटयितुं शशाक।

स सर्वदा सद्व्यये दत्तमनस्को बभूव। धनस्यवा समयस्य वा
द्व्यय विषये स न कदापि असावधानोऽभूत्। नैकमपि पणमका-
रणं केवलमनस्तोषाय व्ययाञ्चकार। पुत्राय तेन य उपदेशः प्रेरित
तत्र सद्व्ययमितव्यययोर्विषयो मुख्य आसीत्। यातायातधनराशि
स्मरणाय स सदा लेख पुस्तक मेकं स्थापयतिस्म्।

अध्ययने विद्यालब्धौ च स न कदापि शयान आसीत्। वृद्धा
वस्थामाप्यापि न तेन नवस्य विज्ञनस्य संग्रहः परित्यक्तः नवा
राज्यप्रबन्धधीराक्त चेतसा पुस्तकाध्ययनं विस्मृतम्। कथमपि समय
मुपलभ्य स निजज्ञानभाण्डागारे अल्या भ्परिवृद्धि मातेने। अतएव स-
र्वेषु धार्मिकेषु नैतिवेषु वाणीसम्बन्धिषु च विषयेषु प्राप्तनवतर समाचारः
अभवत्। नेव क्रिमीपि मनोयोगस्तस्य मुख्यगुणेष्वन्यतम आसीत् स-
र्वत्रापि क्रियमाणे कार्ये स पूर्णतया नियुक्त चेताः लीनात्मा चा भवत्
न ह्यर्धेन मनसा स किमप्यकरोत्। तस्यैकमनस्कतां विलोक्य सर्वेपि
राजनीतिविदः परमाश्चर्य मुपजग्मुः

एवंविधा अन्ये ऽप्यनेके गुणा स्तस्य महत्त्वाधायका आसन्
परंतु तेषु मुख्याः। येऽपि युवानः निजानि जीवनानि सफलयितु-
मिच्छति तैरनुशीलनीयं ग्लाडस्टनमहाशयस्य चरितमिति।

# ❋ उषाया नियमाः ❋

१ "उषेति" नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते। किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खलत्रपरो महान्विशेषः सर्वतोऽप्यधिकोऽयं विशेषः यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम् र्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥=) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याः प्रते मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्यामभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्करूपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्रे ग्राहक संख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये अस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रा सह पृथगेव व्यवहर्त्तव्यः।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते।

**प्रबन्धकर्त्ता, उषा**
**डाकघर श्यामपुर**

Registered Number A. 659.

* ओ३म् *



# उषा

संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानिविश्वा । ऋग्वेदे





काङ्गड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता

॥ ओ३म् ॥

विषय सूचिः ... पृष्ठम्

*ओ३म्*

# उषा


| प्रथमेवर्षे | तिथि—१—१९७१<br>... ... ...श्रावण मासः ... ... | अष्टमो मासः |
|---|---|---|


## संस्कृत भाषायां
# समासः सन्धिश्च

(२)

(लेखकः—श्रीघनश्यामसिंहः)
बी. एस सी. एल. एल. बी.

## परःसन्निकर्षः कस्मिन्विषये ?

वर्णानां परमं सामीप्यं कस्मिन्विषये भवितु मर्हतीति विचारणीयमधुना विद्यते । समान्यरूपेण सामीप्यं त्रिप्रकारकम्—

(१) सम्बन्धे— In relation
(२) स्थाने—In space
(३) समये—In time

सम्बन्धस्य सामीप्ये सति संहितामापद्य संधिर्विहितोऽस्ति किंवा स्थानस्य सामीप्ये उत समयस्य ?

(क) सम्बन्ध सामीप्यम्—सम्बन्धसामीप्यं सन्धेः कारणं नवेत्यस्य विचारणात् पूर्वं सम्बन्ध सामीप्यं किम्भवतीति प्रदर्शनमावश्यकम् । बहुविधः सम्बन्धः । तेषां सर्वेषां वर्णनं स्वयमेव महदेकं कार्यं वर्तते, तत्रश्रीमतां सतां कालक्षयः निरर्थक एव स्वविषयप्रतिपादने ऽपि अल्पावश्यकमिति स्वल्पं कथयामि ॥

( १ ) समाजशास्त्रे सम्बन्धो भवति तस्य निकटत्वं दूरत्वमपि, यथा सहोदरभ्राता अन्येभ्यो भ्रातृभ्यो निकटतरः सम्बन्धी ॥

( २ ) गणितशास्त्रे आकृतीनां सम्बन्धो भवति, यथा वृत्तस्य अन्याभ्य आकृतीभ्यः एलिप्सो निकटतरः सम्बन्धी।

( ३ ) व्याकरणशास्त्रगते वाक्यविन्यासविभागे शब्दानां यः सम्बन्धो भवति सतु श्रीमतां विदुषां विज्ञात एव। उदाहरणमेकमेव अलं भविष्यति; क्रियाविशेषणस्य सम्बन्धः अन्येभ्यो वाक्यस्थशब्देभ्यः क्रिययासह निकटतरो भवति।

( ४ ) सम्बन्धरूपेण वर्णानां परमं सामीप्यं किमिति स्वयं पाणिनिमुनिना स्वस्मिन् अद्वितीये व्याकरणशास्त्रे सम्यक्प्रदर्शितम् । तच्च ,,तुल्यास्यप्रयत्नं सवर्णम्" इति सूत्रात् स्फुटं विद्यते ॥

सम्बन्धनिकटत्वे स्पष्टे सति विचारो ऽयमुत्पद्यते किं सम्बन्धरूपेण वर्णानां अति निकटत्वं संहिता, यस्मिन्नुपस्थिते सन्धि र्विहितो भवेत् । मन्मतौ तु नैतद् भवितुमर्हति, एवं विचारस्यापि मनसि सम्यक् परिस्थितिः कठिना । यतः वर्णानां सम्बन्धनिकटत्वमात्र एव सन्धिरुपस्थितो भविष्यति, स्थाननिकटत्वं समयनिकटत्वञ्च भवेन्नवा भवेत् । नियमो ऽयं कैयाटिकरूपको ऽस्ति । स्मणं विचार्यतां परिणामश्चापि अनुमीयतां । छकारजकारयोः स्थाननिकटत्वे उच्चरणनिकटत्वे वा अप्राप्ते ऽपि सन्धिर्भवेदिति कुत्रापि दृश्यते । अस्तु ।

कश्चिच्चेद् एवं कथयेद् यद्——उच्चारणसामीप्ये लब्धे सम्बन्धसामीप्यमपि स्यात्, तदेवं संहिता उपतिष्ठते नान्यथा, तदपि अशुद्ध मेव यतः तत् + शुभम् इत्यत्र तकारशकारयोः उच्चारण सामीप्यमस्ति, परन्तु तयोः सम्बन्धसामीप्यं नास्ति ( लृतुलसानां दन्ता इचुयशानां मह्लुः) तथापि अत्र इष्टसंहिता माश्रित्य सन्धिर्भवति । तच्छुभमिति । अतः सम्बन्धरूपो परः सन्निकर्षः संहिता न ।

## ( ख ) स्थानस्य सामीप्यं ( ऑफ स्पेस )

स्थानस्य सामीप्यं स्थाने स्थितस्य वस्तुतो भवितुमर्हति नान्यस्य । यथामुम्बापुरी हरिद्वारापेक्षया पुण्यनगरस्य निकटतरास्ति । परन्तु वर्णास्तु मुखादुच्चरिताः शब्दाः ( साऊण्ड ) न स्थाने स्थिताः; अतएव वर्णसामीप्यं स्थानसम्बन्धि इति पाणिनि मुनिना संहिता शब्देन नेष्टम् । वर्णानां यानि

लिखीतानिचिन्हानि भवन्ति तेषां लेखने स्थान सामीप्यं दूरत्वंवा भवितुमर्हति परन्तु न तत् संहितायाः कारणमकारणं वा। यथा पूर्वं दर्शितमस्ति यदुच्चार्यमाणानां वर्णानां अनुरूपो लेखः स्यात् । तथापि वर्णानां लिखितचिह्नानां सामीप्यं यदि संहिता-शब्देन स्वीकुर्याम तदा अन्येनैकेन काठिन्येन उपस्थीयते। दीर्घे लेखे बह्वीनां पंक्तीनां आवश्यकता प्रायेण भवति। तदा पंक्तेरेकस्या अन्तिमो वर्णः अपरस्याः पंक्तेः प्रथम-वर्णेन सह उच्चार्यमाणो ऽपि लेखे सुदूरम्भवति। स्थाननिकटत्व-श्चेत् संहिताकारणं तर्हि युगपद् एव उच्चार्यमाणयोरपि इत्थं-स्थितयोर्वर्णयोः सन्धिर्न भविष्यति। परं नैतद्युक्तम् ॥

( ग ) समयसामीप्यं ( आफ टाइम )

उक्ते द्वे सामीप्ये तिरस्कृते। समयस्य सामीप्यमेव अधुना अवशिष्टम्। वर्णानां समयसामीप्यमेव संहिता कारणमितिवर्णस्य रूपादेव स्पष्टं प्रतीयते । अस्यैव परमं सामीप्यं परः सन्निकर्षो वा 'संहिता'। अत्रतु भगवतः पतञ्जलिमुनेः भाष्य-मस्माकं शास्त्रप्रमाणं वर्तते। लम्बीभूतं तद्भाष्यमिति तदुल्लेखनं न करोमि। 'परः सन्निकर्षः संहिता' इत्यस्य अनुगामि सूत्रं 'विरामोऽवसानम्' इति वर्तते। एतत्सूत्रमपि संहिताविषये समय-सामीप्यमेव सूचयति।

वर्णानां उच्चारणे यदा परमं सामीप्यं भवति तदैव तयोः संहिता उपतिष्ठते यत्र खलु विरामो भवेत्, न तत्र संहिता कथञ्चित् ॥

## कियन्मात्रं समयसामीप्यं (अर्थाद् उच्चारणसामीप्यं) संहिता ।

अन्तिमः प्रश्नः, परं न खलु सुलभः प्रश्नोधुना विचारणीयोऽस्ति श्रीमतां विदुषाम् ॥ विवेचनीयमिदं विद्यते–वर्णानां कियन्मात्रं उच्चारणसामीप्यं (अर्थात् समयसामीप्यं) संहिता भवति ।

परः सन्निकर्षः संहिता इति वर्णानां परमे सामीप्ये संहिता भवति । परमं सामीप्यन्तु तद् यस्मादधिकं सामीप्य न विद्यते । वागन्तरे यस्मादधिकेन सामीप्येन वक्ता वर्णान् नोच्चारयति । वक्तुः उच्चारण वृत्तयस्तु बह्व्यो भवन्ति यथा द्रुतवृत्तिः, मध्यमावृत्तिः, विलम्बितावृत्तिः । परं वृत्तीनां बहुलता नैतद्बाधते । वक्तुर्वृत्तिस्तु काऽपि स्यात् तस्यामेव वृत्तौ वर्णानामत्यधिकं सामीप्यश्चेद्भवेत् तत्र संहिता उपतिष्ठते । तस्यां वृत्तावपि एतावत्सामीप्यं स्यात् यस्मादधिकं सामीप्यं तद्वृत्तौ वक्तुर्मुखान्नभवति । स्ववृत्तिमनुसृत्य युगपद् एव वर्णानां उच्चारणं यत्र भवेत् तत्र तु संहिता, यत्र च वृत्त्यनुरूपः स्वल्पोऽपि विरामः तत्र संहिता न । अतः तत्र सन्धिरशुद्धः ॥

## कुत्र आवश्यको विरामः ?

विरामस्तु स्थानत्रये भवत्येव; अतो न तेषु स्थलेषु सन्धि-समासौ शुद्धौ ॥

( क ) वाक्यपूर्णे ।

( ख ) विशेषोच्चारणे ( स्ट्रेस आन सरटन वर्डस् ) ।

( ग ) श्वासे पूर्णे ।

( क ) वाक्यपूर्णे—वाक्यपूर्णे तु प्रायेण सर्वैरेव विरामः क्रियते अत्र न कस्यचिद्विवादः ।

( ख ) विशेषोच्चारणे—विशेषोच्चारणे विरामो भवति यथा—एनमेव अवलम्ब्य कार्यं करोमि ॥

अत्र संहिता नोपतिष्ठते, अतः अत्र संधिः सर्वदैव अशुद्धः, संन्निहितसमासोऽपि तथैव, कालिदासेन वा कृतम्भवेत् भवभूतिना वा लिखितम्भवेत् ॥

( ग ) श्वासेपूर्णे उच्चारणे पठने वा यदा श्वासपूर्तिर्भवति तदा तु विराम आवश्यकः । श्वासेनैकेन यदुच्चारयितुं शक्यते तदुच्चार्य श्वासस्य अन्यस्य आवश्यकता भवति । तत्र प्रथमश्वासान्ते विरामे जाते सति संहिता न कथञ्चिद्भवति । अतः यः

शब्दसमूहः श्वासेनैकेन नोच्चारयितुं शक्यते, तत्र सन्धिसमासौ अशुद्धौ। कस्य श्वासः परिमाणरूपेण स्वीक्रियते इति प्रश्नः। यदा तु वक्ता वदति, किञ्चिद्वापठति तदा तु तस्यैव श्वास इति स्पष्टम्। परं यदा कश्चिल्लिखति तदा कस्य श्वासः परिमाणं भवेत्; लेखकस्य किमुत वाचकस्य ? लेखकस्तु प्रायेण स्वस्यार्थं न लिखति परं अन्येषामेव, नहि तर्हि लेखकस्य श्वासपरिमाणं ग्राह्यम्। वाचकस्य चेद् बहवः प्रायेण वाचका भवन्ति, कस्य तर्हि; द्रुतवाचकस्य, विलम्बितवाचकस्य वेति विशेषाभावात् साधारण वाचकस्यैव युक्तम्॥

## अष्टाध्याय्यां लम्बीभूतस्य समस्त पदस्य किं कारणम्

पाणिनिमुनिना कृतायां अष्टाध्याय्यामपि केषु चित्स्थलेषु प्रलम्बसमस्तपदं लभ्यते। तस्य किं कारणमिति न मया सम्यक्प्रकारेण उच्चारितुं शक्यते इति स्पष्टं स्वीकरोमि। तस्यकिं कारणमिति तु श्रीमद्भ्यो मम। जिज्ञासा वर्तते। परन्तु मम मनसि एष विचारः खलु आगच्छति यतः—स्वयं पाणिनिमुनिना यद्रचितं न तदित्थम्। पणिनिनाभगवत्पूज्यपादेन तु अल्पमल्पमेव पदं रचितं भवेत्। तदनुगामिभिः कदाचित् कतिचित् सूत्राणि संधाय प्रलम्बमेकं सूत्रं निर्मितम्भवेत्। परं नैष मे निश्चयः।

## —अद्भुता कथा—

एकदा एकोवनीश्वरतनयोऽमात्यतनयेन सह संजातसौहार्दः सेनापतितनयेन लब्धविस्रम्भः महाजन तनयेनानुभूततारा-रागः संप्राप्तयौवनः नक्तंदिवं सम्भावितपौरुषः काममपि साहस-यात्रां चिकीर्षुस्तिष्ठति। एकदा चतुर्भिरपि यौवन गर्वादनुभूता मितशक्तिभिः ज्ञानशौर्यलालसया देशाटने कृतमतिभिर्वनयात्रैव कर्त्तुं निरधारि। चत्वारोऽपि सादिनोभूत्वा मध्यान्हवेलायाम् यान्तः कस्याऽपि नानानो कह निवहश्यामलितान्तरालस्य कान्तारस्य मध्यभागं प्रविशन्। मध्येवनञ्च निर्भरस्य शीतलस-लिलत्रातायां तटभुविच्छायाभूरुहां फलपादपानाञ्च समृद्धि यथायथ मनुभू यतुरंगानपि किंचिद्वेलं विश्रामय्या मुहुरपि ताना-रुह्यवनाध्वन्यध्वनीना बभूवुः। शनैः शनैरस्ताद्रिमस्तक मणीयति पश्चिमरत्नाकररत्नीभूषतिचा म्बरमणौ मन्मूखसंहत्यरुणायमानं सुधासलिप्तं किमपि देवतायतनं नानातरुपरिवृतम द्राक्षन्। सर्वे च तत्रैव श्रममपनिनीषवस्तुरगानुन्मुच्य वन्यशरारुभयादपि नि-शीथं तत्रै वयियापयिषवः मन्दिराभ्याशमागत्य नितरांसमाधि मुद्रामाकलयन्त मेकं तपस्विनं सन्यासिनमद्राक्षुः। सन्यासिनं मुनिमुद्रातो विद्रावयितु मनभीप्सवो वहिरेव देवतायतनवेदिकायां स्वपितुं कृतनिश्चयाः प्रतिप्रहरमेकोऽस्माकं शरारुभयरक्षायै जागृयादिति समयसन्धां वधाय अस्वपन्। यथा क्रमं महाजन-तनयस्यैव प्रहरः पूर्वमभूत्।

गाढं निद्रामुद्रायां मज्जतामन्येषां जाग्रन्नयं वणिक् सूनुर्वि-चित्रमेव दृश्य मद्राक्षीत्। स एवसन्यासी करेणास्थि एकमवलम्ब्य

किमपि शक्तिशालिनं मन्त्रभागमुच्चैर्जपन्नस्थात् । स च सध्यानमशृणोत् । जपसमकालमेव कडकडाध्वनिर्मन्दिरमखिलं समपूरयत् । यावदेष पश्यति अस्थ्नां वर्षापात इव समजनि समन्ततः । सर्वाभ्योऽपि दिग्भ्यो कान्तारमध्यपतितानि परःसहस्राणि अस्थीनि मन्त्रबलेनैव वयांसी वोत्पत्य मन्दिरमध्यमापेतुः । हिमाद्रिखण्डशैलमिव च शुभ्रमाशु कङ्कालोच्चयमुदचिन्वन् । इयति वणिक्तनयः समाप्तनिजप्रहरवेलः सेनाधीशसूनुं प्रबोध्य स्वयं निद्रासुखमभजत् । सोऽपि सन्यासिनं पद्मासने नानवेक्षितचरस्य कङ्कालोच्चयस्योपकण्ठमासीन मवलोक्य तत्सर्वं विवित्सुर्नव्यमिव च प्रतीक्षमाणोऽनिमेषदृष्ट्या गुडाकेश इव तस्थौ । नानावन्यव्याघ्रद्वीपिचित्रकशार्दूलादिशरारुवृन्दस्य चीत्काराराबान् शृण्वन्न किमपि नव्यमवालूलुकत् । अवसानमीप्सौ काले कङ्कालोच्चयमेकताननावलोकयन्तं गगनस्पृशा च गम्भीरध्वनिना च मन्त्रं जपन्तं साश्चर्यमद्राक्षीत्तपस्विनम् । जपसमवेलमेव सहसोद्भूत् कडकडाध्वनिः कङ्कालोच्चये । अस्थीनि स्वयंमन्त्रबलेनात्मना प्रेर्यमाणानीव परस्परं संयुक्तानि नातिदीर्घेण कालेन कस्यापि वन्यजन्तोरस्थिपञ्जरकमारचयांबभूवुः । सोऽपि बहुकालं विस्मयोद्विस्फारितलोचनयुगलोऽवरुद्धहृदयः श्रुतमन्त्रं मनसाविभावयं स्तस्थौ । अतीते च प्रहरे न किंचिदेवोक्त्वा वणिक्सूनुरिव मन्त्रिसूनुं प्रबोध्य स्वयं सुषुप्सास्वादमाकलयितुं शयनास्तरणमभिव्याप । अमात्यात्मजोऽपि निद्राच्छेदाभिताम्रलोचने पाणि-

तलाभ्यामभिमृश्य प्रहररद्वितयमवदधौ । शान्ते च सकलेऽपि चराचरे नानाभूतप्रेतपिशाचिनीडाकिनीपरिभ्रमणभयावहे च गहने घूकघूत्कारभरिते च गगनेऽमात्यसंभवोऽपि संजातरोमो द्गमः शौर्यमाधाय अस्थिनिचयकलितस्य कस्यापि पिञ्जरकस्यैव पार्श्ववर्त्तीभूय मुनिं समाधिमाकलयन्तं तमेव तपस्विन मपूर्वमिव ददर्श । होरात्रयेऽतीते मुनिरस्थिपञ्जर मवलोक्य ज्वलतेव चक्षुषा स्पष्टाक्षरैर्जेपे मन्त्रम् । जपमनु अस्थिपञ्जरकमभूदेव नव मांसमेदो-मज्जाचर्मादि परिकलितम् । दृश्यमिमवलोक्य समुत्पन्नकुतुको मन्त्रवर्णान् मनसि भावयन् आश्चर्यपारावारे निममज्ज । समाप्तप्रह-रश्च सोऽपि अनुक्त्वैव किञ्चित्पूर्ववत् राजतनयमबूबुधत् । सोऽपि मृतशरीरकमिव पशुं कमपि धृत्वा स्वयं मङ्गीकृत गाढसमाधिं मुनि-वर्यमवेत्य न कमपि विस्मयं तन्वन् साधारण इव प्रहरं यापयं स्तिष्ठति । इतः शनै र्विलीनेऽन्धतामिस्रे विलयमाप्तेषु च सकल-भीषणदृश्येषु पिशङ्गभासाभासिते चैन्द्रीहरिदन्तर ले सोऽपि नृवरात्मसंभवः मुनिं मृते दत्तदृष्टिमेकतानं मन्त्राक्षराणि सुस्फुट मुद्गमन्तमिवालोकयति, यावत् तावच्छनैः शनै रुच्छ्वसन्तं पशुमपि चतुर्षु पदेष्ववलम्बितशरीरं धावितुं कृतक्रममन्ते च मन्दिरा-त्सहसोत्लुत्योत्क्रमन्तं जवेन पलायमानश्चावालू लुकत् । अतीते-च तस्याऽपि प्रहरे जागृतेषु सकलवयस्येषु पुनरपि ते त्रयो निज-वाजिपीठान्यारुह्य प्रकृतयात्रायां प्रवव्रतिरे । क्रमशः प्रयात्सु तेषु गहनं गहनतरमेवाऽभूत् । आमध्यान्हं न कश्चिदपि किञ्चिद-

ण्यूचे। प्रखरैःकिरणैं वर्षति कृशानुमिव प्रचण्डातपम्, क्वचिद्वना-मोकहनिचयस्य च्छायाच्छन्ने तले समेऽपि विश्राममलालसया विशश्रमुः। वन्यफलास्वादनपुरःसरं शीतनीरपानं कुर्वतां तेषां मध्याद् राजकुमार उवाच—वयस्याः—किं भवद्भिः सर्वैरपि न किञ्चिदपि सन्यासिदेवतायतने दृष्टम्। अहं पश्चाद् वक्ष्यामि, पूर्वं भवतां श्रोष्यामि। अस्तु पूर्वं श्रेष्ठिकुक्षिसम्भव एव नः कर्णकौतुकं शिथिलयतु—

वणिक्सुतआह-"देवालये तपस्वी उत्थाय करेणैकेनस्थिशकल मादाय मत्रं जेपे। मत्रंञ्च जानामि। तदन्वेव सकलकान्तार मध्यगोऽस्थिनिचयः सकड़कडाशब्दं देवता यतने प्रौढःकंकालोच्चयोऽजनि। इति कुतुकितस्य महरोमेऽवसानमितः"।

चमूपतिपुत्र ऊचे—"सखायः, मयादर्शि यत् तपस्वी एकतानेन कङ्कालनिचयमवलो कयन् यावन् मयाऽधुनावधिस्मर्यमाणं मन्त्राक्षरं जपति, सर्वा ण्यस्थीनि तावत्सझञ्झणाशब्देन परस्परं मिलितानि एक स्य जन्तो रस्थिपञ्जररूपमादधुः। इयति अन्यं प्रबोधयितुं नियतस्यमे समयो ऽन्तमगात्"।

तदनु मन्त्रितनय उवाच—"अयि मयि प्रहरिणि सति भयाकुलं महद् वनमभूत्। सन्यासी च पञ्जरमेकतारया दृशा पिबन्निव मयास्मृतान्यक्षराणि जपती ति, स पञ्जरः क्षणेन मेदोमांसचर्मा

वगुण्ठितो ऽभूत् । अहमपि समयमर्यादया बद्धः कौतुक्यपि सह-
चरं भवन्तं जागरयन्न सुप्तः" ।

राजकुमारश्चा वादीत्—"भवद्वचनैरेवा भूत्प्रत्यक्षम् । तपस्वी
निरीक्षमाण एव तमात्मना सह योजयति मत्स्मृतेन मन्त्रेणेति,प्र-
चुरतरसौन्दर्यसारसमुदायमयः कुरङ्गः क्रमं विधायोत्सुत्य मम
मानस माकर्षन्नेव सहसा कान्तारं प्रविवेश ।

एवं सुखालाप कौतुकिनश्चत्वारो ऽपि परस्परं
हृष्टाः मन्त्राक्षरस्मरणेना त्मानोविद्यासम्पन्नान्विज्ञाय त-
त्परीक्षार्थं मतिं चक्रुः । तरुतल एवैकमस्थि निरूप्य
वणिक्सुतनयेनोच्चरितमन्त्राक्षरेण संचितान्यस्थीनि निरी-
क्ष्य, सेनापति तनयेनोच्चारितमन्त्राक्षरेण निर्मितमस्थि
पञ्जरकमवलो क्यामात्यात्मजेनो च्चारित मन्त्रेण च मांसचर्मा
द्यवगुण्ठिते सति देहे सर्वैरेव महान्सिंहः समुत्पाद्यमानो ऽत्र
ज्ञायि । सर्वैश्च चकितै भीतैश्च स राजकुमारः भूयो मन्त्रा क्षराणि ज-
पितु न्यरोधि यदयंसिंहो न जीवतु इति । परं राजपुत्रस्तु आत्म-
विद्यां परीक्षितुमनाः न कस्यापि शृण्वन् अन्यानासन्नएव
तरावारोपयामास । आरूढेषु तेषु स्वयमपि क्षणेन मन्त्रा क्षरमु-
क्त्वा सपदि वृक्षप्ररोहमासाद्य दलेषुनिलीय सिंहमपश्यत् । सिंहश्च
समुज्जीवन् तेषु नकमप्यवलोकयन् वाजिनस्तेषां व्यापाद्य कान्तर-
गर्भं प्रविष्टः । गते काले तेचा पि सत्त्वदर्शनेन जातकम्पाः कथमपि
सोत्साहमानसास्तरोरवतीर्यानश्वा एव प्रचेलुः । एवंप्रस्थितास्ते
जलधितीरमासाद्य एकं सत्वं दृष्टिपथमायान्तमवगत्य पटखण्डसं-

क्तेन च तमाकार्य यथाकथञ्चित् जातविस्रम्भास्तमेव सवशा-
रुरुहुः तेऽपि भोजनादि समृद्धेरमीयस्तया तान् भर्त्तुमक्षमाः
उपासन्नप्रान्त एव तत्यतजुः । तेऽपि तटभूरुहेषु निरक्रामन्तः का-
न्तारपदवी मतीत्यान्ततोः जनपदं ददृशुः । आश्चर्यकरं दृश्यम् ।
रम्याणि गृहाणि न कोऽपि निवासी । अन्नपूर्णान्यापणानि-
कोऽपि क्रयविक्रेता । लोहागाराणि धातुमयद्रव्यप्राचुर्यवन्ति परं-
न कश्चिल्लोहकारः । एवं सर्वो ऽपिजनपदः शून्यः । न किञ्चिन्ना-
रीनरमवलोक्यते । गच्छन्तश्चतेराजप्रासादमासेदुः । प्रधान
द्वारमासाद्य प्रतिहारभूमि माख्य असिरिष्टिकाभुशुण्डादिना-
नायुधानिचयमवलोक्य पुरो ययुः न कश्चिद्भृत्यः,सर्वे वाह्याभ्यन्तर
भागाः अवलोकिता नकोऽपि जीवः, अश्वशालायां नको ऽपि-
अश्वः, एवं सर्वत्र शून्यं प्रासादमवलोक्य विस्मितास्ते राजसभा-
भवने गताः एवं षट् सभाभवनान्यतीत्य यावत्सप्तम म्प्रविशन्ति
तावच्चतस्त्रः रूपयौवनगर्विताः मनोहरिण्यो राजकुमार्यः न-
यनानिजह्रुः। अनुपम सौन्दर्यवत्यश्च ताः पुरः उपागत्यैकैकशो वाहु-
वन्धनेन तान्परस्परंविभज्य तेषामागमनं शोभनं व्याजह्रुः । ता-
भिश्च ते सप्रेम नीयमानाः पृथगन्तःपुरे यथोचितम्पाद्याद्यासन-
भोजनदानादिना पृथक् २ सत्क्रियमाणा अभूवन् । तास्तानू-
चुः यं न कोऽपि प्रश्नो जनपदोध्वंसविषयकः करणीयो ऽन्य-
थाऽऽपत्तिप्रसङ्गः।

एवं तेषां तासां च परस्परं प्रीतिनिधौ मज्जतां मज्जतीनाञ्च पृथक् पृथग्युगलं पृथक् पृथग् गृहे गतमभूत्।

तथानुष्ठिते राजकुमारेण जनपदोध्वंसनविषयमापृच्छ्यमाना राजकुमारी सास्रमूचे—"

कुमार ! दयनीयोऽसि, तथापि रूपसमृद्ध्या राजपुत्र इव लक्ष्यसे। श्रवोगोचरं कर्तुमर्हसि ममानाथाया दैवलसितानि आसाञ्च सवयस्यनां वृत्तानि च। एतास्तिस्रोऽपि राक्षसपत्न्यः राजकुमारीवेषेण अत्र निवसन्ति। अहं च वस्तुतोऽत्र पुरा निवसतो राज्ञस्तनयाऽस्मि एता अत्र गतेषु कतिचिद्वर्षेषु समायाताः मम पितरं भ्रातरं स्वासारं मातरं किं बहुना सर्वमपि राजकुलं व्यञ्जनवदभ्यवजह्रुः। शनैः शनैश्च अमात्याः दासाः पौराःपशवश्च सर्वे एवजीवभृतो निशाचरीभिरेताभिः कवलिताः। जनपदस्य शून्यावं तु पुरैव भवता अज्ञायि। अहमेकाकिनी मन्दभाग्या निवसामि जीवनस्य दिनानि गणयितुम्। भवन्तोऽपि तैरेवभक्ष्यन्ते कालान्तरेणेति तु शुचोवसरो मे।

राजपुत्र आह,—"भवती भवति कुतो न भवति निशचरी कुतो मे प्रत्ययः"।

साचाह—"यद्येवंतर्हि,निरूपय यदेताः स्वल्पकेन भोज्येन न तुष्यन्ति परंमभूताभ्यवहाराय निशिनिर्गत्यद्वीपान्तरे गच्छन्ति"।

अन्येद्युःसर्वानपि सहचरानाहूय राजकुमारः प्रियाववचनानि गूढतयाऽब्रवीत् अकथयच्च यद्रात्रौ नकेनापि शयनीयं परं ता एव मिषेणावेक्षणीयाः क यान्तीति। एवं ते सर्वे रात्रौ न स्वपन्तः मिषेण राक्षसीः यान्ती रवलोकयामासुः।

निशाकालं च ता अन्यत्र क्षपयित्वा प्रातरा मध्यान्हं निशाचर्यः स्वपन्ति परं राजकुमारी न क्वापि याति—

गतेषु कतिपयेषु दिनेषु राजकुमारी एकत्र प्रक्षिप्तानि सर्वाण्यपि अस्थीनि अदर्शयत् । ते च अधिकं विस्रम्भभाजः राजपुत्रीवचना देव तस्या आभरणानि आदाय तटमासाद्य सद्यं प्रतीक्ष्य संकेतपुरः-सरमाकार्य प्रातरेव राजकुमारीमपि गृहीत्वा प्रतस्थिरे । नौकर्णधा-राश्च वलेन क्षेपणीः क्षिपन्तः अरित्राणि चालयन्ति । मध्यान्हका लादूर्ध्वमेव अष्टयोजनानि दूरं निर्जग्मुः । यतोहि निशाचर्यः श-यनमुन्मुच्यापि न किञ्चिदपि कर्तुमपारयन् । तदनु राक्षसीनां दूरतएव भयवहा मूर्तयो ऽदृश्यन्त प्रतारणपूर्वं क्रन्दन्त्यः । परं ते तु रक्षिताः सन्तः कर्णधारैः कारण वशा न्नेदीयस्येव नगरे सक्ताः । तत्रैव तटकान्तारपदवीं व्रजत्सु तेषु कुमारी श्रमार्ता त-स्थावन्ये ऽपि सहैव न्यसीदन् । आभरणमुक्तामूल्येन च क्रेतुं गो-व्यं प्रहितो वणिक्सूनुरापणमासाद्य न पुनरायगौ तदनु चमूप तिजो ऽनु चामात्यजस्ततो राजकुमारो ऽपिगत्वा न पुनः निरवर्तत । एते चत्व रो ऽपि स्वनगरं प्रतस्थिरे । साच राजतनया जना न्पृ-च्छन्ती राजकुमार नगरमेवाजगाम तत्र चसाऽऽत्मानं दिव्य-रूपकां रव्यापयन्ती सर्वानपि पौरानक्षदीवने आह्वयाञ्चक्रे । पणश्च लक्षमुद्राः । पूर्त्यभावे कारागारः राजकुमारीगृह एव । ते सा राज्ञाऽऽज्ञप्ता ऽपि तान् परि चितचरांश्चतुर श्चरानक्षक्रीड-नादेवयितुमागतान् ददर्श।साच सहजकौशलात्त्रीनपि विजग्ये। पु-

नश्च राजकुमारसपि द्वित्रि विजित्य आत्मानं परिचाययन्ती राजकुमारं परिणीय निशाचरीभिर्निजजंग्धकुलविरहसंतापेन दग्धमानसा नकथमपि शर्म लेभे। चत्वारोऽपि ते पुनः स्तमेव साधुमुपगत्य मारण विद्यामपि प्रभूतविनयेन संप्राप्य कुमारिजनकगृहमासादयन्ति। यावत्ता निशाचर्यो व्यात्तमुखाः समायान्ति सहसैव तेऽपि शूरा मन्त्रबलेन ताः निर्जीवा अकुर्वन्। संजीवन विद्यया च सकलमपि राजकुलं समुज्जीव्य पुरमपि सकल जीवैः सम्पूर्य नवमिव जगद्व विरच्य सुखेन कालं निन्युः।

---

## सुभाषितानि

पात्रभेदवशाद्वस्तु विकृतिं भजते यतः।
वेणुशुक्तयहिपीताम्भः मुक्तारत्नगरायते ॥ १ ॥
निगृहीतः सकृच्छत्रुः सुखं जेयो न संशयः।
अगस्त्यपरिपीताब्धि र्वानरैरपि लंघितः ॥ २ ॥
कर्मसादृश्यमात्रेण नामख्यातिः प्रशस्यते।
भिषजोऽपि न किं जाताः यमराजसहोदराः ॥ ३ ॥
क्षमाशक्तिमतांसत्यं मन्येषातुविऽम्बना
नरेन्द्रो विश्वविश्वात्मा तन्नराः विश्वकद्रवः ॥ ४ ॥
एकेनाऽपि कलंकेन साध्वसाधुक्रमो मतः।
सास्त्यैव केवलंभेदो चूषकासरयोर्महान् ॥ ५ ॥
यस्मिन् कलौ नृपाद्व भीरुर्विप्राच्छूद्रोऽधमाद्व गुरुः।
तस्मिन्नेव गिरेः पद्मं सलिलादग्निरुत्थितः ॥ ६ ॥

# विकासवादः
## ( २ )

अस्य लेखस्य पूर्वभागे उदाहरणदान पुरस्सरं स्फुटतां नीतो विकासशब्दार्थः, निर्दिष्टश्च दिङ्मात्रेण किमपि प्राणिनां विकासविषये। सम्प्रति च मानवजाते र्विकासविचारसमकाल-मेव प्राणिनां विकासविषयेऽपि किञ्चिद्विशिष्य लिख्यते।

परं नैष सुगमः प्रश्नः। अस्त्यत्र बहुकाठिन्यम्। तत्र प्रथमं मानवजीवन क्षेत्र मतीव विस्तृतं क्लिष्टश्च वर्तते। सन्ति च मनुष्याणा मन्य प्राणिभिः सह बहवः संबन्धाः। द्वितीयश्च मनुष्यत्वाभिमानं दूरतः परित्यज्य केवलं विज्ञानदृष्ट्या तत्संबद्धप्रश्नविचारोऽनु-भवगम्य इति। केचि 'न्नैष प्रश्नो मनुष्ये विवेच्यो, यतो हीनता मापादयत्येष मनुष्यत्वगौरवमिति' वदन्ति। परं विज्ञानं तु सत्यमेव मार्गयति, न सत्यापलापः शक्यते कर्तुम्। न चापि मनुष्यस्य कापि हानिः, मनुष्योत्पत्तिज्ञानाज्ञाने न मनुष्यं परि-णमयतः। न चापि सत्याज्ञानं गौरवहेतुः।

अत्र हि पूर्वं शारीरिकविकास विषये विचारः, मानसिक विकास विषये पश्चाद्विचारयिष्यते।

मनुष्यः परमात्मानो विशिष्टा सृष्टिरतिक्रामति विकास-नियमान्निति केषाञ्चिद्विचारः। परं भ्रममात्रमेतत्पुरः प्रदर्शित विवरणेन च समाधीयते—

पृष्ठवंश युतानां प्राणिनां विभागस्य Sub Kingdoms पञ्च-श्रेणयो मत्स्य मण्डूकसर्प पक्षिस्तनपायिनश्चेति सन्ति। तत्रहि

मनुष्यः स्तनपायिनां श्रेण्यां वानरक्रमान्तर्भूतोऽस्ति । [ क्रमः कक्षा Order ] संवदति मनुष्यवानरयो राभ्यन्तरिकी रचनेति निर्विवादविषयो विकासविरोधिभिरपि स्वीकृतः ।

तत्राष्टासु वानरजाते विशेषतासु मुख्याश्चतस्र इमाः—(१) हस्तपादयो र्वस्तुग्रहण शक्तिः (२) द्विविधाश्च दन्ताः, अस्थिराः ( दुग्धदन्ताः ) तदनु स्थिरा दन्ता भवन्ति (३) हस्ते पञ्च पञ्चाङ्गुल्यस्तदग्रे कररुहाश्च भवन्ति (४) कुचद्वयम्, येन माता दुग्धं पाययति शिशून्। एता विशेषता अधीत्य को वानरमनुष्यजात्योः सादृश्यं तिरोहितुं क्षमः ।

वानरकक्षाया स्तुलनात्मकनिरीक्षणेन मनुष्यस्य सकृत्तेभ्यो वानरादिभ्य श्चत्वारो भेदा दृष्टिपथि समागच्छन्ति येभ्यश्च सर्वोच्चपदे मनुष्यो निधीयते वैज्ञानिकै स्तद्यथा—ऋजुगतिः, मस्तकस्यात्यधिकविकासो , वाचः स्पष्टभाषणं, विवेक शक्तिश्चेति ।

चतुर्णां चरमौ भेदौ द्वितीयभेदाश्रितौ वर्तेते । अत्रेदमवधेयं यद् भालोन्नतिसमकालमेव गतावपि विशेष आपतति । वानर इतरेभ्यः प्राणिभ्य श्चतुर स्तस्य भाल उन्नतो ऽतएव सोऽपेक्षयाऽधिकऋजुगतिः । वानरजीविभिःशिक्षिता वानरा यष्टिसहकारेण चलन्तः सर्वैरपिदृष्टा स्युः । एष भालोन्नतेः प्रभावः ।

यदि हस्तपाद सहकारेण कश्चन्मनुष्यश्चलेत्तदास्य दृष्टि र्भूमौ निपतिष्यति , नालञ्चायासमन्तरा ऽग्रे निहितं वस्तु द्रष्टुम् । यतो

मनुष्यस्य भालश्चक्षुषो ऽपेक्षया ऽग्रगतो वर्तते। सम्मुखस्थितवस्त्ववलोकनाय शिर उन्नमय्य द्रष्टव्यं भवति, परमुन्नमनं शिरोदुःखद मिति, स्थित्वा चलन्ति। स्फुटमेतदधुना यन्मस्तकोन्नतिसमकालमेव गतावपि भेदः स्वयं प्रादुर्भूतः।

क्रमिक-विकास साधकानि लक्षणानि बहुषु प्राणिषु लभ्यन्ते, मनुष्य वपुष्यपि न तेषा मभावः। मनुष्य कायस्य सूक्ष्मेक्षिकया विभावनेन स पुरातनवस्तूनां मञ्जुतालय एव प्रतीयते। ये ऽवयवा इतर प्राणिनां कार्यसाधनविधा वुपयोगिन स्ते मनुष्यं प्राप्य किं चित्कृशाः संवृत्ताः, यतो मनुष्य उपायान्तरै स्तदुपयोगं साधयति। एते ऽनुपयुक्तावयवा अवशिष्टावयवे त्यभिधीयन्ते। सन्ति बहवोऽवशिष्टा स्तेषां द्वित्रा एवात्र प्रदर्श्यन्ते :—

स्वैरं त्वगिन्द्रियचालनशक्तिर्बहुषु प्राणिषु विद्यते। शरीराधिष्ठतमक्षिका एते त्वचमाकुञ्च्या पसारयन्ति। जल क्लिन्नवपुष स्त्वग्चालनेन जलमुद्धूयानार्द्रा भवन्ति। मनुष्यवपुषि नैतेषां स्नायूनामभावः। पर मनुपयोग वशादपगत शक्तय स्ते संवृताः। एवं कर्णचालन शक्ति रपरप्राणिषु प्रत्यक्षं दृश्यमाना मनुष्ये वर्तमाना प्यनुपयोग वशा न्निभृता हीनाच संवृत्ता। सर्वेऽपि प्राणिनो घ्राणेन्द्रियेण घ्रात्वा ऽऽहारद्रव्य मन्वेषयन्ति परिचिन्वन्ति चारीनास्माकं घ्राण शक्तिः प्रनष्टा न, पर न्त्वपचिता त्वस्ति। अफ्रीका प्रदेशवासिनां वनेचराणा मश्वशो ऽपि सभ्यजना पेक्षया घ्राणशक्ति स्तीक्ष्णा वर्तते। घ्रात्वैवते आहारद्रव्यं परिचिन्वन्ति।

एतद् व्यतिरिक्ता अन्ये ऽप्यवयवा सन्तिः–गर्भावस्थायां कायो बहुधा परिवर्तते गर्भस्य षष्ठेमासि बालक शरीरं वानरवनमानुषादि वल्लोमा च्छन्नं भवति। प्रसव समकालं किंचित्पूर्वं वा लोमान्यपयन्ति । केषाञ्चित्तु वानरा दि वल्लोमाच्छन्नं भवति, कचित्कचिदेतादृशा मनुष्याः सन्ति । एवमेव शैशवे आसञ्जनशक्ति र्बालकेषु भवति 'प्रत्येकं वस्तु दृढं गृह्णन्ति परं वर्षद्वया नन्तर मेषाशक्ति रपयाति । सर्वतो विचित्रं चिन्हं यत्केचि च्छश शृङ्गायितं वन्ध्या पुत्रायितं वा मंस्यन्ते लाङ्गूल मस्ति । एशिया खण्डस्य नैऋत्यदिशि सम्प्रत्यपि लाङ्गूलवन्ति कुलानि लभ्यन्ते, नव दश वा इन्चमितं लाङ्गूलं तेषामस्ति ।

कुत इमानि चिन्हानि समागतानि किं वैषां प्रयोजनमिति विकासमन्तरा न केनाप्युत्तरीतुं शक्यते । मनुष्य देहे ऽवशिष्टाङ्गोपस्थिति स्तेषां वनमानुषैः सह संबन्धं द्योतयति, अवश्यमेते वन मानुषेभ्य एव विकास क्रमेण प्रादुर्भूता इति ।

विकाससाधक मत्यन्तं बलवत्प्रमाणं वर्तते । गर्भे नवमासं याव द्वालको वसति, सुक्ष्मकणाद् गर्भे प्रारम्भः, क्रमशो गर्भ उपचीयते, उपचयेन सार्द्ध मेव गर्भस्य रूपमपि प्रवर्तते। मनुष्यो गर्भावस्थायां पञ्चविधं रूपं बिभर्ति, मत्स्य मण्डूकसर्प पक्षि स्तनपायिनाञ्चेति, प्रसवसमया त्किञ्चित्पूर्वमेव मनुष्य रूप मापद्यते । अयञ्चास्ति गर्भशास्त्रसिद्धान्तः "प्रत्येकम् प्राणी गर्भावस्थायां स्वपूर्वजान् समासेनानुकरोति ,, इति । एव ञ्च स्तनपायिनो ऽवस्था चतुष्टयानन्तरं, पक्षिणो ऽवस्थात्रया नन्तर मेव स्व वर्तमानरूपे आगच्छन्ति ।

प्रायः प्रश्नः समुदेति किं मनुष्यस्य वनमानुषेभ्यो गोरिल्ला प्रभृतिभ्यो विकासो ऽजायता होस्वित्कापि मध्ये शृङ्खलावर्तते वैज्ञानिकाः पिथेकेन्थोपसरेक्टसाभिधं प्राणिनं वनमानुषमनुष्य मध्यवर्तिनं कथयन्ति , तेषां कथनस्य सम्प्रति पुष्टिर्जाता । जावा कोर्नवाल प्रभृतिषु द्वीपेषु तस्य कीकसावशेषं शरीर मुपलब्धम् । अयं प्राणी सम्प्रति नोपलभ्यते ।

एवञ्चावलोक्यते यदवश्यं मनुष्याणां विकासेनैवो त्पत्तिर्जाता । वैज्ञानिकानां नये ऽष्टलक्ष कल्प संवत्सर पूर्वं मनुष्योत्पत्ति र्बभूव । अस्मिन् समये मनुष्यबुद्धिसामर्थ्यादन्येभ्यः प्राणिभ्यो महदन्तरं जातम् ।

मस्तकोन्नते र्विलसित मप्याहार्यम् । सम्प्रति च मस्तकोन्नतिभेदेन मनुष्यजातिष्वपि महदन्तरं जातम्, इदमन्तरं ततोऽप्यधिकं वर्तते यावदसभ्यमनुष्ये वनमानुषे अस्ति । विकासस्य न मनुष्ये एव परिसमाप्ति रपि तु विकासचक्रभ्रमः, विकासेनैव मनुष्येष्वपि यहूदी मंगोल नीग्रो बुशमैन हरटैन्ट ब्रिटन फैञ्च प्रभृतयो जातयो रूपरचना बुद्ध्यादिषु मिथोऽभिद्यन्त । यदि नाम मनुष्यजातौ जातानि परिवर्त्तनानि विचार्येरन् तान्यपि ग्रन्थान पेक्षन्त इति ।

अन्ते च वयं मूलग्रन्थ कृते धन्यवाद दानपुरस्सरं पाठकमहाभागान्मूलग्रन्थावलोकनाया नुमन्महे ।

देवः

# सम्पादकीया विचाराः

## वेदेषु राजधर्माः

वेदेषु मनुष्यसम्बन्धिनां सर्वेषामपि व्यवहाराणां विधानमुपलभ्यते। न हि जीवनस्य कोऽपि भागः, न च समाजस्य कोऽप्यंशः, यमवलम्ब्य वेदेषु नोपदिष्टमस्ति। वैदिको धर्मो व्यापी, सर्वमपि जगत्स्वगर्भे निदधाति। सर्वमपि ऐहलौकिक पारलौकिकं व सुचरितं वेदेप्रतिपादित मस्ति। राज्ञां के धर्माः? के कर्तव्यपरायणा राजानः के च कर्तव्य विमुखाः? इत्याद्यपि सर्वम्प्रदर्शित मस्ति वेदमन्त्रेषु। राज्यं हि मानुषाणां हिताहितयो मूलभूतं वस्तु। प्रजानां सुखदुःखे राज्ञि राज्येचैवावलम्बेते। अतस्तद्विषये वेदकृता उपदेशा अवश्यमेव अन्तः स्थापनीयाः, कार्येचापि परिणमनीयाः राज्ञि कर्तव्यपतिते सति प्रजा अपि विषीदन्ति। तस्मिँस्तु धर्मपरायणे सुखयुक्ताः समृद्धाश्च संजायन्ते। एतस्माद्धेतोराज्ञः सुपथप्रवर्तनम्प्रजाना मेव कर्तव्य मस्ति।

## राज्ञे कर्तव्योपदेशः

### एवं हि वेदेन राजान म्प्रत्युपदिश्यते—

आत्वाहार्ष मन्तरेधि ध्रुवस्तिष्ठाविचाचलिः।
विशस्त्वा सर्वा वाञ्छन्तु मात्वद्राष्ट्र मधिभ्रशत्।
ऋ। १०। १७। ३१

हे राजन्! अहन्त्वा राज्येन युनज्मि। त्वमन्तरेधि। राजसिंहासने स्थिरो भूत्वा तिष्ठ। चञ्चलोमाभूः। सर्वासाम्प्रजानाम्प्रियोभव, ताः हितकारिणन्त्वा अभिलष्यन्तु। तव राष्ट्रं न नाशं यातु। नाशो न भवेदेतदपि तदैव सम्भवति यदा राजा प्रजाना म्प्रियः स्यात्।

निषसाद धृतव्रतो वरुणः पस्त्यस्वा
साम्राज्याय सुक्रतुः । यजुः । १० । २७

साम्राज्याभिलाषुकेन राज्ञा धृतव्रतेन धर्मकर्मणि सुदृढेन भाव्यम्। तेन प्रजासु समव्यवहारेण भाव्यम्। किञ्च तेन शूेष्ठकर्मणा भूत्वा दुःखेषु प्रजाना म्परिरक्षणं विधेयम्।

स एव राजा साम्राज्यस्य महतो राज्यस्याधिकारी, यः प्रजासु समवृत्ति धर्मपरायणश्च भवति। यस्तु प्रजाभ्यः करमादातुमेव जानीते, नतु तासां हिताय तद्व्ययं, सतु न साम्राज्याधिकारी।

## ईश्वरः कं रक्षति ?

कीदृशं राजान मीश्वरो रक्षति, कीदृशञ्च न रक्षतीत्यपि वेदेन प्रतिपाद्यते।

न वा उ सोमो वृजनं हिनोति
न क्षत्रियम्मिथुया धारयन्तम्।
ऋ। ७ १०४। १३।

सपापं पुरुषं सोमो न पाति, नापि मायया वर्तमानं, स्वार्थञ्च प्रजाः पीडयन्तं क्षत्रियं स सोमो रक्षति। प्रजानां हिताय चेष्टमानं जनमेव सत्क्षत्रिय मन्यन्ते, पूजयन्ति च विज्ञाः प्रजाः। तमेव चेश्वरो रक्षति।

## तक्षशिला

बौद्धाना मितिहासे तक्षशिलाया नाम सुप्रसिद्ध मस्ति। ततः परं यवनसेनापते रलक्षेन्द्रस्य विजयवृत्तेष्वपि तक्षशिलाया नाम

प्रख्यात मस्ति। सा हि नगरी विद्याया वैभवस्य च निधिरासीदि त्यैतिह्याध्ययनेन प्रतीयते। बहोः कालात्काल दुर्विलसिन हीनतांगता, मृत्पटलै राच्छादिता च सा नगरी सम्प्रति पुरातत्वविद्भिः सयत्न म्प्रकाशमानेतु मिष्यते। तदर्थं म्भारतीयराज्यात्पुष्कलन्धन साहाय्यमपि प्राप्यते। गवेषणकार्यस्य प्रबन्धो राज्यैनैव क्रियते। यद्यदाविर्भूतं, यच्च गवेषणायाः फलञ्ज्ञातं, तदत्याश्वासजनकमस्ति। उत्साह मुपलभ्य भारतराज्येन विंशतिसहस्ररूप्यकाणा मन्यदपि साहाय्यम्प्रदत्तम्। आशास्यते, एतत्स्थानस्य खननेनान्वेषणेन च भारतेतिहासस्य महान् लाभो भविष्यतीति।

## वसु महोदयस्य प्रशंसा

"पश्चिम एव ज्ञानानान्निधिः, तत्रैव विद्या च सम्पच्च विलसति। शाश्वतिको विरोधः पूर्वस्य च परीक्षणनिरीक्षणात्मकविज्ञानस्य च। भवतु भारते दर्शनाना मुन्नतिः, विज्ञाने तु भारतीया बुद्धिः प्रवेष्टुमेव न शक्नोति' इत्यादयः सर्वेऽपि पाश्चात्यानाम्प्रवादाः खण्डिताः श्रीमता जगदीशचन्द्रेण विज्ञाने नवीनानि तत्वान्याविष्कृत्य। सम्प्रति स इंग्लैण्डदेशम्प्रति गतोऽस्ति। तस्य प्रज्ञाविलसितान्यवलोक्य नून माश्चर्य माप्ताः पाश्चात्याः। तस्य परीक्षणानि दृष्ट्वा तत्प्रशंसार्थं स्पर्धन्ते। वाइनामहानगरेऽपि वैज्ञानिकै रवलोकितानि तदाविष्करणप्रमाणानि। उच्चैस्तराङ्किल वसुमहोदयस्य मतिमहिमानं गायति पाश्चात्या पाडितमण्डली, या हि गुणगौरवं सर्वत्रापि सम्मानयति।

# काव्य युगलम्

अस्माभिः श्रीहेम चन्द्ररायेण कविभूषणोपाधिना विरचितं काव्ययुगलमासादि। तस्यैवात्र कतिचिच्छन्देषु समालोचनां वयं कर्तुमीहामहे।

काव्यस्य तत्वमस्पृशद्भिः पूर्वमेवास्माभिरिदं निवेद्यते यत्कविरसौ-पद्येप्यस्त्येव भाववर्णनाप्रबन्धपटुः। परमात्मनोवाग्विलासं पद्येष्वेव जग्रन्थेति नितरां न रोचते। कवयः प्रायः पद्यवन्धमेव काव्यस्य काष्ठां परां मन्वत इति महदेवाऽस्ति नः कौतुकम्। यदिकविभूषणमहाभागः स्वसाहितीविनोदेन गद्यात्मना कामपि निजां यशः परम्परामासादयिष्यत् तन्न नं नितरां नोऽपि हृदया न्यावर्जयिष्यत्।

सन्त्येवबहूनि पद्यात्मकानि काव्यानि परं गद्यात्मिका सरस्वती नैवैव दृश्यते। वचसः साफल्यमपि गद्यकलायां नैपुण्यासादनेनैव महतां सम्मतंभवति तद्यथा।

## "गद्यं कवीनां निकषंवदन्ति" इति

अस्तु तथापि काव्यद्वय मिदमपि गीर्वाण साहित्ये कुसुम द्वयमिवान्तर्भवित्विति तथाऽपि विनोमोद एव सामालोचनदृष्ट्या उभयत्राऽपि काव्ये किञ्चिन्नवीनमिवोपात्तु मीहमानेन न किमपि कौतुकास्पदं लभ्यते यत्र चित्तं निरन्तरं भृङ्गायेत, प्रायः प्राचामेव सरणिरत्राऽप्यनुगता दृश्यते। तएव भावास्तादृश्य एव कल्पना तादृशमेव भौगोलिक मिव वर्णनं यदधुना नव्यविज्ञानसमुल्लसित चेतो वृत्तीनां वृत्तिर्न मोदयति। वयंतुतत्र—

पुराण मित्येवन साधु सर्वं नचापि सर्वं नवमित्यवद्यमिति कालिदासानुमोदनेनाऽपि नव्यमेव विलसितं प्रतीक्षामहे।

तथापि वालानां सरलतया यथाकथञ्चिद्रोचकतया च भवेदेव कथाववोध इति कृते यदि काव्ययुगलं प्रवर्त्तते चेत्सदिति अस्त्येव नस्तोषः।

सुभद्राहरणे विशेषतः किञ्चिद्रोचकत्वं कवेरभिलषितं प्रतीयते तत्राऽस्त्येव काचिदितरा च्छविरिति सा नूनं सहजतयैव हृदयंगमा भवति।

इदमप्यत्र कथनंनारुचिकरं, यदेतयोः काव्ययो र्ग्रन्थनस्य किञ्चित्सामाजिक मुद्देश्यं नास्तीति प्रतीयते। किमुद्दिश्यायं वाविलास इति प्रश्नः सदा नश्चेतसि जागरूकः।

प्रायः कवीनां क्रान्तदर्शिनां सदायाग्विलासः किमपि वर्तमानं प्रयजनमपेक्षते इति।

अन्यथा कृतोऽयं वाग्विलासः यदि कृतः मनो विनोदायेति तत्र न नो वचोऽवसर इति।

कुशाग्रः

## ※ उषाया नियमाः ※



१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते। किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिकोयं यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम र्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्धरूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासिकं च मूल्यमष्टावाणकाः ।।) एकस्याः प्रते मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्यामभीप्सुभिः पत्रेण सह स्वयेनवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्रे ग्राहक संख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रैत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यः।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते

प्रबन्धकर्त्ता, उषा
डाकघर शामपुर

* ओ३म् *




# संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानि विश्वा । ऋग्वेदे ।

काङ्गड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता

॥ ओ३म् ॥

विषय सूचिः — पृष्ठ

*ओ३म्*

# उषा

| प्रथमेवर्षे | तिथि—१—१९७१<br>... ... ...भाद्रपद मासः ... ... | नवमो मासः |
|---|---|---|

## कालिदासः

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

अयि सहृदयाः! कवयितॄणां मूर्धन्यस्य समालोचने प्रवृत्ताः स्मस्तत्र पूर्वपातमन्येव शक्तिमात्रामुत्तोलयितुं न क्षमतां विभावयामः । अस्तु । तथा सतां सहृदयानां हृदयभावनाबलेन कविसम्प्रदायशिरोमाणिक्यस्य भारतीविलासविकासकस्य कालिदासस्य विषये किमपि वयं कथयितुं प्रवर्त्तामहे ।

सरस्वती सारमजानतामस्माकं गुणदूषण विवेचनन्नाम दुस्साहसमात्रम् । तदेकतो विहायान्यदेव विदग्धविलसितं विभावयामः ।

कालिदासस्य परां कीर्त्तिं गणयन्तः केचनैतिहासिकाः कालिदासस्य कालं निरूपयितुमक्षमास्तस्यैव वर्णविन्यासमित-

श्चेतश्च व्यत्यासयन्त आत्मनोमतिलाघवेन किमपि विदितं बहु-मन्यन्ते—तच्चापि कतिपयैर्न सह्यते तदेव पाठकानां पुरो विधातुं वयं क्षमाः। तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्ति हेतवः हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिःश्यामि काऽपिवा ॥

वंग प्रदेशे विजय बाबू नाम्ना प्रसिद्धिं गतः कालिदासस्यैव वर्णं स्तस्य कालं निर्णिनीषति, पञ्चमशतके च (४४५–४७०) कालिदासस्य कविताविलासं स्थापयति—

भवान् कथयति—

समुद्रगुप्तस्य समये भारत भुवमलंचकार कविकुलचक्र चूड़ामणिः कालिदासः अतएव प्रबन्धेषु रघुवंशादिषु तन्नामाभिव्यञ्जनाबलाज्जग्रन्थ तद्यथा—

'आसमुद्रक्षितीशाना मानाकरथवर्त्मनाम्।'

इत्यत्र समुद्रगुप्तपर्यन्तं क्षितीशानां राज्ञां विस्तार इति।,, "दिलीप इति राजेन्दु रिन्दुः क्षीरनिधाविव"इत्यत्र चन्द्र गुप्तस्य सम्भूति रुपक्षिप्यते

"स्कन्दस्य मातुः पयसां रसज्ञः"इत्यत्र स्कन्दगुप्तस्य नाम स्फुटी भवति,

"हरेः कुमारोऽपि कुमारविक्रमः" इत्यत्र च कुमार गुप्तस्य नाम व्यक्तिरुपलक्ष्यते।

स्कन्दगुप्तस्या नन्तरं पुरगुप्तस्य प्युद्भूतिं 'पुरोजन्मतया गुणै

श्चे,ति षोडषसर्गे कविरुप चिक्षेप ।"

एवमेव च कालनिर्णयमनुसंदधता तेन पुष्पपुरनिवासिनो मगधेश्वरस्य काल एव कालिदासस्य निश्चितस्तदस्यैवेतिहासिकान्वेषणस्य वयं समालोचनां कर्तुमीहामहे ।

प्रथमं (१) तावदासमुद्रक्षितीशानां मित्याादिषु शब्दरचना ज्ञानपूर्वि का न वा ? चेज्ज्ञान पूर्विका, तर्हि नव्यनव्यकल्पनोद्भावनं नाम न सर्वथाऽपि विदग्धोचितम् । अज्ञानपूर्विका चेत्तदपि विदग्धानामप्रीतिकरम् । संविज्ञान पूर्वकत्वेऽपि रघुवंश वर्णनापदेशतः कुतोगुप्तवंशवर्णन मेवाभिप्रेयते कालिदासेन, तस्यैव महाकविना साक्षाद्वर्णनं कुतो न क्रियते । किं कालिदासस्य भयमासीत् ? उतवर्णना चातुर्यं नासीत् ? । इतिहेतोः कालिदासस्य गुप्तसंबन्धः इति सर्वथैवाऽनर्गल भाषणम् ।

यदिव्यञ्जनैवाद्रि यते चेत्किं कालिदासः शब्दकोशे दरिद्रायमाण इवाऽऽसीत्, यदपरपर्यायगतेन व्यञ्जनां प्रयुयुजे ।

द्वितीयं (२) ताव 'दिन्दुः क्षीरनीधाविव' इत्यत्र क्षीरनिधेः समुद्रात् समुद्रगुप्ताद्वा इन्दश्चन्द्रश्चन्द्रगुप्तो वा संभवति । अहो मौढिः। यदि इन्दुशब्देनैव चन्द्रगुप्त उपक्षिप्तोऽभविष्यत्, कालिदासो नूनं चन्द्रशब्द एव कथं नोपादास्यत् । एवमेव जनकोपक्षेपेऽपि समुद्रशब्द एव कुतो व्यवाहरिष्यत् । यदि च जनकजन्यभाव एव कालिदासाभिमतस्तत्क्षीर निधावित्यत्र जनिः कर्तुः प्रभव इत्यतः पंचम्युपादनापेक्षया क्षीरनिधेरित्येवमुपेक्ष्य क्षीरनिधावित्येव सप्तम्यु पादानं कालिदासः कथमवृणोत् । एतावतैव विजयहोदयस्य सर्वं कपोकल्पनं प्रत्यक्षलक्ष्यायते ।

तृतीयं(३)तद्वद् रघुं वर्णयितुं प्रवृत्तस्य कालिदासस्य कुमारशब्दोपादानेन कुमारगुप्तस्याभिप्रायसम्बद्धत्वमित्ययमपि विचारो नितरां कसठीस्तन्यायते। यतो हि,कुमार वर्णने कुमारशब्दोपादानस्यैव नितरामुपपद्यमानत्वात्। अन्यत्राऽपि काव्यप्रबन्धेषु कुमारशब्दस्य गोचरीक्रियमाणत्वात्। यथा अश्वघोषस्य बुद्धचरिते 'सनत्कुमारप्रतिमः कुमारः' 'कुमारः सुकुमारचित्तः' इत्येवं बहुकृत्वः कुमारशब्द उपलभ्यते तस्यापि कुतो न कुमारगुप्तसमसमयत्वस्वीकारे मतिः प्रगल्भायते।

अथवा कुमारसम्भवे प्रबन्धान्तरे शिवः कुमारस्य पिता तत्रापि शिवगुप्तत्र्यम्बकगुप्तादयः कुतो न बहवो राजानः परिकल्प्यन्ते। इत्थमियं कल्पनाऽपि भेकरसनायते।

चतुर्थं (४) तावत् पुरगुप्तस्य नाम उपक्षिपन् कालिदासो विजयमहाशयस्य सम्मत्यां षोडशे सर्गे प्रयेते इति अहो वैदग्ध्यम्, अहो चतुरिमा,—

अथेतरे सप्त रघुप्रवीरा ज्येष्ठं पुरो जन्मतया गुणैश्च।
चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि॥
। १६। १।

अत्र पुरो जन्मतया इत्यत्र पुरगुप्तस्य सूचनमाद्रियते। वयमत्र पृच्छामः किमङ्ग ! पुरो जन्मतया इत्यस्मात्सन्दर्भात् भवान्किमवबुद्ध्यते। सौभ्रात्रे प्रतिपाद्यमाने अग्रजत्वे निर्णेतु मात्रं पुरो जन्मपदं वयं प्रतीमः। तदत्र पुरः शब्दस्य पुरशब्द कल्पने का प्रपञ्चा।

अहो इतिहासप्रणयिनां प्रौढिः, यदेते शब्दशास्त्र मपि न गणयन्ति। भगवन्त ऐतिहासिकाः! मा कालिदासः भवद्वैदग्ध्यपरी कल्पित दोषभाग् भूदिति मा वृथैव श्रमं कार्षुः। कालिदासो

यदि पुरगुप्तस्यनामै वेष्टमाज्ञास्यत, अवश्यं स्पष्टे प्रकरणे स्वयं प्रत्यपादयिष्यत् ।

(५) एवमेव हि अन्यत्राऽपि षष्ठे सर्गे इन्दुमतीस्वयंवरसमये मगधेश्वरवर्णने—

"ततो नृपाणां श्रुतवंशवृत्ता पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्सन्निकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥
असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ॥
कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रह संकुलाऽपि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥"

एषु पद्येषु परन्तपशब्दात्परन्तपो नाम तत्कालीनो मगधस्य भूपः संकीर्त्यत इति विजयविदग्धानाम्मतम् । अत्र हेतुरयं यत्स एव तस्मिन्काले अन्येषु राजसु प्रकृष्टतमः प्राप्ताधिकराज्यलक्ष्मीकः मुख्य इव राजते स्म तमेवाधिकृत्य कविचूडामणिः 'राजन्वतीं माहुरने भूमिमि'तिप्रबलराजाधिराजत्वं द्योतयति ।

अहो वैदग्ध्यम् । वयमत्र सबहुमानं पृच्छामः प्याट्, कुतोराजाधिराजत्वम् विज्ञायते । राजन्वान्शब्दस्य न क्वापि कोशेप्रतिपादितोऽयमर्थो भवतोपादीयते । किमिति वृथा प्रसभं शब्दाः व्याक्रियन्ते, आत्मन ऊहाबलेन चार्थाः उन्नीयन्ते । ससूत्रं सोपपत्तिकं व्यातान्वनो मल्लिनाथस्तु—सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्रराजवानित्यमरवचनमुद्धृत्य तमेवार्थं राजन्वान्सौराज्य इति शब्दशास्त्र प्रमाणेन द्रढयति । कविवर्योऽपि पूर्वं तस्य प्रजारञ्जन लब्धवर्णत्वं व्यपदिश्य

राजन्वन्तं संलक्षयति यदि मगधनरेशस्यैव राजाधिराजत्वं वैगुणोपेतत्वं वा कवेरभिमतं स्यात्कुतोऽजस्यैव वैशिष्ट्यं भूयो व्याहरति ।

"तेषां महार्हासन संस्थितानामुदारनेपथ्यभृतां स मध्ये
रराज राजा रघुसूनु रेव कल्पद्रुमाणामिव पारिजातः
गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति।"

अत्र प्रतीयते रघुकुलवंशोद्भवस्यैवाधिकदेशवर्तिराज्यभारसहत्वं नतु विजय याबूसम्मतस्य मगधाधिपस्य ।

अन्यच्च वयं निवेदयामो यत्कविवर्य उज्जयिन्यां निवसन्
कथमिवाऽन्यदेशेश्वरस्य कीर्तिं गुणौ विशेषणै विंशदयेत्

इदमपि न वयमवधारयामो यत्कालिदास आत्मनः पराचीनानां राज्ञां नामानि कथमजानात् ।

अस्तु अस्यैवैतिहासिकविपश्चितो वयं समालोचनां कर्तुं शक्नुमः परं स्थानाभावात्समयाभावाच्च विरमामः । एतावच्च निवेदयामः—

यदेते सिद्धसारस्वताः कविमणयो न कस्या पि मनःकल्पनामपेक्षन्ते अतस्तेषां वचसामन्यथा व्याख्यानं सुतरां नोपयुज्यते इत्यलमतिविस्तरेण श्रीमतां साहितीज्ञानवतां विदुषामग्रे ।

कश्चित् ।

# वेदरक्षा

संगच्छध्वं संवदध्वं संवो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ २६ ॥

संसत्पते समुपस्थिताः सभ्याश्च ?

प्रणति पुरस्सर न्निवेद्यते यदेतत्संस्थासञ्चालकानां मनोमन्दिरेपु समुत्पन्नायां सरस्वतीसम्मेलनसम्पादनसच्चिन्तायां केवलं सप्ताह एव समजनि, अतोऽल्पीयस्त्वात्समयस्य वैषम्याच्च विषयस्य भवदन्तिके प्रस्तुतं प्रस्तावं सर्वाङ्गसौन्दर्य्यसम्पन्नं सम्पादयितुमक्षमत्वादात्मनीनां क्षमाक्षितिं सञ्चक्षाणः प्रस्तौमि प्रस्तावमिमम्,

निखिल तन्त्रराद्धान्तोऽयम्, यत् "प्रयोजन पुरस्सरा खलु प्रवृत्तिः प्राणिनामिति," परिदृश्यन्ते च प्रायेण प्रयोजनमुद्दिश्यैव प्रवर्त्तमाना विद्वद्वरा मतिमान्द्यजुषश्च अकिञ्चनालब्धलक्ष्मीसमाममाश्चाबालवृद्धाः जगति जन्तवः, अतएवात्र जागर्त्येष न्यायः "प्रयोजनं विना मन्दोऽपिन प्रवर्त्तते,, यदा कीटपतङ्गकुरङ्गभृङ्गादीनां न प्रयोजनशून्याप्रवृत्तिस्तर्हि मनुष्यत्वाभिमानशेमुषीजुषान्तु का कथा, यद्यपि नात्र सन्देहलेशलवो ऽपि यत् प्रवृत्तिजातं प्रयोजनपुरस्सरमिति, परं सत्स्वपि प्रयोजनव्रातेषु धर्म्मज्ञानस्यैव ज्यायस्त्वं मनुष्यत्वसम्पादकश्च। प्रोक्तश्च कविना—

"आहार निद्राभय मैथुनञ्च, समान मेतत्पशुभिः नराणाम् ,
धर्म्मो हितेषामधिको विशेषोधर्मेण हीनाः पशुभिः समानाः"
अत्याय मवसितोऽर्थः, शयनं जागरणं स्नानं विलेपनमवस्था-

नं विहरणं माल्याभरणञ्च समुत्पादनं परिपालनञ्च सन्तत्या इत्यादि कार्य्यत्राहितायामभिन्नायां साम्यमनतीतेषु च प्रयोजन शतेषु, तद्व्यवच्छेदको धर्म्मो धर्म्म एव । अत एव कविः कवति, "धर्म्मं यो न करोति निन्दितमतिः स्वर्गार्गलोद्घाटनं, पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते "आशयो ऽयमस्य यज्जगति धार्म्मिका एव जीवन्ति, अन्ये चोच्छ्वसन्तो ऽपि मृतकल्पा एव । अतो धर्म्मं शनैःसञ्चिनुयात् वल्मीकमिव पुत्तिकाः, अन्यच्च धर्म्मेण हि सहायेन तमस्तरति दुस्तरम् । एवं सुखञ्च न विना धर्म्मात् तस्मा द्धर्म्म परो भवेत्, धर्म्मे मति र्भवतु वः, अनि त्यानि शरीराणि विभवो नैव शाश्वतः, नित्यं संनिहितो मृत्युः कर्तव्यो धर्म्मसङ्ग्रहः ॥ गृहीत इव केशेषु मृत्युना धर्म्ममाचरेत्, चञ्चलानि षडेतानि ज्ञात्वा धर्म्मरतो भवेत् । एवं प्रमाणप्राचुर्य्योपेतं मानवजीवनं कृतकृत्यता सम्पादक मिहामुत्र सुखावहं मोक्षदञ्च धर्म्म मेवेति वर्णन परं निबन्धनं सतां परिदृश्यते । परं धर्म्म स्वरूप मपिच तल्लक्षणं भ्रमलिप्सामतिमान्द्यविरह पुरुष प्रतिपादितमेव । प्रामाण्यकोटितामुद्वहति, कर्णावतन्सीक्रियते खल्वेषा जन श्रुतिः यतःसर्वः सर्वन्न जानाति सर्वज्ञो नहि कश्चन ॥ भूतार्थो ऽयमस्य, परिपूर्णप्रज्ञा प्रसाधनमन्तरा परिपूर्ण प्रज्ञो नास्ति कश्चन । अतो न सम्भाव्यते, पूर्ण प्रज्ञाप्रसाधनं मानवजातमात्रे, ततस्तद्विरचितवाक्यजातमपिन निःसंकोचभावोपेतां प्रामाण्यकोटितामावहति विवेचनपरं चेतश्चक्षुषामिति, अतःस्वतः सिद्ध पूर्ण

---

÷ कन्यामहाविद्यालयस्य प्रथमाधिवेशने पठितोऽयं निबन्धः

प्रज्ञोपेतः करणपाटवातन्त्रस्वतन्त्रःकश्चिदा श्रयणीयः । परमा-
श्रय मिमवलम्ब्य प्रामाण्य परीक्षणे प्रक्षीणभ्रमविभ्रमाः
स्यामेति,सचास्तिक मात्रेण तु जगन्नियन्तैव समास्थेयः, नास्ति-
कानान्तु भ्रमापनोदन विधिविधाता न कश्चन समवलम्बः प्रतीयते।
अतस्ते प्रामाण्यप्रज्ञाविधुरा एव भ्रमोदधौ बुड़न्त एव दृश्यन्ते।
नात्र संशय स्तोकता, अतएवास्तिकाः सिद्धान्तमिममवलम्ब्य
निर्विकल्पं कलयन्त्येतत् ।

अपाणि पादो जवनो गृहीतः, पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यञ्च च तस्या वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम् ॥

न तस्य कार्य्यं करणञ्चविद्यते, न तत्समश्चाभ्यधिकश्च
दृश्यते, परास्य शक्ति र्विविधैव श्रूयते, स्वाभाविकी ज्ञानबल-
क्रियाच ॥ परमिदानी मेष प्रश्नः सर्वेषां हृदय पटले समुल्लसि-
ष्यति, यत् कश्चित्करणपाटवातन्त्रो ज्ञानघनो जगन्नियन्तेत्येतदपि
स किन्न उपदेष्टुमर्हति, अथवा निस्पृहस्य वीतरागस्य जन्तुजातो-
पदेशे समीहैव न सम्भाव्यते । अथतत्र समीक्षे, नैषा वाचो युक्ति
र्यज्जगन्नियन्तुरपि समीहा साधनसाधिका; अपितु युक्ति युक्तमेत
दवलोकयामः तथैव, "यद्यस्ति कश्चि ज्जगतां जनयिता' पितृ
पदं यो ऽर्हति पूर्ण कामः, सो ऽवश्यमेवात्र जगन्नियोगं, कथञ्च
भाषेन्नृणां स भद्रम्" यद्यपि युक्तमेव जगतां जनयितु र्जगन्नियो-
गोपदेशः, परमत्र विवदन्ते केचन मतिमान्द्यजुषः, यत् कायर-
सनेन्द्रियादि साधन मन्तरा ऽकायो निरिन्द्रियः परमेश्वरो वाङ्
मयं वेदं कथमुपदेष्टुमर्हतीति। निवेद्यते ऽत्र विमलाशयेषु किञ्चित् ।
यद्यपि श्रोत्र विषया वैखरी, परमपरा अपि सन्ति तिस्रो वागभि-
दाः। तद्यथा हृदय देशस्था मध्यमा लोकव्यवहारातीता संस्का-

रा धा स्थिता वा पश्यन्ती, आत्मावस्थिता परा, नात्र विमर्षस्पर्शः यद्व वैखरी साकारेणैवोच्यते, परं सर्वशक्तिमतेश्वरेण परावस्थासम्पन्नायां वेदवाक् समुपदेष्टुं शक्यते।

स्वात्मावस्थित श्चैव पूर्वकल्पसम्पादितयोगसम्पत्तीनां परोपकारपरायणचेतसां मनोमन्दिरेषु निवेशयितुं शक्यते, परमिदानी मपरः प्रश्नो ऽप्यवकाशं लभते, तद्यथा सा वाग्राशिः कदा कुत्र केषां हृदयपटले निवेशनार्हास्तीति, प्रस्तुते विचारे केचित्कथयन्ति, यद्यावज्जगज्जन्तव स्तदुपदेशग्रहणक्षमा न सञ्जाताः तावत्तेन न किमप्युपदिष्टम्। अथ यदा क्राइष्ट मुहम्मद प्रभृतय स्तदुपदेश ग्रहण क्षमाः सञ्जाताः, तदैव तेनाञ्जील कुरान प्रभृतयः पूर्वाः सर्व हितैषिण्यो वाचः व्याकृताः। सृष्टचारम्भे तु ग्राम्याः करणपाटव विधुरा एवसमजनिषत। अतो विभोः स्ववाक्प्रचारण प्रवृत्तौ आवश्यकतेति। परन्नैत दयियुक्ताःसहन्ते। यतो हि नहि शिक्षातलस्पर्शी कश्चिद्दूरदर्शी भाविहितविमर्षी प्रगाढान्धकारमग्नामपूर्वचिन्ताचेतसा भग्नां स्वकर्तव्यकर्म्माज्ञानोद्विग्नां स्वसन्तति मुपेक्षमाणो दरीदृश्यते। किंपुनः परम दयालुः सततं सर्वजनीन हितचिन्तास्पृहयालुः परम पिता स्वायत्त्य मुपेक्षेत इति वक्तव्यम्, यद्यप्येत दत्र वक्तुं शक्यते, यत् सृष्ट्यारम्भे सृष्टिर्हि करणपाटवा भाववती तदुपदेश ग्रहण लक्ष्चानादानाक्षमा चासीत्, अतस्तदानीं स्वसमीहा साफल्य मसम्भावयन् सुखोदर्कपरिणाम शून्यां प्रवृत्ति मुद्भावयन् न तदानी मुपदिदेश महत्वातिशयोपेतां सकल सृष्ट्यु पयोग साधनीभूतां स्वकीयां ज्ञानसरणि मिति, एतदपि न विचारसहं, यतो हि "कारण गुण पूर्वकः कार्य्यगुणो दृष्टः, ॥

सर्व तन्त्रासन्त्रिता ऽयं प्रवादः, इममाश्रित्य समालोच्यते किञ्चित् । किं सृष्ट्यारम्भकालिका विगत दोषकलङ्का दूरा पास्तमालिन्य शङ्काभूतजातिरियमाहोस्विदिदानीन्तनेति । नतत्रान्तिमोक्त विशेषण शालिनी भवितु मर्हति, यतो हि प्राणिसंसर्गशून्याऽरण्यानिगर्भजन्या वायुतति यथाऽद्यापि नागरिक प्राणि प्राण भूता दनिलाच्छ्रेयस्करी समवलोक्यते । सृष्ट्यारम्भे ऽपि तादृशी सृष्टि रनुमेयैव, नात्र सङ्कोचो विमर्शवताम्, यथा चेदानीन्तन विविक्तावनीजलवायुपोषिता अद्यापि हृष्टपुष्टाङ्गा दृढाङ्गाः परमायुषः सत्वोपेतबुद्धयो विभाव्यन्ते ।

पुनः सर्वतो भावेन शुद्धि सम्पन्नाभि र्निरस्त संसर्गजमलाभि वाय्वनिलजलावनीभिः समुत्पादिता सृष्टिः पूर्वोक्त विशेषण विशेषिता न भवेदिति साहस मात्रम् । अतो नात्रायोग्यां सृष्टिं मत्वा परम पित्रा सृष्ट्यारम्भे समुपदिष्टा सर्वमहत्वोपेता सर्वजनीना निजज्ञानसरणिरित्यपि कथनं साहसमात्रमेव,, ।

( क्रमशः )

---

## समस्या *

### "सिंहस्य तद्गर्जितम्"

अयि पाठक महाभागाः ! समस्यामेनां पूरयित्वाऽऽत्मनः साहितीमणयं विशदीकर्तुं, सम्पादकस्य सविधे प्रेषयिष्यन्ति ।

# घनीभूतो वाक्प्रपञ्चः

## कथा

को न वेद आख्यायिकानुशीलन चतुरः काव्यकाञ्चनशाणस्य बाणस्य सकलजित्वरीं कादम्बरीम् । एवमेव गीर्वाणवाणीजुषां वासवदत्ताऽपि लघ्वी आख्यायिका हृदयं श्लिष्यतीव । एवमेव प्रायः सर्वास्वपि भाषासु नानाख्यायिकाकारैर्निचिततरघटनोपक्रमैः पाठकानां मनो मन्दिराणि मोदरसैरभिषिच्यन्ते । आश्चर्योद्दीपनं हि नाम प्रथमं कवेर्गुणस्थानम् । तदिति केचिल्लेखकाः सुतरामाश्चर्यपारावारे वाचकेभ्यो विचित्रमुक्तामार्गणे विहितनिमज्जनाः नतरां जानते वास्तविकं तत्वम्, जानाना वा न पारयन्ति पाठकानां मनोरञ्जनमुच्छेत्तुं शुष्कविज्ञानकलहैरिति ।

एवमेवात्राऽपि विचित्रमिह घटनाजालं प्रतन्यते । यत्र घनीभूतो वाक्प्रपञ्चः शीतस्याधिक्यात्तदनु शनैः शनैः कवोष्णसमीरसम्पर्कात्प्रकृतिं भेजे । वाचकानामौत्सुक्यं न चिराय उत्कयन् तनोमि एकस्य समुद्रयात्रिणो वृत्तम् ।

"गम्भीरनीरेऽकूपारे उदीच्यां दिशि यान द्वारा संप्रस्थितानां बहूनां विज्ञानलिप्सूनां यात्रिणा मस्माकमेव जलयानद्वयं नव्ययमबलाभिधाने द्वीपे त्रिसप्तत्यन्तांशमिते भूभागे यथा कथञ्चिदीशस्यानुग्रहबला दतिवृत्तसकलोपद्रवं प्राप । तत्र प्रतिसत्त्वं नावध्यक्षैः पृथक् पृथक् नातिदवीयस्तया मा अतिजाड्यादार्तवोपद्रवो ऽस्मान्पीडयेदिति विशेषरक्षायै घासकाष्ठमयद्रव्यस्य गृहद्वयं निरमायि । नातिचिरादस्माभिर्वार्त्तालापे दत्तावधानै रन्वभावि यत्कतिपये शब्दा लुप्यन्ते । परस्पर-

पि वयं हस्तद्वयान्तरिता अपि वार्त्तालापं न श्रोतुं च क्षमाः स्मः।

अनल सन्निधानमपि न किञ्चिदुपकरोति। नाना चिन्तया नानासंकल्पविकल्पोद्भावनै रिदं मयाऽऽविरकारि, यज्जाड्या तिशयेन श्रवणस्पर्शतः प्रागेव, शब्दा ध्वनयश्च जड़तां यान्ति। गते किञ्चित्काले, अभिवृद्धे च शीते, सम्पन्नेषु च सर्वेषुमूक बधिरप्रायेषु, मदीयमपि प्रागनुमानं तथ्यमेव सम्पन्नम्। यत उच्यमानः शब्दस्तु अनुभूतः, परमन्येनाश्रुतोऽपि शून्यवदवभासते। जड़तातिशयसम्पन्नसमीरसम्पर्कादेव शब्दो हिमायते, न च श्रुतिपथमेति। महदद्भुतं दृश्यम् महच्चापदाभिभूता वेला। परस्परं सर्वेऽपि भाषणसमकालं जायमानैः करवदनचरण विकारै राश्चर्यातिशयजनितमुखव्यादानैश्च नृत्यन्ति। सर्वोऽपि वाग्विलासं करोति, नकोऽपि शृणोति। दूराह्वानसमर्थोऽपि कश्चि न्नावध्यक्षः दूरादेव अपरयानस्थानाह्वाति, भूयःकर प्रचालनैः प्रयतते, भूयश्च प्राणसंधुक्षणैः श्राम्यति, भूयश्च कण्ठास्फालनं कुरुते, परं सर्वमपि व्यर्थमेव।

आपन्मयेऽस्मिं स्थले सप्ताहत्रयं वयं न्यवात्सिष्व, अन्ततोऽनिलगतिः परिवर्त्तनं भेजे। जाड्यं विलीनमिवाऽभूत्। नचिरादेव नः सद्म शुष्ककठोरकड़कड़ाध्वनिभिः पूरितमिवाऽभूत्। अनुसन्धानतश्च विज्ञातं, यदहो प्रागुच्चारितानि कर्कशानि व्यञ्जनानि कवोष्णवातसंस्पर्शेण विशिथिलितकणसन्धीनि भग्नकाचखण्डानीव भान्ति। मध्ये शनैः शनैः सीत्कारितमपि बहुधाऽश्रूयत, यदनु भाषणे सकारबाहुल्य मन्वमीयत। तदन्वहं श्वःपार्श्वतः संसरन्तं जनान्तिकालापमिवा ऽन्वभवम् इदं

तदेव कोमलं सरलशब्दमयं द्रव्यं यद्द्रागेव विलयमागतं स्रवति। तदनु, सस्वराणि व्यञ्जनानि, तदनु, लघूनि पदानि ततः पश्चाद् पूर्णवाक्यानि, आत्मनो घनताभेदात्कठिनायमानानि चिराद् चिराद्वा विद्रवतामुपेतानि श्रुतिगोचराण्य भूवन्। प्राक् सप्ताह त्रये, यदपि मुखादुच्चैर्नीचैर्वा विजल्पितं, तत्सर्वमधुना गोचरायते।

ब्राह्ममूहूर्त्तः कालः, आपिशङ्गारुणभासिता प्राची, अहमपि कुतूहलान्वितोऽश्रौषम्, " भ्रातः निशीथकालोऽयं सर्वेषां नाविकजनानां शयनार्हः, तदिति गम्यताम्" ॥

अहमचिन्तयम्, यदेत एव शब्दाः प्राक् केनचिन्नाविकेन प्राक् समीर परिवर्त्तनादुच्चारिता अधुना विलीय श्रुतिपथमायान्ति।

सपदि मद्वाचकाः साश्चय मवलोकयिष्यन्ति यत्सर्वेऽपि वार्तालापं, विना मुखादिप्रयत्नं कुर्वन्ति। आश्चर्यमयेऽस्मिन् समये कतिचन रोषाभिभूतस्य कस्यचित्परुषजल्पनानि, भूयोपशब्द संवलितानि सर्वैः शुश्रुविरे। कदाचिदेतानि दुर्वचांसि कस्यचित्स वाधीशस्य तद्वचो दुःखसमयेऽश्रृण्वन्तं मां प्रति भाषितानि नानापशब्दशपथादिसंवलितानि स्युः

एवमेव तत्रापदाक्रान्ते द्वीपे निवसतां भूयो भूयो गृहजनविरहोष्मणाऽनेकविधं सानुनयप्रणयभरितानि वचांस्यपि पुराऽऽस्याद्विनिर्गतानि सम्प्रति कर्णगोचरायमाणानि महतीं मुदं चक्रुः।

कैश्चित्तु प्रमोदार्थमेव बहुप्रकारकं भाषितं, यत्पुनर्वयमेव श्रोष्यामः ।

एकदा हिमानीनिवासप्रणयिनो भल्लूकस्य भीषणं गर्जितमश्रूयत । प्रथमं सर्व श्रुत्वा विस्मिताः, परमनुसन्धानतश्च विदितवृत्तान्ता अभूवन्, यदयमेव भल्लूकः सप्ताहद्वयात्पूर्वं समीपएव निशितभल्लैः विचित्रवधं व्यापादितः । यन्नेदीयस्येव शृगालानां चीत्कारा अपि क्वापि क्वापि आकर्णिताः । एवमेव च मध्ये २ विनोदार्थं प्रवृत्ताः विवादा अपि अधुना स्फुटीबभूवुः" । तात्कालीनैस्तत्त्ववेतृभिरस्य बहूनि विचित्राणि कारणानि प्रदर्शितानि, परं तत्कारणप्रतिपादनस्य च भूयःस्थलाकांक्षित्वा दत्र मौनमेव वरम् । एवं वयं विचित्रस्य जगतीखण्डस्य विचित्रानुभवं आमोदप्रमोदसम्भारैः प्रकटयन्तः पुनः स्वमातृभूमिमागच्छाम ।"

इत्येवमयमाख्यायिकाभागः पाठकानां मानसरुचिविकासाय पुरःस्थापितः । यद्यन्यदापि कौतूहलं नो भविता, भविष्यत्यपि प्रयतिष्यामहे । आशासे च पाठकाः पत्रद्वारा सम्पादकं सूचयिष्यन्ति ।

कुशाग्रः

---

## परमात्मा सर्वत्राऽस्ति

यस्तिष्ठति, चरति, यश्च वञ्चति, यो निलायं ( गुप्तं पापं ) चरति, यः प्रतङ्कम् ( कृच्छ्र जीवनम् ) ।

द्वौ संनिषद्य ( उपविश्य ) यन्मन्त्रयेते, राजा तद्वेद वरुणस्तृतीयः ॥

( अथर्ववेदः, ४काण्ड, सू. १६० )

## तनूरेव तुभ्यं दीयते मया ।

अयि भारत भूमे ! तनूरेव तुभ्यं दीयते मया । ध्रुवम् ॥
सुरै र्बहुनुते ! रमणीये !
शुभे! जननदे ! शरणीये !
यशः प्राणदं ते गीयते मया ॥ १ ॥
शुभ्रो धर्मदायिनि ! दिव्ये !
मम क्लेशहारिणि ! भव्ये !
पयः प्रेमरूपं पीयते मया ॥ २ ॥
बलं नास्ति मे कमनीयम्
धनं यत्तदाः ! परकीयम् ।
वपुर्मे तदेकन्धीयते मया ॥ ३ ॥
उरो मे भवे दुरु विद्धम्
शिरो वा पतेत् शरविद्धम् ।
तदप्यम्ब ! पादे धीयते मया ॥ ४ ॥
त्वदेकार्चनाकरणेन
नहि क्वापि धर्मधनेन ।
दिवा वा निशा वा भीयते मया ॥ ५ ॥
कृपा मीदृशीं कुरु मातः !
नाम ते जपित्वा मातः ।
यथा पापराज्यं जीयते मया ॥ ६ ॥
अयि भारतभूमे! तनूरेव तुभ्यं दीयते मया ॥

# भारतं संसारगतिश्च

विंशशताब्दी भारते जगति वा महतीमुत्क्रान्तिं साक्षात्कारयिष्यति। सकलसभ्य देशेषु प्राचीनं निस्तेजो ऽर्वाचीनञ्च दीप्तिमत्प्रभविष्यति। एकोनविंशशताब्दी संसारसंहारिणी प्राचीनार्वाचीनसमालोचिनी नव्यागमनभूमिके वाभूत्। विंशतमा सकल संघटन प्रणेत्री पूर्णपूरिकेव दृश्यते। भारतं न जगतो विभक्तं तस्य पार्थक्यमेव गतशताब्दीषु विनाश कारणमजनि। यो देशो न जनता जीवनं मुहुर्मुहुर्नवी करोति? किंतस्य भविष्यत्। न कश्चिदपि भारतं केवलं धार्मिकं विचारात्मकञ्च द्वीपविशेषं चिकीर्षु रुन्नतिमाशांस्तुमर्हति। सततगतिरेवोन्नते र्निगूढं तत्वम्? स्थिरो देशो पल्वलस्थ जलवन्मलीमसायते। वर्तमानभारते जीवनं नव्यं विधातुं नद्यपयोगिन्यो ऽवस्थाः समवलोक्यन्ते। साधारणज्ञानञ्च विस्तारयितुं, बुद्धिञ्च विशदीकर्तुं हरिवर्षस्य जीवितजागृति मनुशीलयितुमस्माभिः प्रभूतं प्रयतनमिष्यते। इदं नव्यं प्राप्त मिमा अवस्था दृश्यन्ते—

(१) विदेशीयभाषानुशीलनम्—फ्रांस जीर्णमुनि[१] इटलि स्वर्णा[२] दिजागृतनानादेशभाषानुशीलनविषयिका ह्यनु मतिमुहु मुहुः प्रकाशयितुं नेच्छामि। भारतसन्तानमिदानी मांग्लभाषा मेवोपजीवन्न कदापि भूयोविचारवन्महच्छक्तिमच्च प्रभविष्य-

(१) जर्मनि (२) स्पेन

ति। स्यान्नामांग्लभाषा यथाकथञ्चिद्धास्वरवर्णा, नैतावताऽद्वितीयं पदं लब्धुं जातुचिदप्यर्हति। फ्रांचशार्मण्यभाषे प्रचुराविष्कारशोभिते व्यवहारभाजे स्तः। शार्मण्यं स्कन्धनवीनं देशञ्च विहाय फ्रांचभाषा समस्तं हरिवर्षं व्याप्नोति। तुर्क मिश्र रशियादेशानां शिक्षितो जनः फ्रांचभाषां, भारतजन आंग्लामिव, प्रत्यहं व्यापारेषु प्रयुंक्ते ।

निःसहायानां भारतीयानां मानलिप्सया ससंरभं लन्दनाश्रयणं भूयोनिन्दनीयं लज्जाकरञ्च भाति नः ? ऐतिहासिकस्थानेषु प्रायो भारतीयाः क्रान्तिसमराङ्गणेषु, नव्य भव्यस्थानेष्वनेलमूका इव भ्राम्यन्ति ? स्मारक चिन्हानि नाटकानि च प्रत्यक्षीकर्तुमनध्यायदिवसेषु ते पारिसादिस्थानेषु समायान्ति, एवं भारतीया वय मांग्लाननुकुर्वन्तोऽपि तानादर्शी कर्तुन्न मर्षयामः। परंविचारात्मकतया तद्विधा एव स्मः। व्यर्थोच्छून आङ्गलसाहित्यपल्वले च भूयोभूयो वय न्निमज्य कृतकृत्यं मन्महे ।

शार्मण्यभाषाज्ञानेन प्रभूताविष्कार संपत्त्या च सम्पन्नतमास्ति आंग्लदेशे विद्या कामैः प्रायः पाठ्यमानानि पुस्तकानि केवलं शार्मण्यभाषातोऽनूदितान्येव भवन्ति । क्रियात्मकशिक्षा तु निःसंशयं तत्र प्रचुरतरैव। अस्यां विंशशताब्द्या मस्माकं नायकाः केवलं लन्दन मुम्बापुर्यादिवृत्तान्तान्यवबुद्ध्वैव जनपथप्रदर्शका शिक्षकाश्च भवितुं पर्य्याप्तं जानन्ति। इदानीन्तन नवीन जागृतहरिवर्षस्य दीप्तिमतीं विद्यां नैपुण्येनानधिगम्यैवात्मानं चतुरनायक-

(१) जर्मनि (२) स्कैन्डिनेविया

नीतितत्त्वकोविदादिसंमानसूचकोपाधिभिरलङ्कृताः वृथैवात्मनो मन्यन्ते । इदानीन्तनहरिवर्षीयनानाप्रान्तभाषाविज्ञानस्यायमेवावसरः साधीयान् फलदायकश्च प्रतीयते भविष्यत्कार्तान्तिकैः ।

अस्मद्देशे विद्यामृतपिपासवो वटवो निजदेशं परावृत्ता अपि हरिवर्षीयभावान्विना एवा ऽऽशास्यन्ते । आंग्लपातालादिदेशेषु यदप्यधीयते सर्वं तदाडम्बरसदृशं वस्तु । यदर्थं गोतीर्थादयो विद्यालया अद्यापि प्रसिद्धिमापन्नाः । जलीवापारिसरोमवर्तिना दीनाममृतस्रोतसां पीयूषपानेन विना कथमपि भारतस्य जवीयस्युन्नतिर्भवितुन्न शक्या । भूधरेषु हिमाद्रिरिव पारिसप्रदेशः सर्वेषामपि विज्ञानस्थानेषु नृपायते । स्विट्जरलैंण्डस्य विश्वविद्यालयाः वर्तमानाचारविचाराणां प्रतिनिधयन्त इवापरं स्थानमलंकुर्वन्ति । भारतीयाश्छात्राः निजगृहेषु फ्रान्सादिदेशभाषाः समभ्यस्य ततो नवदेशान् परिक्रान्तुमर्हन्ति । नास्माभिरिष्यन्ते प्रति वर्षं लन्दनं यातुकामा विद्याचञ्चवः । आंग्लदेशस्तु अद्यावधि शयान इव सर्वतश्चरमो ऽस्ति । यद्यप्यस्माकमज्ञानोपहतचेतसा मुन्नतिजननीत्वेन कल्पितः । वस्तुतो ऽत्रैरण्डो ऽपि द्रुमायत एव । गुरुकुलं जातीयशिक्षणालया स्तत्संस्था श्चैत दावश्यकं कार्य्यं स्वायत्ती कर्तुमग्रणीत्वेन भवितु मर्हन्ति । राजकीय विद्यापीठानुमतानां

(१) आक्स फोर्ड यूनिवर्सिटि

मकोलेटेनिसूनादि[1] संचितपुस्तकानामध्यापनं फलमेव किं बिभर्ति ? नभयं किञ्चिच्चेदांग्ल भाषाभारतभुवो विलय मीयात्, उद्देश्यपरिपूर्त्यैच फ्रांचशार्मण्ये एव पर्याप्ते।

अत्र इदमप्यभिधास्ये यदुत्तरभारत वासिभि र्वहुभिः पारसीकभाषामेकतो निःक्षिप्य फ्रांचभाषा हृदयं संगमनीया? भारतीयेभ्यः पारसीका किमिव फलं प्रसूते? पारसिका ऽऽरव्यादिभाषाध्ययने भारतीया वृथैव प्रचुरं कालमतिपात्य सर्वमपि विस्मरन्ति? इयं व्यर्थी भूता वेला विदेशभाषा नुशीलनेन कुतो न संधेया। असंशयमा र्यभाषापि जीवितप्राया मातृभाषेव हृदि संगमनीया ऽनुशीलनीया च प्रयत्नतः।

विदेशम्प्रति प्रस्थातुकामान् तद्भाषापाण्डित्य मधिगन्तुं प्रवृत्तानु त्साहयितु मपि मम वचो ऽत्यर्थं हितमेव? नहि विदेशे संस्कृतलाघवमीप्सूनां कश्चिदपि लाभः। संस्कृतज्ञा हि वहवो विदग्धा भारत एव वर्तन्ते। भारतं नव्यहरिवर्षेण सह संबद्धुमपि कतिपया जागृतशक्तय श्छात्रा इष्यन्ते, भारतीयहरिवर्ष विज्ञान तन्तुसंयोजको नाधुनावधि कश्चिदपि सुलभोपाय आविष्कृतोऽभूत्। भाविविंशतिवर्षकुले इदमेव कार्यं समं रम्भमारम्भणीयम् दृढीकरणीयश्च नहि प्रत्येकं विद्यार्थिना आंग्लानैपुण्यमिष्यते अल्पप्रयत्नसाध्यत्वात्तस्याः। भूयोभिश्छात्रैः फ्रांचादिभाषा अध्येतुं प्रवर्तितव्यम्।

(१) विदेशशिक्षा—पूर्वोक्तादापन्नं यदांग्लामेरिकादि प्रान्तेषु गमनं फ्रांसाद्यपेक्षया हीनमेव। मिश्रास्तुरुष्काश्चीना जयपा-[2]

---

(१) मकोले, टेनिसन (२) जापान

लिनश्च सर्वेऽपि हरिवर्षीय विश्वविद्यालयेषु शिक्षामासञ्जते; नहि आंग्लविद्यालयेषु। गृहमर्यादायामेव भाषा काठिन्ये विलीने हरिवर्ष विद्यालया निःसंशयं भारतीयाञ्जोषंजोषमाकर्षयिष्यन्त्येव।

सामाजिकोन्नतिः—यावद्भारतन्न जानीते जगच्चक्रं तज्जगता सार्धं वसितुमपि, ज्ञातुमर्हति नीतिचक्रम्। उत्तममध्यम श्रेण्यौ जनताया अपर्याप्तानुचितजीवितवृत्तिं हातुमर्हतः। वर्तमानविदेशाटनं भारतीयाय महदुत्साहस्थानं। तस्मै प्रतीयतेऽपि तन्निगडः कारागारः स च सत्वरमेव गृह मेव निवर्तितु मुत्कण्ठते। भारतीयो जनो हरिवर्षीयपथिकायाऽतिथेयीं विधातुमपि न प्रभवति! अस्माकं मध्यवर्तिन्यो जीवनवृत्तयो व्यवहारवृत्तयः प्रथाश्च कैश्चिद्दर्शनक्षमैरनन्धैरपि कूपमण्डूकै जातीयवैयक्तिकचिह्नीभूततया नितरामभिनन्द्यमाना बहुशो हरिवर्षमध्यपतिताः सर्वथैव वन्ध्यायन्ते।

भारते क्वचित्क्वचिद्ग्रीष्म कालेऽनाचारमय्याजीवन वृत्तयो विदेशयात्रातिप्रचुरलाभप्रदकार्येषु परिणमयितु मिष्यन्ते। मध्यमनोन्विताश्च व्यापारिणो गङ्गापुरीहरद्वारादिव्यर्थचंक्रमं विहाय विदेशप्रस्थान मर्हन्ति। साधारण जीविका न्वितानामपि गृहमेधिनां हरिवर्ष यात्रैव गङ्गायात्रा। अस्मिन् पारसीका वा स्पभ्यमादर्शायन्ते। ईदृशी वस्तुस्थितिः प्राचीनशिथिलित वर्त्मानुसरणेन न कथमप्यासादयिष्यते। तद्वर्त्म भवेदपि कीदृशमेव फलसम्पत्तिमत्। केचित्तु सूपशाटकमलीमसप्राङ्गणाधो भूम्युपवेशनाद्यनुचवृत्तिष्वेव भारतस्यातीता नागत्योः स्थितिं प्रतिपद्यन्ते। केचित्त्वन्धदेशभक्ताः भारतमेव जगति देशमवगच्छन्त इदानीतनीमात्मनः स्थितिमपि विक्रमादशशताब्दीपूर्वां भ्रमाति-

शयादवगच्छन्तो दरीदृश्यते; ते प्रतिवस्तु अतीतं प्राचीनानां वैभवमेव प्रमाणयन्ति। मानिनामेते विचाराः मृतवतां चीत्कारापेक्षया मनाक्साधीयांस एव। नाश्चर्यं यद्भारतीया भारतावरोधचतुःशालकेऽसूर्यम्पश्यायमाणाः परिवर्तनोत्साहमयेऽस्मिन्काले वास्तविकं जीवनस्रोतो विहाय गंगोद्गमे हिमाच्छादिते गिरिकंदरासु वा दीर्घं निद्रिताः, स्वप्नमायाजालमेवापरलोक मासाद्य कृतार्थमात्मानं मंस्यन्ते। परमयि भारतीयाः! निफल्ल प्रथास्वखेलित्वैव नवीनसभ्यताकौशेयोत्तराश्चलपरिहितं जगदाभिमुख्येन निरीक्षणीयम्। तदेवेदं यज्जयप्राणेन[1] कृतम्। नहिजयप्राणेन प्राचीनाः संस्थाः प्रथा वापुनरुज्जीविताः प्रोत्साहिता वा।

अतितरांश्रेयोऽर्थिनो भारतीयाः एवं सम्बोध्यन्ते "पश्यन्तु तत्र भवन्तः पुरोबहिश्च न चान्तर्नाऽतीतञ्च कर्म। जीवनमयंकाशानवं तेजोऽपरदेशादागेतव्यम्। यथा प्राचीनेषु दिवसेषु हनुमता लक्ष्मणाय सञ्जीवनमानीतम्। उत्तम मध्यमश्रेण्योर्वालकाः कन्यका श्चान्ततो विदेशे शिक्षणीया इतिविशेषमुद्देश्यं विधाय तदनुकूलविचारे ष्वेव परिपालनीयाः। प्रतिगृहमीदृशो विचारो ऽङ्कनीयः।

इयं सर्वथाऽपि मृषा केषांचिद्द् भ्रान्तिर्य त्स्विट्जरलेण्डादि विद्यालयेषु भारतविद्यालयापेक्षयाऽधिकतरं द्रव्यमिष्यते। विद्यामुपार्जितुं भारतीयराजकीयविद्यास्थानापेक्षया धनिक वर्गस्यापि न तत्राधिको व्ययः। विदेशेषु भारतसदृशाः दरिद्रा

(१) जापान

निधना अप्यनेकशोऽल्पव्ययेनैव विद्यामुपार्जन्ति । इत्येव सात्ताद्विदेशयात्रिणां मनुभवः ।

प्रथमस्तावदाचारो निर्वहणीयः : नह्याचारो यान्त्रिकया कया ऽपिशक्त्या नियम्यते । समृद्धवर्गस्तु न्यूनबलत्वा-द्भीरुत्वा द्दनिकव्यवहारे ऽनियम पूर्वकत्वाच्च नजातेर्नायकायितुं प्रभविष्यति ! प्राचीनं परिवर्त्तत एव नवं तत्स्थान माक्राम-त्येव, तन्न शुचामवसरः ।

(३) समाज शास्त्रानुशीलनम्—वर्त्तमानसमाजशास्त्रानुशीलन मपि मुख्यतमो हेतुरुन्नतेः । अस्माकं भारतीयाः ब्रह्मचि-न्ताचणाः सन्तोऽपि समाजशास्त्रानुसन्धाने बाला इवैव स-न्ति ! इदमपि ज्ञेयं यत्—

आधुनिकः प्रणवो दार्शनिको भगवद्भक्तिको वा नाऽस्ति, परं सर्वतः सामाजिकएव । द्वैता द्वैतम्, हिन्दूयवन मित्यादि का-कोलूकीयकालोऽतीतः। प्राचीनवादानां स्थाने वर्तमान विद्यार्थिभिः समाजविकास-राजसभा-वादादिविविधाः विषयाःगोष्ठीष्वालप्य-न्ते । इदमेव विंशशताब्द्याः मधुरं फलम्। इदमेव विचारणीयमन्त स्तलमतिगम्भीरम् ।

परम्भारतमद्यावधि मतवादेषु, पूजापरिपाटीषु, मतग्रन्थ-गणेषु च कलहायते, यच्च हरिवर्षे पुरैव समाप्तमभूत् । यावत्पारिस-जेनीवादिविश्वविद्यालयानाममृतमयवायुमण्डल सेव-नेन भारतसन्तानस्य जीवनं नव्यं भव्यं च न भवति,यावच्चेन्द्र जालमयं नानापथान्धतामिस्त्रं न नयनयुगलाद पसर्पति नताव-दुन्नतिः । तत्र प्रकृष्ट हरिवर्ष वैद्यस्य नव्यविचार रसायनमात्रमेवै

कर्मौषधम् । अन्ततोऽपि सभ्यताचक्रमारूढस्य भारतस्य पाश्चत्यै व सरणि र्यथा तथमनुसरणीया भविष्यत्येव, नतत्रा ऽस्माभिः किञ्चिद् विशङ्कितुं शक्यते? इत्यलमति पल्लवितेन सतामुदार चेतेसा मुन्नति कामानाञ्चरणाम्भोजेषु । "इतिशम्,,

( अनुवादः )

( मोडर्नरिव्यु इत्यस्मात् मासिकपत्रात् )

———

# सम्पादकीया विचाराः

**शारदा**—सहयोगिनी शारदा कदाचिद् भारतं विहाय देशान्तरे, नहि नहि, कदाचि द्द् गोलान्तरे प्रकाश्यते प्रकाशकैः।

यतो हि सा न समयसंकेत मनुसरति। वैशाखत आरभ्याधुनावधि मासचतुष्टये गते ऽपि सा माघस्यैव फाल्गुनस्यैव वा अङ्कं वितरति पाठकेभ्यः।

न जाने कोऽस्य,महतो विलम्बस्य हेतुः। पातालस्थापि पत्राणि,यथ मासमत्रोपतिष्ठन्ते। किं भारतीया एव आत्मनो विलम्बाय दीर्घसू-त्रिण इति सावमानपदवीजुषो भवितुं सहन्ते ?। विशेषतश्च संस्कृत ज्ञास्तु 'दीर्घसूत्री विनश्यतीति' नीतितत्वमवगच्छन्तोऽपि कथमत्राद-त्तावधाना इति न विमृशामः।

**संस्कृत रत्नाकरः**—संस्कृतरत्नाकरोऽपि केना ऽप्यविदितेन हेतुना न दृष्टिपथमनु सरति।

**मन्थरा दुर्विलसितम्**—माघस्य शारदायां मन्थरादुर्विलसि-त मित्यादि शीर्षक युक्त मस्ति किञ्चिद् वाग्विलसितम्। तत्र कविः पर-मानन्दः मन्थरामपि शारदाया अवतारान्तरं कथयति, इति विलोक य-तां नो महदनुकम्पाभाजनं भवति भगवती शारदा।

भगवती सरस्वती या त्रेतायामेव भगवतो वल्मीकसम्भवस्य ब्रह्म-विदो ब्रह्मर्षे र्मुखारविन्दे शब्दात्मना ऽवतारं लेभे। सैवेयमन्यत्र मन्थरा यामवतरेदिति महद् दुर्विभाव्यम्।

या सा भगवती काले काले कालिदासादिषु कविमुकटालंकारभूतेषु परमां काष्ठां महनीयताया अवाप, सैव किमद्य मन्थरायिता न वर्तमानस्य कवेरेव शारदागर्भसम्भूतस्य लज्जावहा ?।

तदत्र वयं ध्यानमाकर्षामः साहितीजुषां, यदीदृश्यः सभ्यतोचिता-चारविरुद्धाःकल्पना यदि नतमां विद्याप्रियाणां मनांसि संस्पृशेयुस्तर्हि सुसमीचीनं स्यात्।

हरिवर्षः—अद्यतनीनो हरिवर्षः सर्वथैव विपरीत क्रम इव लक्ष्यते एकोनविंशशताब्द्यां सर्वोऽपि हरिवर्षो भूमण्डले नवीनान्विदितान् देशान् विजेतुं, तत्रच विजनं सजनीकर्तुं, सजनं च सभ्यजनी कर्तुं, महता प्रयत्नेन अहमहमिकया संग्रामादिनानासंहारकप्रयोगैः स्वविजयवैजयन्तीं प्रचारयति स्म, परमधुना नजाने कथमीदृशो व्यामोहः समजनि, यत्सभ्येष्वेव प्रयोजनमन्तरा संग्रामाः प्रवृत्ताः।

भारतीयास्तु अत्र कदाचिन्नाश्चर्यमनुभवन्ति यतस्ते तु जानन्त्येव पुराकलीनमपि महाभारतम्। प्रायः क्षत्रप्रधाने देशे न युद्धमन्तरा शान्तेरध्यवसायः। प्रत्येकं कार्यं युद्धे नावसीयते। यथा ऽऽर्याणां मन्त्रारम्भः प्रणवेन, क्रिश्चीनानां संस्कारा मद्येन, एवमेव क्षत्रियाणां युद्धेनेति तत्राश्चर्यमेव किम्?।

प्रायः पुरातनीना भारतीया अपि रणं स्वर्गस्य साधनमेव प्रतिपद्यन्ते। यथा गीतायाम्—

"हतश्चे वाप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठकौन्तेय, युद्धाय कृतनिश्चयः।"

भारतस्य तु स्वर्गारोहणं पर्व समाप्तमधुना हरिवर्षस्यारभ्यते इति दृश्यते। इदमे वाद्भुत मत्र चिन्त्यते यदत्र के के देशाः स्वर्भुजः के च के च भूभुजो भवन्ति।

क्रिश्चिनानां गौडः—हरिवर्षे युद्धप्रवृत्तानां सर्वेषा मपि राज्ञां परमेश्वर एकएव, सर्वैरात्मनो विजयाकांक्षया स्मर्यते प्रार्थ्यते च। अधुना तेषां मीश्वरस्य परीक्षावेलेय मुपस्थिता बुद्धिपरिचयस्य। श्रूयते भक्तिप्रणयी हि तेषा मीश्वरो, वायबिले भक्तिं मिनोति; तदमुकल्पश्च स्वर्ग सुखावाप्तिः। अधुना उभयत्र भक्तिः समैव। एवं सत्यपि न जाने भूमिपाःकथं भूमिविजयलाभाय प्रयतन्ते परमात्मानञ्च प्रार्थयन्ति, न स्वर्गलाभाय। परमेश्वरस्तु क्रिश्चिनानाम् कतमं स्वर्गसुखयोग्यं

मन्यते इति अधुना दृश्यते। यस्य दृढ़ा भक्तिः स भूलोकं विहाय स्वर्गं याता इत्येव सिद्धान्तः। तदनुसारं निर्णयोऽपि सम्भाव्यते।

**भारतीया राजभक्तिः**---हरिवर्षे घोरयुद्धस्य महान्तं कम्पमनुभवतां भारतीयानां हृदयान्यपि राजभक्ति रवेण मुखरायन्ते। तत्र केचिदेवमूचुः यद् वयं धनतनु प्राणार्पण पणेनाऽपि राजमण्डलस्य साहाय्यं कर्तुं सज्जाः स्मः। न वयं तस्य राजभक्ति विषयकस्य भावस्य घातं कर्तुं वरं मन्यामहे। परन्तु राजभक्ति प्रकरणानुकूलां मुचितां मन्यामहे। संग्रामे साहाय्यमिष्यते चेद् तत्र भारतीयेभ्योऽपि अवसरो देयः हरिवर्षखण्डएव संग्रामाङ्गणं शोभयितुम्। तत्र दृश्यते काऽप्यपूर्वा राजभक्तिः। धनभोजनादि संग्रह विषये शक्ति संतोलनमेव वरम्। पणत्रयं प्राप्तवतां भारतीयानां किं सामर्थ्यं, पञ्चपौण्डमात्रे तुष्टिवतां गौराङ्गाना मुदरदरी पूर्यते। प्रथमं राजभक्ति पद मिदमेव यत्प्रियस्य राज्ञः प्रियायाः प्रजाया एव पालनं स्याद्। भारतीयाः स्वयमेवासम्पन्नाः सन्तो दुर्भिक्षैः पीड्यन्ते। यदि तेषा मेव क्षुधा शमनस्य कृतेऽस्माकं प्रयासः स्यात्तत्रराजभक्तिः देशभक्तिश्चोभे सुलभे भवतः।

**अस्माकं कर्तव्यम्**—अनेन महासंग्रामेण प्रायः सर्वाणि वस्तूनि महार्घाणि कृतानि। देशे विदेशे चोभयत्र प्रजा अत एव दुःखिताः सन्ति। कार्पास कागदादीनां तु हाने विदेशस्य बहूनि यन्त्राणि निष्प्रयोजनानि संवृत्तानि, यतस्तत्र द्रव्यं न लभ्यते। अधुना भारतीयाना मिदं कर्तव्यम् यत्—तेऽपि साहसेन स्वदेशीय वस्तूनां निर्माणे प्रवर्तेरन्। अत्र निर्मितानि वस्तूनि अवश्य मस्माभ्य मल्पमूल्येनैव लप्स्यन्ते। भारतीय राजवर्गस्य येऽपि परिपन्थिनो देशास्तन्निर्मितानां वस्तूनां बहिष्कार एव राजभक्तिः साधीयसी लक्ष्यते। देशभक्तिश्चै

घात्मदेश वस्तूना मुपयोगेन। अनेन स्वदेशप्रेम्णा यदि आंगूलयन्त्राणा-मपि उपेक्षा भवेन्न तत्रापि नःशङ्का। वस्तुतो राजभक्तिस्तु, प्रभुवर्गस्य प्रजायाः हित मेवास्ति। नष्टायां प्रजायां राज्ञो राजत्वमेव कीदृक्। इत्यतः स्वदेशीय वस्तु प्रचारेण, विदेशीय वस्तु वर्जनेन च प्रजाया हितम्। सैव च राजभक्तिः सैव च देशभक्तिः। सैव राष्ट्रसेवा इति वय मेकत्रैव त्रित्वं लक्षयामः॥

हिन्दू विश्वविद्यालयः—मालवीय महोदयस्य हिन्दूविश्व-विद्यालयोऽधुना पुनरपि संशयकोटिम् भजते। श्रूयते यत् राजमण्ड-लेन स्वीकृतासु अवस्थासु, विश्वविद्यालयस्य संचालकानां स्वातन्त्र्य-मपचीयते। कानि चिदुद्देश्यानि च पूर्त्तिं न यान्ति। एवं सर्वेऽपि वदा-न्याः वर्त्तमानं वृत्तमवलोक्य नतरा मात्मनो धनापगमं सहन्ते। इति-हेतोः विश्वविद्यालयस्य सम्भावनाऽपि गगनकुसुमायते।

अधुना एतस्य धनस्य किमनुष्ठेयम्। अस्माकं सम्मत्याम् (१) एतद्धनं कस्यचिद्गृहीत प्रभुमण्डलप्रमाणपत्रस्य विद्यालयस्य अर्थात् स्वतन्त्र-विद्यालयस्य विश्वविद्यालयस्य वा संस्थापने व्ययितं स्याद्। (२) द्वितीयंतावद् वर्तमानस्यैव वा कस्यचित्स्वतन्त्रविद्यालयस्य गुरुकुल सदृशस्य उन्नतौ संलग्नं स्यात्। अथ तृतीयं (३) तावदेतेन धनेन यूपी-प्रान्ते, अथ वा, यावच्छक्यं तावद्, स्थाने २ प्रारम्भिकपाठशालाः संस्थाप्येरन्। चतुर्थं (४) तावद् अस्यैव वा धनस्योपयोगः स्वदेशीय कलाकौशलोन्नत्यै भवेत्। अथवा व्यापारोन्नतावस्योपयोगः स्यात्। इतः परमस्यो पयोगस्थानं न वयं समीचीनतरं पश्यामः।

अथवा

किमन्यत् कर्तुं शक्यते?—इदञ्चान्यात्कर्तुं शक्यते, यद् एकतः चान्सलरमहोदये संजाते यू. पी. प्रान्तस्य लाट्महोदये,

तद्नुमत्या च स्वीक्रियमाणे सर्वेऽपि विद्यालयाधिकारिमण्डले सीनेटाख्ये, तदनु, तदनुसारमेव निश्चिते प्वाङ्गलदेशीयेषु महोपाध्यायवर्गेषु, तत्र कुतो नाङ्गल जनतैव पाठ्यते। अथवा आंग्लभारतीयाः आंग्लदेशीया वा विद्यार्थिनस्तत्र भारतजनतायाः धनेन शिक्षां लभेरन्, तन्नितरां साम्प्रतंसाम्प्रतम्। किं भारतीया राजभक्तिभाजः सधनमेतावति महनीये महत्तरे कार्ये न व्येतुं प्रभवन्ति। अहं तु जाने यदि भारतम् भारतीयैः राजभक्त्या धनतनु प्राणार्पण प्रदान घोषणया मुखरयितुं शक्यते। तन्नूनमत्र राजभक्त्यैव इदं धनमाङ्गलानां शिक्षणे व्ययितु मवश्यं शक्यते। यदि न, तत्किंविधा सा राजभक्तिः। यदि अत्र अस्माकं भारतीयाणामधिकारपदानि दृश्यन्ते तर्हि अवशिष्टेषु सन्तुष्टै स्तैर्भाव्यम्।

सन्त्येव पदान्यवशिष्टानि संमार्जक घण्टावादक प्रतिहारादिनामतुलपदानि अस्माकंभारतीयानामेव। यतो हि अत्र अस्माकं धनम्। वयमत्रैव भारतप्रभवा रजतमेऽधिकारिणः। अध्येतारो भारतप्रभवः। मुख्याधिकारिणो भारतप्रभवः। एवमपि सर्वं भारतीयमेव। इति सोयं हिन्दू विश्वविद्यालयो दयनीयतां गतः।

---

# ॥ उषाया नियमाः ॥

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात्पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य सद्भूता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते। किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिकोयं यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुषमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम र्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्धरूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याः प्रते र्मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्यामभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं कार्डेनैव सूचनीयम्। तथा च प्रेषितपत्रे ग्राहक संख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्तृभ्यां सह पृथगेव व्यवहर्त्तव्यः।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते

प्रबन्धकर्त्ता, उषा
डाकघर श्यामपुर

Registered Number A. 639.




*ओ३म्*






संस्कृतमासिकपत्रिका



उषा अजीगर्भुवनानि विश्वा। ऋग्वेदे।

| विषयसूची | पृष्ठाङ्कः | विषयसूची | पृष्ठाङ्कः |
|---|---|---|---|
| जातीयतावतारः स्वामी दयानन्दः | २२२ | वेदानामभाष्यकारः | २५८ |
| हा क्रूरकाल ?* | २२६ | देवगिरां विलापः* | २,२ |
| मातृ जागृतिः* | २२८ | मातृदुर्दशा* | २६२ |
| तिरश्चां व्यक्ता वाक | २२९ | पुरातनं महाभारतम् | |
| भानूदयः* | २३२ | नवीनञ्च | २६५ |
| दीपमालात्सवे बालप्रमोदः* | २३३ | ऋषेर्वियोगः* | २६९ |
| अविस्मरणीया परोपकार कृतिः | २३७ | ऋषिविरहितायाः, * | २७० |
| शरद्वर्णनम्। * | २४१ | टिप्पण्यः | २७१ |
| जातीयोत्सवाः | २४३ | दयामयस्तवः* | २७७ |
| स्वामी दयानन्दः समाजश्च | २४६ | भरताश्रम-वर्णनम्* | २७८ |
| निराशो दयानन्दः* | २४९ | शरद* | २८१ |
| यज्ञेषु पशुहिंसातत्वम्। | २५२ | गुप्तं क्रियापदम्* | २८३ |
| आनन्द षट्पदी* | २५६ | समस्यापूर्तिः | २८५ |



काङ्गड़ी गुरुकुल-यन्त्रालये श्री नन्दलाल-प्रबन्धेन मुद्रिता

# सम्पादकविज्ञप्तयः

अयि महाभागाः अस्मिन् मासि इयं पत्रिका मासद्वयस्य हेतोर्द्वि-गुणतोऽप्यधिका भवत्करकमलेषु समर्प्यते । यदेवात्र प्रायः सर्वैरपि पत्रसम्पादकैः यथासम्भव निजपत्रिकायाः विसृष्टिः ससुखमनुभूता तत्र यदि अस्माकमपि पत्रिका विसृष्टिर्गृहीता तत्र न वयं कलङ्कभाजः । अपरत्र च विधातुरेवायं प्रसादमहिमा यदस्याः सम्पादको भृशं ज्वरार्तः उपाया अप्रकाशनेन भवतां चिन्तयाच नितरां-दूयमानः न कथमपि अपारय न्निर्वाहयितुम् ।

अधुनाऽयं दीपमालाङ्क स्त्र्यङ्कोवा नानाराग भूषितः ससंमदं स्वीक्रियताम् । अस्याङ्कस्य नानालेखाः कविताः गीतयश्च स्वयं पठ्यन्ताम् । सुहृद्भिश्च पाठ्यन्ताम् ।

अधुना अस्य मुषायाः प्रथमश्चरणविन्यासः दीपमालाङ्को नाम । अतः परमाशास्महे यदियमुषा नूनमादित्यस्य ब्रह्मर्षेः दयामयस्य च करप्रसादं लभमाना अवश्यं भवन्मनो जलज मुकुलानि विकच-यितुं समर्था भवित्री ।

अस्या अनेनैव साहसेन भवत्सेवायां प्रवृत्तायाः सर्वमपि पूर्व कृतमपराधं स्खलनं वा सतां वर्त्मानुसरन्तो भवन्तो ऽविगणय्य दयाशीलाः क्षमां वितरिष्यन्ति ।

यदि ततोऽपि किंचित् स्खलित मिव पाठक महाभागानाम रुचिकरमरमणीयं वा प्रतीयेत भवद्भिः वयं सौहार्देनात्मीयतया सूचितार्था भविष्यामः । अन्यथा दोषोद्भावनं नाम न सतां वर्त्म ।




॥ ओ३म् ॥

# उषा




| प्रथमेवर्षे | ... ...आश्विन कार्त्तिकौ... ... सं० १९९१ वि० | दशमः एकादशश्च |
|---|---|---|

## तारय पारमपार !

महेश्वर ! तारय पारमपार ॥ ध्रुवम् ॥

मोहनिशायाम्, दुःखदशायाम्,

तारय करुणागार ! ॥ १ ॥

मानसपीडां हर, हरमूर्त्ते !

पालय पालनकार ! ॥ २ ॥

संसृतिकूपाद् हनिदशायाम्,

उद्धर दीनाधार ! ॥ ३ ॥

दारुणरजनीतमसि सुरेशो-

दीपय नो द्युतिसार ! ॥ ४ ॥

मोहविमूढान्, परकरबद्धान्

मोचय नः सृतिसार ! ॥ ५ ॥

करुणासागर ! प्रेमदिवाकर !

वृजिननिकरसंहार ! ॥ ६ ॥

शरणगतानां भवनिधिमध्ये,

शरण्य ! शर्मागार ! ॥ ७ ॥

त्वमिह भवेऽस्मिन् हीनजनान् नः

पाहि भवार्त्तिनिवार ! ॥ ८ ॥

# जातीयतावतारः स्वामी दयानन्दः

"परिवर्तिनि संसारे मृतः को वा न जायते
स जातो येन जातेन याति देशः समुन्नतिम्"। स्फुटम्।

जगति जनिमागता न कति कति जन्तवः समुज्वलत्सु काम-नाकृशानुशिखापटलेषु बहुधा गभीरमनुभूयापि दुःखं, मुग्धाः सन्तः पतङ्गवदपजहति हन्त जीवनम्। केचिदेव एतेषामनुभवन्ति अपगमन खेदम्। किन्तु संसारसागरमहोर्मिमालाभिरितस्ततो दोलायमानाना माश्रय इव पन्थानम् अपहाय जटिले खलु कानने विषमम् अनुसृतवताम-ध्वानं पथदर्शक इव, दौर्भाग्यकेसरिनखाक्रान्तानाम् आधार इव, पाप-पङ्कक्लिन्नानां शुद्धतापादकं जलमिव, बहुदोषवाताहतानाम् आलम्ब-नमिव, यदि कोऽपि शरणसमागतानुत्सृज्य दिवमधिरोहति जनो, न स स्मृतिपथाल्लौकिकानां सरलतयोपयाति। मनुष्यास्तं तदुप-कारान्, तत्कार्याणि तदाचारान्, तद्व्यवहारांश्चोत्सवेषु, समाजेषु, परिषत्सु, सभासु च स्मारं स्मारम् अनुस्मरन्ति। तदत्र नाप्रास-ङ्गिकं यदि वयमपि दीपमालोत्सवोपलक्ष्ये दयानन्दमुपलक्षयामः।

अयं खलु श्रीमान् बहूनां प्रकाशानां निचय इवानल्पशिक्षाणां समुदायः, सवितेवाद्यापि अगणनीयैर्गुणैः जागर्ति तमाम्। असंदिग्ध-मिदं यदयम् ऋषिः साधारणया दृष्ट्या, धार्मिकेण सूत्रेण संसारेणैव सह अस्ति संयुक्त इत्यवलोक्यते। किन्तु न केनाऽपि शक्यते वक्तुं यदनेन देशभक्तेः सार इव जातीयतारूपो रसो नापायि। ऋषिरयं स्थाने अस्मान् उद्बोधयति यद्दैशिकमस्ति कार्यं प्रथममस्मदीयम् इति। नात्रावश्यकता प्रमाणबहुलानाम्; किन्तु किञ्चिद् निदर्शनमिवात्रोल्लि-ख्यते। ऋषिरसौ पत्रेषु स्वमित्राणि बहुधोद्बोधयामास यत् स्तो वैदिकधर्मावलम्बिनां देशोपकारपरोपकारौ द्वे मुख्ये कार्ये। इद-मेव वैदिकानाम् आलम्बनमिव कर्म, यदि न कश्चिद्विधातुमुद्यतेत न स वैदिक इत्युच्येत। अस्तु बहुधा एतदर्थमेव एतेन सभाः कृताः। यथा देहलीनगरे कैसर्यु सर्वे समाजमाहूय तत्रावोचितो यदस्माभिर्देशो-

न्नत्यै ऐकमत्यमैकरीत्यञ्चाश्रणीयं, यतः सत्वरं कार्यसिद्धिः संजायेत। इतो अतिरिक्तं न कतिकति वारं व्याख्यानेष्वयं स्वदेशीयवस्तुप्रचारणाय प्रेरयामास। अथचानेन स्पष्टमुदितं सत्यार्थप्रकाशे ब्राह्मसमाजसमीक्षणे यत्......"किन्तु यत एते स्वदेशभक्तिशून्या निरन्तरमन्यानेव यीशुमतावलम्बिनउपाश्रयन्ते......अतो अननुकरणीयाः" एवं सति को न स्वीकरोति यदयमजाना द्रुजातीयतायाः मूलं तत्वमिति।

अथैवं गते किञ्चिदग्रे पदं धास्यामः। को न जानीते यदद्यश्वः किञ्चिदपि साक्षराणां, देशभक्तेः स्रोतस्विन्याम् अमृतोपमं पयः पिपासूनां दैशिकदशादर्शनेन हृदि निहितशोकशङ्कूनां भरतभुवस्तनयानां जातीयताविषयकः कृतः कोलाहलो ऽनवरतमन्तरिक्षमुत्क्रामति। सत्यं यदद्य जातीयतायाः विषयप्रतिपादनं न नाम प्रायशो बहुमानास्पदमावहति खेदं, यतो हि सार्वजानिको ऽयमिदानी विषयः समपद्यत। इदानीं देशे न खलु केवलं बुधाः किन्तु स्वल्पाक्षरा अपि बहवो विदन्ति, यद्देशोन्नत्यै भारतीयेष्वास्ति परमोपयोगी जातीयतायाः प्रसारः। अलममतितरां वादेन किन्तु इदमेवाऽस्ति चिन्त्यं यद् यदा न को ऽपि जातीयतायाः लाभान् अवगच्छेत्तदा इमं भावं यः प्रादुरकरोद्, अथवा यत इयं प्रभूता जातीयतासरित्सर्वत्र भारतीयजनचेतःस्थलीषु प्रचुरतयाऽद्य प्रसरति। स खलु प्रभवः कियान् अभूत् पवित्रतम इति। अस्मिन्नवसरे कश्चिदपि स्वार्थाभिभूतः किमप्यस्य भावस्योद्भावयेत्; किन्त्वहमधुना सामोदं साभिमानं, सगर्वं, सोत्साहं, साहंकारं, सावष्टम्भमुद्घोषयामि; यन्नूनं स एव महात्मा ऽङ्कुरमवारोपयद् अस्यापि भावस्यार्यावर्तीयमानवमानसमहीषु, यदधुना ऽवधि प्रभूतानि फलानि प्रासूयुवत्। अथाग्रे, तदीयमवगाह्य जीवनं दर्शकाणां पुरत स्तस्य कानिचिज्जातीयतासम्पादकानि कार्याणि प्रकटी क्रियन्ते।

कोहि नाम न जानाति यज्जातीयतायाः प्रथममिदमुद्देश्यं यत्सवऽप्यकुलीनाःकुलीनाश्च, निर्धना धनिनश्च, सेवकाः स्वामिनश्च, मूर्खा

विद्वांसश्चैकस्मिन्नेव सूत्रे मणिगणा इव प्रोताः स्युः । किन्त्वस्माकम् आर्याणां नासीदेव प्रस्तुत उपक्रमः । शकेण महीभृतामिवात्याचारवज्रेण कुलीनैरखण्ड्यन्त नीचानां पतत्राणि यदधुनापि तेषामस्ति सर्वत्रनिरुद्धा गतिः । अद्यापि प्रचलति, भारतीयेषु व्यवहारो, यन्नीचकुलजा न लभन्ते हन्त शुनो ऽपि ननु किञ्चिदुत्तमां वृत्तिम् । सारांशः, यदासीत्कुलीनैर्निखाता परितः परिखा, मध्ये च विहितः सुमहान् दृढो दुर्गो, यस्यान्तःप्रवेष्टुमासन् सर्वथा ऽपि निःशक्ताः प्राकृतकुलसम्भवाः । तत्र महर्षिणा दयानन्देन महानाधारसेतु, र्जातीयतायाः दृढं मूलमवारोप्यत । अधुना सन्तो ऽपि विहीनाः, जातिबहिष्कृताः नार्यैः परित्यज्यन्ते । अथ च प्रायशः, सर्वेप्यधीता इदानीं स्वामिनः शिक्षातो जानन्ति, यदस्तीदं कार्यं जातीयतायाः प्रथमसङ्गमिति । अस्तु—

अपरञ्च । अस्ति विद्वद्भि रङ्गीकृतं जातीयतायाः प्रसारकं साधनं भाषैक्यमिति । अथचास्ति बुद्धिमद्भिरनुशीलितोऽयं सिद्धान्तो यद्भारते हिन्दी एव शक्या सार्वजनीना कर्तुं भाषा । तत्र सर्वतः पूर्वं पदमाधाय सुस्पष्टं जातीयताप्रसारकाणामग्रेसर इवायमृषि र्लक्ष्यते ।

अथ च ये जातेः प्राचीनतमेतिहासे न विश्वासमादधते न ते देशे जातीयतासम्पादने लेशमात्रमप्यङ्गम् भवितु मर्हन्तीति नान्तर्हितं जगतः । किन्तु हन्त ! आंग्लशिक्षाप्रवाहविभ्रमेष्वापतिताः भारतीया न जातु प्राचीनं प्रकाशमयमपश्यन् आत्मीयपूर्वजानाम् । तस्मिन्नेवावसरे प्राचीनमेवास्माकं श्रेय इत्युद्घोष्य जातीयतायास्तृतीयं सिद्धान्तमास्थापयद्देवः ।

इदानीं बहुभिः सभ्यंमन्यैः पाश्चात्यैरर्धसभ्या, मृतप्राया, नितरां दुर्बलेति मुहुर्मुहु रुद्धुष्यते भारतीया जातिः । किन्तु सोऽयं भगवान् जीर्णेष्वप्यस्यास्साशालतामुद्ग्रन्थयति स्म । कदाचिदयमासीद् ऋषिरुक्तः केनचिदांग्लवर्येण यत्सूक्ष्मसूत्रवदियं जातिर्न जाने केनाभि-

घातेन हास्यति जगतस्तलम्। तदासौ आर्येषु विश्वासमावहन्नुवाच, यन्न खलु लौहश्रृंखलेवेयं दृढा, केषांचिदत्याहितैः खिन्नेव स्वर्गं गमिष्यति। एवमस्मान्नृषिः कथयति यद् जातीयतास्थापनार्थमात्मीयेष्वाशाबन्धः समाधेयः।

पृथिव्याः कस्यापि जातेर्भागस्य जातीयतायाः विनाशकं युक्तं शस्त्रं धर्मपरिवर्तनं नामासीद्यीशुमतावलम्बिभिः प्रयुक्त मस्मासु। तत्र वैदिकं दत्वास्मभ्यमनेन स्वग्निना शस्त्रमार्यसमाज नामकं महत्सैन्य मुदपादि येन वहुधा पराभूता यीशवो न भारते सफलतामवहन्ति। एवमयं स्वीयमास्थाप्य धर्मसस्मदीयामरक्षयज्जाति मिति। एवमस्माभिः कानिचिदेव जातीयतासम्पादकान्युक्तानिकार्याणि, इत्थं भारतीयजातीयतां रक्षयत उपकारिणः कृतिनो न वयं कृतघ्ना इति नितरामदर्शनायं निदर्शम्। तस्मात् सर्वथा प्रकाश्या इयं कृतज्ञता। तद्दर्शित मध्वानमनुसृत्य भारते जातीयतां संरक्ष्यैव दर्शयिष्यते पाठकै रिति सर्वथा ऽऽशास्महे।

कश्चित्

# हा क्रूरकाल !

हा हा कठोरं तव वीक्ष्य चेतः,
कथञ्चिदप्यत्र सहे न, काल ।
करोमि किं ते ह्यवशोऽस्मि हन्त !
हन्ता निहन्तापि न दृश्यते ते ॥ १ ॥

दुष्टान् विहाया, ऽथ निगृह्य साधून्,
प्रसन्नचेताः किमु लक्ष्यसे त्वम् ।
मन्ये, मतिस्ते विगता यतस्त्वं,
बकान् हि सन्तोष्य निहंसि हंसान् ॥ २ ॥

किं भारतीयां कुदशां न वेत्सि,
किं वा ऽऽर्त्तनादं श्रवणेच्छुको ऽसि, ।
यद्वा, स्वलोकोद्धरणोत्सुकोऽसि,
यतो दयानन्दमुनिर्हृतो हा ! ॥ ३ ॥

यद् भारतं धर्मनिकेतमासीद्,
यद् भारतं विश्वजनीन मासीत् ।
यद् भारतं दीनशरण्यमासीत्,
तद् भारतं दासपदं भजेत् किम् ॥ ४ ॥

लोकाय विद्यां, सुखसभ्यतां च
शिक्षां, मतिं, धर्मरतिं वितीर्य ।
प्रदाय सर्वं किमु निर्धनः सन्,
देशोऽधुना दीनदशामवाप्तः ॥ ५ ॥

राज्यं गतं, हा ! भुवनस्य दासो
गुरुत्वमप्यस्य विनष्टमेव ।
विद्या न सा, कीर्त्तिरपि प्रणष्टा,
लेशस्य शेषोऽपि न सभ्यतायाः ॥ ६ ॥

तद्देशपुत्रं जगदेकवीरं
श्रीमद्दयानन्दमुनिं महर्षिम् ।
दयायुतं निर्दय कस्य हेतोः
हत्वा भयासीति वदाऽधुना त्वम् ॥७॥

या वेदवाणी नितरां विलुप्ता
आसाविता तेन दयामयेन ।
यो धर्ममार्गोपि न गोचरोऽभूत्
संदर्शितस्तेन महर्षिणा सः ॥८॥

स्वराज्ययत्नः, परराज्यविघ्नः
को वास्ति, कस्यास्ति, च कीदृशो वा ।
देशोपकाराय निदर्श्य सर्वं
हा हन्त कुत्रासि गतो महर्षे ! ॥ ९ ॥

यद्वा, न दोषस्तव, काल, हन्त
भाग्यानि नः सन्ति हि तादृशानि ।
हे देश हा भारत मातृभूमे !
किं नाश एवास्ति विनिश्चितस्ते ॥ १० ॥

पाहि प्रभो देहि महर्षिमेकं
स्वयं दयानन्दनिभं पुरस्तात् ।

नो चेत्, स रामो भुवनाभिरामो
राजा जगत्याः पुनरस्तु देशे ॥ ११ ॥

हे दीपमाले ! नितरां विशाले
कुरु प्रभां सम्प्रति मोहकाले ।
संवर्धयाऽऽशु व्रतिनः कुलस्य
वर्धेत देशोपि च भारतस्य ॥ ११ ॥

आनंदः

---

## मातृ जागृतिः

"महनीये ! प्रबोधं पुरो येयम् ॥ (ध्रुवम्)"

कालो महांस्ते जातः प्रसुप्तेः, नैजं भविष्यं विनिर्मेयम् ॥ १ ॥
ज्योतिर्ददौ ते रघुवंशवीरः, रामेण भूयः समा श्रेयम् ॥ २ ॥
मात र्भवेस्त्वं लोके समस्ते वीरप्रसूस्तत् तमो हेयम् ॥ ३ ॥
देशीयबन्धे मिथः सहायैः, अस्मा भिरद्योन्नतौ स्थेयम् ॥४॥
निस्तार्य कर्मैकवीरेण पङ्कान्, निर्देशितं वर्त्म किन्नेयम् ॥ ५ ॥
तस्यो पकर्तुर्दयालोर्महर्षेः, उपकारकं तद्यशो गेयम् ॥ ६ ॥
अस्तं प्रयाता हिमित्रेण तेन, रक्ता प्रतीचिर्दिशा सेयम् ॥७॥
तामेव भासं पुरश्चक्षुषोस्त, त्संस्थाप्य कल्पेऽयने येयम् ॥ ८ ॥
भद्रास्तु सम्प्रति मातुर्हितार्थम्, सर्वैश्च चेतः समाधेयम् ॥ ९ ॥
साहाय्यकामाय साहाय्यमीशो, दत्तोऽपिनोऽयं किलाशेयम् ॥१०॥

'किशोरः'

# तिरश्चां व्यक्ता वाक्

अयि पाठक महाभागाः ! पाश्चात्यमधुना नूतन निरीक्षण परीक्षणै श्चेतश्चमत्कारवन्ति विज्ञानानि प्रकटयद्, सर्वेषामपि प्राचीनावशेष भूतानां पूर्वीय देशानां बुद्धिपाटवं शिथिलयति । वयमपि प्राचीन सभ्यता पक्षसेविनोऽपि बलात्कारं यथास्यात्तथा कर्णेषु मनःसु वाकृष्टा प्रसभ मात्मनः साहित्य मेकतो विरसमिति विहायान्यतोऽविरतरसवदिति परकीयं परभाषान्वितं भजामहे । न जाने कस्तत्रापूर्वा स्वदो यो भूरि भूरि मनांस्याकर्षति, तद्विज्ञानं च दिक्कुहर पूरिभिः प्रशंसानादैः शंसयति ।

न केवल मेतावदेव परं वयमपि विचारेषु येन केनापि कारणेन-सहैवदासतां नीता, भूयो भूयस्तत्र स्वल्पेऽपि विज्ञानजलपल्वले भ्रष्ट-राजहंसा इव रमामहे । किमिहाऽपि विचारदास्यमिति प्रकाशन-बुद्ध्या लिखितो लेखः कस्याऽपि प्राचीनवैभवजुषो मनस्तोषं जनयेद्वय-मियतैव अस्य महतः प्रयासस्य साफल्यं विन्दामहे ।

पाश्चात्यदेशेषु वैज्ञानिकरीत्या कैश्चिदनुपमविद्याविशारदै-र्महोपाध्यायैरश्वा गणितशास्त्रमनुशीलयितुं शिक्षिताः; केचन-श्वानो मनुष्यवाचा भाषणं शिक्षिताः । इदं परीक्षण द्वयमपि सफली-भूतमिवावलोकयामः । वाजिनस्तु नाना चातुर्येण गणितस्य कठिनां स-मस्यामपि सरलयितु मपारयन् ; तदेतावता गणकस्य सर्वमपि कार्यं वाजिन एव कर्तुं मानवजातेः साहाय्यं करिष्यन्ति, इति अपि केषां-श्चिद्भविष्यद्दर्शिना मुद्गाराः कर्ण गोचरायन्ते । एव मेव मनुष्यवाचा भाषमाणाः श्वानोऽपि मनुष्यसंदेशहारिणो निःसंशयं भवितार इति न कस्यापि संदेहावसरः ।

केचन भूरि भूरि प्रयत्नभाजो महोपाध्यायवर्या वानरजातेः भाषां महता कालेनाधिजग्मुः । तस्य व्याकरणञ्चातीव परिपुष्टं, भाषा चाश्चातितरां सुप्रयुक्तमिति, वानरभाषायाः व्याकरणान्वितत्वं, वान-

राणाञ्च मतिवैशद्यमधुनाऽऽविष्कुर्वन्ति । उच्यते च तैरेव यदत्र धातवो वहवः सन्ति तेषा मेव धातूनां प्रकृतिप्रत्ययागमादेशादिनाना विकारै र्भवत्येव बहुविधो भाषाप्रक्रमो बहुविधा च शब्दव्युत्पत्तिः ।

अस्त्येवेदं नव्यविज्ञानसंमुदितचेतसां महत्कौतुकस्थानम् अथ च पाश्चात्यसरणिं शंसं शंस मनुसरतां महच्छ्लाघास्थानम् । परं वयमधुना इदं नवीनमिवोपक्रान्तं विभावयन्तोऽपि प्राचीनानां किञ्चिदधिकमेव स्मरामः। नच तत्सर्वमुपेक्षाबुद्ध्याऽपलपितुं वयंमनागपि क्षमाः । अस्त्येवमहानत्याचारः संस्कृतसाहित्ये यदन्यत्र लिखितं वस्तु मान्यं भवति तल्लिखितं च सदैव विदुषां मनःसु संदेहं जनयति । अधुना पुनः प्रकृतं प्रदर्शयामः । को न वेद कादम्बरीं साहितीरसनिषिक्ता मधीयानः अग्निशापेन करिकीरयो र्मानुषीवाग्विरहितत्वम् ।

कथयन्ति प्राचीनाः, पुरा अग्निर्नामा ऋषिः वने किञ्चिदात्मीय मिवालपन्नरण्ये आस्ते । कालान्तरे तद्गोप्यं वस्तु सर्वत्र प्रसृतमिव पश्यन्सं क्रुद्धः करिजातिं कीरजातिं च शशाप "यत्सर्वमपि मानुषीवाक्भाषण सामर्थ्यं विगलतु भवतोः" करिणस्तु जिह्वाऽप्यन्यादृशी संवृत्ता कीरस्तु केवलं विस्मृतवानेव । पुनरपि स शिक्षणेन तदेव वक्तुं प्रभवत्येव ।

महत्प्राचीनेयं गाथेति मिथ्याकथाप्रवादेषु कश्चिदपि गणयेन्न तत्राऽस्माकमाग्रहः,परमधुना प्रत्यक्षमपलपितुं को हि मतिमान् प्रभविता। किमेतावता न तत्राऽपि विश्वासं कर्तुं मनो भवति । यदि केनचिन्मतिमता महता प्रयत्नेन श्वा शार्मण्यभाषां वक्तुं शिक्षितः, तर्हि किम् ?। अस्माकं पुरातना किमर्वाचीना अपि शुकसारिकादिशिक्षणमधुनायावदपि शिक्षयन्त्येव भाषितुंम्; तत्र किंनास्ति अस्माकं पुरातनं वैभवम् ? । इतिहासविदो जानन्त्येव मण्डनमिश्रस्य निवासस्थानं यत्रद्वारि २ पञ्जरस्थाःशुकाः शारिकाश्च दर्शनानां निगूढानि तत्वानि गीर्वाण वाण्या तर्कैः निश्चिन्वन्ति स्म । प्रायो भारतीयाः विद्वांसो ब्राह्म

णाः किं, अपितु सर्वेऽपि कुलीनाः प्रायःश्व सदृशानां पशूनां परिहरन्ति-स्म सङ्ग,इतिहेतोः यदि शुनां शिक्षणं न पुराकालीनं तदिति कोस्ति नः क्षयः। मनुष्यवाचा सिंहस्य भाषणं किं विस्मृतिपथं यातम् लघु-त्रयीं कविकुलशेखरस्य कालिदासस्यानुशीलयताम् । किं नन्दिनी ऋषिधेनू र्न व्याजहार मनुष्यवाचा मनुवंशकेतुम् ।

अधुना वानरा अवशिष्यन्ते विशिष्यन्ते च। अहो रामायणी स्यैव कथा न नो हृदयान्यावर्जयति? रामो विदग्धः किं वानरसेनां न स्वीच-कार रावणं विजेतुम्?। तत्र किं पाठका हनूमतो व्याकरणनियमैरल ङ्कृतां व्याख्यानशैलीं विस्मर्तुं प्रभविष्यन्ति? न कदापि। वानरस्य-बहुभाषाभाषित्वमपि तत्र नितरां सुघटम्। एव मेव नित्यव्यवहार वशाद् मानवजात्या सह सम्बन्धेन सम्बद्धा वानरजाति र्यदिमानवभा-षणशैल्याः स्यादेव परिचिता तत्रा स्त्येव कः सन्देहः। वयं सर्वं सुक्त मुत्पश्यामः।

अत्र तु एको महोपाध्यायो विजानीते वानरभाषा मेव, परमस्माकं ऋषयो महर्षयश्च योगबलेन सकलभूतरुतज्ञाने विमर्शमवधार-यन्ति। साधनानुष्ठानेन यदि न सिद्धिःस्यात्तदनु द्रक्ष्यते। पुराका-लेऽपि कैकय्या जनकः कृमिकीरादिभाषामवबोद्धुं जानीते स्मेति;प्रा-चीनः कथानक उपलभ्यते।

प्रत्यक्ष मुपलक्षितेन वानरभाषानिदर्शनेन श्वभाषानिदर्शनेन चान्येषामपि जन्तूनामात्मीयभाषायां प्रभूतज्ञानवत्वमपि स्वीकर्त्तुम-स्माकं नास्ति विलम्बः। वयमपि कर्मफलेन जन्मान्तरमनुसंदधानाः कथं न शकुनीना मन्येषां वा जन्तूनां प्राक्संस्कारोद्बोधवशात् तत्त-द्योनियोग्यं ज्ञान मभ्युपेतुं प्रवर्त्तामहे। यद्यस्तिकस्यापिशङ्का स स्वा-मिनां सत्यार्थप्रकाशमुद्धाख्य कर्मफलनिर्णयप्रकरणे संशयोच्छेदं विदधातु। केन विधिना स्वामिनः सात्विकराजसतामसमानवानां योन्यन्तरविपरिणामं प्रदर्शयन्ति।

इतोऽपि यदि न खण्ड्यते संशयस्तदुद्घाट्यतां विष्णुस्मृतिः । तत्राऽपि कर्मफलनिर्णयप्रकरणे योनीनां कर्मप्रकारविभागं महत्या विचारशैल्या निर्णीतं वय मवधारयामः तत्र लक्ष्यते प्राचीनानां मतिवैशद्यम् ।

इत्य लमति पल्लवितेन महतां मतिमतां विज्ञानविशदहृदयानां चरणपल्लवेषु ।

कुशाग्रः ।

---

## भानूदयः

नवाभालालिता, पाची, पुनर्भानूदयो जातः । ध्रुवम् ।
मरन्दामन्दसन्दोहो ऽरविन्दानां पुनर्जातः ॥
शुभैः काव्यद्रुमैं रम्ये, ऽमले, सारस्वतोद्याने ।
मिलिन्दानाममन्दो ऽयं पुन र्गुंजोदयो जातः ॥
पुनः सम्मेलनारामे ऽभिरामे, काव्यमर्मज्ञैः ।
प्रमोदस्नेहसंचारः सखायोऽयं नवो जातः ॥
वितन्वन् शान्तिसन्तानं समीरो ऽयं समायातः ।
रसालीशीलनालीनां पुनर्लीनोदयो जातः ॥
प्रसन्नं व्योम संपन्नं, क्षणे तारालयो जातः ।
प्रयातं ध्वान्त सन्तानं, पुनर्बोधोदयो जातः ॥

मरालः

---

प्रभो सुताः वयं स्म स्ते, भक्ताः स्याम पितस्तव ।
देहि त्वमुत्सवानन्द मस्मभ्यम् भक्तवत्सल! ॥

## दीपमालोत्सवे बालप्रमोदः

अथ वत्सान् चिरात् सुप्तान, अम्बा बोधयितुं गता ।
वत्साः ! प्रभाता रजनी, मा भूत् कालस्य पर्ययः ॥१॥

बाला अपि स्मरन्तस्ते, दीपोत्सव मिमं तदा ।
प्रबुद्धाः सत्वरं सर्वे, प्रभाते शान्तपावने ॥ २ ॥

उद्बुद्धास्ते तदा बालाः, पर्यङ्के परितः स्थिताः ।
अम्बा तेषां परं देवं प्रारेभे समुपासितुम् ॥ ३ ॥

पुण्यैः मन्त्रैस्तथा श्लोकैः, भजन्ती परमेश्वरम् ।
चित्ते सति द्रुते भक्त्या, प्रेमास्रं समपातयत् ॥ ४ ॥

मुग्धास्ते ललिताः बालाः दृष्ट्वाम्बां द्रुतचेतसम् ।
भक्त्यानन्दसमासन्नां, प्रेमास्रप्लुतलोचनाम् ॥ ५ ॥

शीतान् मुग्धास्तोयविन्दून् स्रावयन्तः सुलोचनैः ।
हन्तानन्दं परं चक्रुः जनन्याः द्रुतचेतसः ॥ ६ ॥

अचिन्तयच्च सा देवी यदि नित्यं भविष्यति ।
चेतः द्रुतं च पुण्यम् मे, ध्रुवम् भक्ता इमे तथा ॥ ७ ॥

अवरुह्य च पर्यङ्कात् नेमुस्ते पितरौ मुदा ।
वत्स वत्स चिरंजीवे त्याशिषो ददतुश्च तौ ॥ ८ ॥

एव मेकः शिशुर्दृष्ट्वा भ्रातृंश्च भगिनीन्तथा ।
अवरोहे त्वशक्तः सन् प्रारेभे रोदितुम् तदा ॥ ९ ॥

मास्म रोदीर्नु मे बाल ! ललितोत्सव एष ते ।
आरोप्याङ्के च तं, सर्वान् नित्यकृत्यमकारयत् ॥ १० ॥

अम्ब वासांसि नो देहि रक्षितानि चिरात्वया ।
दीपमालोत्सवो भद्रो, विभूषो भूषणान्यतः ॥ ११ ॥

नाना गन्धै राभरणैः भूषयित्वात्मनः सुतान् ।
प्राहिणोत् पण्यवीथीषु, खेलितुम् सखिभिः सह ॥ १२ ॥

एकस्तत्र परं ब्रूते "वासो मे सुन्दरं सखे" ।
स्पर्द्धमानोऽपरो "मैवं पश्य चारुतरं मम" ॥ १३ ॥

क्वचिन्मिष्टञ्च ते क्रीत्वा विभजन्ते परस्परम् ।
कश्चिदन्यान् गतान् दृष्ट्वा भुङ्क्ते क्रीत्वा स्वयम् स्वयम् ॥१४

परे यथा न जानीयुरिति प्रोञ्छितवान् मुखम् ।
दैवात्,मुखे कणै स्त्यक्तैः, निगृहीतः परैः स्फुटम् ॥ १५ ॥

एकत्र, जनसंमर्द मवलोक्य घनं परम् ।
"पारे यातुं न शक्ताःस्म" ऊचुस्ते "करवाम किम्" ॥१६॥

एकस्तेषान्तु निपुणो ललितःप्रतिभानवान् ।
आहैवं " भो सखायो मे शृणुतोपायमीदृशम् ॥ १७ ॥

चारुवर्णानि वासांसि, वीणास्माकम् करे करे ।
पंक्तिं कुरुत रुचिरां, वीणां वादयत स्निक्काम् ॥ १८॥

दृष्ट्वेदं सकलं दृश्यं रुचिरं विस्मयावहम् ।
स्वयमेव भविष्यन्तीमेऽस्मासु प्रसन्नचेतसः " ॥ १६ ॥

जनास्ते कृतसंमर्दाः, विस्मयोत्फुल्ललोचनाः ।
दृष्ट्वा पंक्तिं रवं श्रुत्वा, मार्गं तेभ्यः स्वयम् ददुः ॥ २० ॥

एवं हसन्तः, खेलन्तः, कूर्दन्तश्च, तथेतरे ।
स्वे स्वे गृहे गताः, भोक्तुम् बालकाः सहवासिनः ॥२१॥

स्वदन्ते रसमिश्राणि फलानि मधुराणि ते ।
मिष्टमिष्टम् रुचिकरम् मोदम् मोदम् कुमारकाः ॥ २२ ॥

आत्मक्रीडनकैर्भद्रैः मञ्जुलैः श्चारुनिस्वनैः ।
शोभयन्ति स्थितिं सर्वे, प्रसन्नास्ते किशोरकाः ॥ २३ ॥

सुकुमारास्तथा बालाः स्वगुड्डीः रोचयन्ति च ।
इदं प्रियतरं तेषां, सर्वो जानात्ययं जनः॥ ॥२४ ॥

अथ सायं विधिं कृत्वा, भुक्त्वा सत्वरमेव ते
गताः यत्र स्थिता आसन् वृद्धाः पलितमौलयः॥२५॥

सितवस्त्राः, सितोष्णीषाः, श्वेतश्मश्रुशुभाननाः ।
परस्पर मालपन्तः आनन्दं जनयन्ति ते ॥२६॥

बालान् स्तानागतान् दृष्ट्वा प्रसेदुर्हृदयेन ते ।
बाला स्तेषां क्रीडनकम्, तेषां मारोहणं हि ते ॥२७॥

अङ्के च बालानारोप्य मूर्ध्न्याघ्राय मुदा मुदा ।
आहुः किं रोचते वत्सा युष्मभ्यम् वदत स्वयम् ॥ २८ ॥

मिष्टं, वीणा, क्रीडनकं, छत्रं वासश्च, भूषणम् ।
फलं, रूप्यक मन्यच्च, यद्ध यदिच्छत दीयते ॥ २९ ॥

खेला वेलेयमस्माकम् यामो यामः पितामहाः ।
पथि स्थितान् जनान् दृष्ट्वा तस्थुस्तत्र कुतूहलात् ॥ ३० ॥

यूनस्ते तत्र पश्यन्ति वीरकर्माणि कुर्वतः ।
धीरोदात्तान् धीरोद्धतान्, गदाचापासिधारिणः ॥ ३१ ॥

श्रान्ताः हृष्टाः भ्रमन्तस्ते, गृहम् याताः स्वकम् स्वकम्
पुत्राः कुरुत दीपानाम् मालाश्चित्रा मनोरमाः ॥ ३२ ॥

एव मुक्तास्तु पितृभिः पंक्तीः कृत्वा सुशो भनाः ।
गृहाणि मण्डयामासु ज्वालयन्तः स्वदीपकान् ॥ ३३ ॥

वाताभिघात निर्वाणं विलोक्यैवं वदन्ति ते ।
भद्राः भद्राः विरमत ज्वालयामः स्वकान् पुनः ॥ ३४ ॥

ज्वालयन्तं परं दृष्ट्वाऽप्यात्मनस्तमसाकुलम् ।
निर्वापयन्ति फूत्कारैः मन्दैरन्यांश्च स्पर्द्धया ॥ ३५ ॥

इत्थं शयन कालस्तु, तेषां प्राप्तो गृहे गृहे ।
प्रसन्न वदनाः सर्वे चारुतल्पेषु तेऽ स्वपन् ॥ ३६ ॥

———

# अविस्मरणीया परोपकार कृतिः

## ( सत्या गाथा )

महतो राजगृहस्य स्वल्पके ऽन्तर्गृहे मृदुकुथास्तरणाश्रितां पर्यंकिकाम् अधिशयानो ऽविदितशुग्भरेण शिथिलाधरोपरिसंन्यस्ताङ्गुलिद्वयः सुधासारसंलिप्तभित्तिकादत्तदृष्टिश्चिन्ताभरनतोत्तमाङ्गो निश्चलीकृतदेह इवापि भूयोज्वलिताभ्यामङ्गारप्रतिमाभ्यां नयनाभ्यां दहन्निव नभो ऽरुणराशि * र्नाम बगदादाधिप आस्ते ।

नानाविधशिल्पिचित्रित चित्रकुसुमरचितमुक्ताजालोपबृंहितच्छदो विविधाकृति शीतदीधितिशिलाशकलकलितभित्तौ नैकवारणरदनखण्डकलितकपाटकपाटिकाद्वारवातायने नानामृगरोमशबलित कुथास्तरणपरिकीर्णकुट्टिमे द्वारपार्श्वावलम्बित खचितमुक्ताजालपटगृहे मन्दमन्द प्रभञ्जनध्वनित गवाक्षरन्ध्रे पार्श्वतो ऽविरतं झर्झरायमाणविमलजलनिर्झरे मन्दमन्दमान्दोल्यमानव्रततिकोमलपल्लवाकुलितवातायने क्षुद्रायतने तस्मिन् जनपदेशः शान्त्या निश्चल आस्ते । परन्तु दन्दह्यमान कोपज्वालामाला कुलमन्तः करणम् । कोपपरीतमूर्त्तेर्नरपते राज्ञया महत्या मानभूत्या सकलेन जनपदेन सम्मानितः श्रेयःशोभाविग्रहः, नयविनयदयादिनानाऽऽभिजात्यगुणरत्नाकरो धीमान् महामात्यो जयापीडः × शूलमारोपितः ।

सत्यम्, नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपद हितकर्ता त्यज्यते पार्थिवेन्द्रैः

अरुण राशिरयं महामात्यं यमसदनाध्वनि अध्वनीनं विधाय तज्ज-

---

* हारूंरशी

× जाफर खां

नित पातकेन कृशानुनेव दंदह्यमान स्तत्तन्मन स्तापेनेवा संताप्यमानो ऽपि क्रोधान्धधिया क्रियमाणाविवेककर्मणा शोकभरमन्थरमानसः महामात्य मरण श्रवणमनजर्जरचेतसा प्रजया च विस्मयत्तिष्ठति ।

इत श्च प्रजा विह्वलायमाना सहसा शोकवैकलव्यपिशुनान् आर्त्तनादान्मुञ्चन्ती नानाचीत्काररवेण जनपदमपि शिवा कीर्णं श्मशान मिवारचयन्ती वीथिकासु द्वारेषु गोपुरेषु चत्वरेषु घण्टापथे राजद्वारे च परितः समाकीर्णा " हा निवारितार्त्तजनार्त्ते ! महनीय कीर्त्ते ! दलित हृदयपीड़ ! जयापीड़ ! स्वर्गमितो ऽसि राज्ञा । आपन्नजनैक रण्य ! सकल साधुजनाग्रगण्य ! सकलवयस्य ! महामात्य ! निस्स हायीकृताःस्मः,अनाथी कृताःस्मस्त्वया विना । अयि,नयैकधुरंधर दयासागर ! अमात्य वर ! श्रेयोमूर्ते ! पावन ! मृतोऽसि स्फुटन्ति हृदयानि तमोलिप्तानीव, नयनानि शोक कृशानु चिताचटत्कृतमिव मांसपिण्डम् । हा! त्वयि मृतेऽपि जीवामः,हन्त ! प्राणिमः, अहो श्वसिमः। अनाथान्न इह विहाय क गतोसि को, स्मान्निदानीं निष्ठुराद् नृपात्याचारात् त्राता । हा, मानवविविग्रहन्याय ! न्यायविहीने हीनेऽत्र देशे दीना मीना इवाम्बूनि विना संतप्यामहे"। इत्येवमार्त्त नादांश्चकुर्वी सर्वापि प्रजा विकलैव तस्थौ ।

इयमार्त्तविलापपरम्परा महता रवेण नरपतिं निन्दन्ती, अमात्यं च स्तुवन्ती, नरपतेः श्रवणं विवेश । नरपतिश्च तप्यमानः शोक वन्हिना न विषेहे निजां निन्दाम् । स्वाधिकारप्रमत्तः सकल जनता जीवनमरणाधिकृद्, अरुणराशि राज्ञापयामास "अयि आरब्यनिवासिन्यः प्रजाः, अयं सकल वसुमतीपतिररुणराशि राज्ञा पयति—नकोऽपि नरपशरात्मनो जीवनाशामुपजीव्य जयापीड़स्यामात्यापसदस्य नाम मुखादुच्चारयेद् । जनोऽयं मृतस्तपस्वी। तस्य अभाग्यं नामधेय मपिनाशमर्हति।"

यावद् दिनान्यकैकशोऽतियन्ति । प्रत्यहं स्पशा आगत्य निवे-

दयन्ति "राजन् मणिधरो नाम साधारणो जनपदवास्तव्यः प्रत्यहं जयापीड़स्य नाम प्रातः स्मरणीय मिवोच्चैर्वीथिकायां जपति। मध्ये २ च तत्रकौतुकवशाल्लीलया वा समुपस्थितान् शिशून् तस्यैव नामधेयं चिन्तामणिमन्त्रवदुपदिशति। नाम ग्राहं च विलपति, तद्गुण वर्णे नैव तानात्मानञ्च कृतार्थयन्निव जीवन मप्यगणयन्निव, आस्ते।"-अरुण इदृशानि वाक्यानि, श्रावं श्रावं दूयं दूयं व्यथितमानसो अभून्न चापारय त्किञ्चिदपि विधातुम्। तथापि प्रसभमेकायत्तराज्यत्वाद् हठाकृष्टमनास्तानादिदेश " प्रसभ मानयत तं नर श्वानम्' इतश्चा देशसमकालमेव निष्क्रान्ताः कतिपये राजपुरुषाः।

इतश्च स सहसो त्थाय प्रांशु शनकैः शनकै रावर्जित द्वारापवरकः मर्मरोपलसोपानत अवरुह्य झर्झरशीकरवतो निर्झरस्योपकंण्ठ मुपेत्य भूयो भूयो जयापीड़ोपघात वैक्लव्यं च चिन्तयम् यावदचेतन इवो पलकुट्टिमादुपसर्पन् कौलिकै रुपजीविभिर्दासै र्मानाय समुत्पतद्भिरवनितललोलमौलिभिश्च सलील प्रणम्यमानो अचिरेण हेतिमण्डलनद्धै र्भटैरावृतं सभागृहद्वारमाययौ। अन्तः प्रविश्य अमात्य समूहेन संप्रणम्यमानः शोकभराश्रान्त इव सिंहासनमधितस्थौ। सर्वास्वपि प्रकृतिषु किमयं विधास्यतीति चिन्तासन्तानवितानैकतानचेतःसु अरुणः सहसाऽवोचत्—'प्रतिहारि, मणिधरं प्रवेशय'। पश्यतो सर्वेषां, पुरतः भुजिष्यै रभितो वशीक्रियमाणो द्विः स्त्रिश्चकरचरणयो दृढग्रन्थिदन्तुराभिरावध्यमानः मध्ये राजसभमुपससर्प मणिधरः।

मणिधरस्तपस्वी शनकैरुवाच—'वयस्याः, दृढं वध्नीत, बलाद् वध्नीत मां तनु व्यथां गणयत ( नरेश्वरं गभीरयादृशाऽवलोक्य ) स्वागतमास्तां रज्जूनानाम् मदवयय वध्नलीनाम्, यते जयापीडेनाहं गृहीतो वन्धान्मो चितः स्वातन्त्र्यं गमितो ऽतो ऽपि दृढ़तरं ( तदुप काररज्जुभिः ) बद्धोऽभूवम्। एत एव दृढवन्धाः मां पुनरपि तस्य तानेव कारुण्यमयानुपकारान्स्मारयन्ति। एत एव मद्हृदि तस्मै जनयन्ति, नव्यं प्रेम, रमणीय मान्यभाव, मतिशयिताञ्च कृतज्ञताम्।

अत एव एते स्वागम्यन्ते । हे जयापीड़ ! भवतु तवाभिधा महीयसी यावद्धिमाहिमदीधिती । इति ।

तद्वचनाकर्णनसमकालमेव राज्ञो ऽन्तरात्मा दहनवत्प्रजज्वाल तस्यासु विमोचनं नरपतेरेव महीयसो बलस्यातिक्षोदीयः कर्म । तस्यैव च वयस्यत्वेनोपादानं चिराद्ध्रुदयादपेतस्य सतो ज्योतिषो मुहुः संचारःस्याद् । अरुणशर्मणः सहसैव विपरीतमभूत् । सच-मणिधरमाभुग्नयाऽऽ लोचनिकया विलोक्य उवाच,भद्र त्वमस्य हृदि-कृतज्ञतां वहसि । कृतज्ञता सकलाघविध्वंसिनी इति क्षमे तवाऽपराधम्। सहैव च क्षमया उपायनमिदममूल्यं रत्नं स्वहृदयेन स्पृश स्वतन्त्रो-ऽसि । इदञ्च रत्नोत्पलमद्वितीयतातारराणां नृपतिसंततीनां मौलिमुकुटा लंकारभूतम् । तत्स्वीकुरु,कृपस्व, कुरु नः प्रसादम्, नश्च हृदये स्थिता न्संभावयेति । राजा विरराम ।

मणिधरोऽपि हृदये न स्नेहाविलेन करौ प्रसार्य अतिरत्नमभया राजमाने लोचने विस्फार्य अमूल्यरत्नोपायनमुच्चैःकरेण कृत्वा, अन्त-रिक्षे लक्ष्यं बध्वा, स्नेहसुधासारवर्षिऽणा वचसाऽवोचत् । धन्यज-यापीड ! धन्य, ऋणाक्रान्तोऽस्मि उपकारैः ।इदमपि रत्नं तुभ्यमेवार्प्यते तवैव नामधेयं भवेज्जगति मान्यास्पदम्,इति ।

कुशाग्रः

---

## शरद्वर्णनम् ।

शारदाम्बुजमुखी वरेश्वरी शारदा मम तनोतु मंगलम् ।
शारदाच्छरुचि वर्णनाय यः शारदाश्रयमुपैतु बालकः ॥१॥

बालारुणस्य मृदुलाः सितपीतभासः, खण्डानि वा जलधरस्य सित प्रभस्य ।
मन्दानिलस्य मलयाचलसंश्रवस्य चार्य्यश्छया न शरदागमनं ब्रुवन्ति ? ॥२॥

शोधस्वती कल कलैः कमनीय कान्ति गतुं शरद् गुण गणं रसिकेव भाति ।
नैर्मल्यमञ्चति जलं ननु कुम्भयोने र्न-क्षत्र कान्ति रितिनिश्चतया ब्रवीति ॥ ३ ॥

भागीरथीतट बिराजि विशुभ्रकाशाः केशा इव स्थविरतां सरितो वदन्ति ॥
घास प्रवाल निचयो ऽपि जलै र्वियुक्तो धाराधरर्तुगमनं शरदा गमञ्च ॥ ४ ॥

नवैर्नवै, रभ्रपट प्रवालैः, श्वेतायमानैः, शरपुष्प बालैः ।
नभोवितानं सरितः प्रतानं शरद्भयाच्च स्थविरत्व माप्तम् ॥ ५ ॥

शरदि कृश शरीरा संकुचन्ती नदीयम्
परिहित परिधाना वाष्प कार्पाससंघैः ।

प्रतिहतगुरुवेगा मन्द मन्दं व्रजन्ती
किमिति शयितुमुत्का कूलपर्यङ्कतल्पे ॥ ६ ॥

अधना निजदारि द्र्यात्, शरत्-चितां प्रचक्रमुः ।
तपस्विनस्तु निः सत्वाः, प्रायो जाड्या ज्जडीकृताः ॥ ७ ॥

प्रासाद कुहरादेते वालकम्बलवेष्टिताः ।
वालारुण निषेवार्थं, धनिनो भल्लुका इव ॥ ८ ॥

नीरदस्य समयोऽत्यगादयं, निर्झरिण्यपि न भूरितोयिका ।
भूपते र्विजय काल आगतो, जैत्रसम्पदिव शारदी मता ॥९॥

नव्यैः काशप्रवालै र्ननु नृपवनिता वीज्यमाना शरत् किम्,
जैत्रस्थानां वलाना मुपचितरजसाप्ता परिव्राजिका किम् ।
नीलव्योमाम्बरा वा सितघनमिषतः किं नु कापालिकेयम्,
नैवं नैवं नु कूजन्मदकल मुखरा वाङ्मयी शारदाऽस्ति ॥१०॥

गाङ्गं रोधो विलोक्या खिलसितसलिलं द्रष्टुमायातुकामा
हंसालीव्याजरूपा निपतति सततं श्वेतशोभासमेता ॥
जाड्यं वा मानसे ऽति प्रखरमिव नु सा भूयसोऽवेत्य किञ्चित्
स्वव्यापारं विधातुं शरदिह निपुणं ज्ञायतां भो वयस्याः॥११॥

नेयं शारदशोभा, विमला, सद्ब्रह्मचित्कान्तिः ।
मदकलसरिदुत्पलकं, सकलं सोपाधिकं हरयम् ॥ १२॥

राजहंसः ।

# जातीयोत्सवाः

जातीनां दशा नैकान्तेन वर्तन्ते, परं कालं कालं नियतं परिवर्तन्त एव। इत्येवं नैव काचिदपिजातिः सर्वदा समुन्नता नापि सदावनतैव। भारतीया हि जातिः, को नाम न जानीते, आसी त्किञ्चित्काले ऽत्यन्तं समुच्छ्रिता, सम्प्रतिं च नितान्तमवनता। तत्के त उपाया यैरस्माकं जाते रुन्नतिपथे पदं निधातुंप्रभवति इति तावदत्र नो विचारास्पदं विषयः।

इदं हि प्रायश उच्यते यदभिनयो ऽतिप्रभावं जनयति कुतः प्रत्यक्षं समक्षे तन्निहितत्वात्। सैष समीचीन एव हेतुः। अमुनैव विधिना उत्सवेषु 'यद्विषय कास्त इमे भवन्ति तद्वस्तु सम्प्रति भारतेप्रायशो ऽभिनयरूपेण स्मार्यतेप्रदर्श्यतेवा । तत्र तावदेते कियत्यंशे अधिगतमनोरथाः प्रभवन्ति, तत्कियति च नैव, तदपि, किञ्चातः करणी यमेतत्तदेवं सन्दृश्यताम्।

जातीयपदेनाभिप्रेतास्त उत्सवा ये किल देशस्यैकतोऽपरतः सर्वत्र मान्यन्ते। ते नाम मुख्यतयैते—यद्विजयदशमी, दीपमालिका रामनवमी, कृष्णाष्टमी चेति। तत्र यदि दृश्येत परामृश्येत च तद्यो ऽसा वद्यश्वो विजयदशम्या दीपमालिकायाश्च मानस्य विधिः सो ऽयंन कथञ्चिद प्यौचित्यमर्हति। प्रथमं ताव द्विजय दशम्यां योऽयं विस्तृतो ऽभिनयो रामलीला परनामा ऽऽचर्यते नासौ कथञ्चिदपि साधुः। साधुत्वं हि फलावहत्वादेवमन्यते। सामान्यदृशा भिज्ञः कश्चिद्रामलीलां प्रत्यक्षी कुर्वीततदमुना तथा च वक्तुं शक्यते, न ज्ञायते किमुपा त्तद्योत्सव

एष प्रवर्तते नैवहर्षो नापि वीरता न चैवावेशापूर्णमानसानां प्रजानां हृदयोद्गार एव समुल्लसति। तत्स्वयमेव विचार्यतां बुधाः! कथं विधोऽयंविधिः। यदि हि श्रीरामो ऽस्माकं जातीयो वीरआसीज्जात्यै च कल्पो ऽयं विजयं समुपालभतकथं नाम न तदा जाते हर्षप्रकर्षः प्रसरेत, कथञ्च न तन्निजजातिज वीरस्य वीरत्वं प्रति वर्ष स्मर्येत। अस्मिन्विधौ मुख्यतया दोषद्वयं समास्ते। तत्र तुलसीरामायणा दिग्रन्थद्वाराऽस्माकं जनेषु भावो ऽयं महत्तया मनः सु पदं करोति, यद्रामादयो लघुकाया बाला इवासन्, तद्विधैव च सीतादेवी अपिबाला इति। एतादृशैर्विचारै र्भवन्तः स्वयमेव जानन्ति, कियान् प्रभावो मनःसु संजायत इति। एतस्योपायः केवलमेक एव, यच्छिक्षायाः प्रचारः क्रियते, परं यावन्नैतच्छक्यते, येऽस्माकं देशे शिक्षिता विद्वांसस्तेषां कर्त व्यमिदं यदेतदुत्सवं तादृशे रूपे ते परिणमयेयु र्यादृशेन जनानां चेतः सु महान् प्रभावः सञ्जनितः स्यात्। अपरञ्च नटकादि प्रत्यहं दर्शंदर्शं तादृशैरभिनयैर्यादृशेन प्रभावेण जनितेन भवितव्यं तादृशेन नह्यधुना जायते। एत दपा कर्तुं नहि शक्यते। कुतो, नैसर्गिकत्वात्। नैसर्गिकं ह्येतद्यन्नाम यत् प्रत्यहं चर्यते विस्मर्यतइव शब्दान्तरेषु। प्रत्यहमा चर्यमाणस्य विधेः प्रभावः शनैः शनैरपसरति तदर्थं रामलीला स्थाने तादृशानि वीरतोपेतानि कर्तव्यानि प्रचारणीयानि, यादृशेभ्यो जनानां चेतःसु वीरतोल्लास उल्लसेत्। प्रतिवर्षं रामायणस्यादितो ऽन्तंयावदभिनयेन न किञ्चिदपि प्रयोजनम्। अपर उत्सवो दीपमालिका। तत्रापि दोषेणास्यते, द्यूतन्न जाने कं हर्षं ज-

नयति, न कस्यचेदं चिह्नम्, केवलं दोष एव । यद्यपि सर्वे ऽन्ये ऽव्यवहारा साधीयान्सः, परमेक एव दोषः सर्वमप भ्रंशयति, इति तावद्विचिन्त्य संख्यावद्भि र्विचारपरायणैश्च नेतृभिरपहरणीय एवैष दोषः ।

रामनवमी कृष्णाष्टमी चैतौ द्वावुत्सवौ चापि न तावत्तोत्साहेन माननीयौ मान्येते। अत्रावसरे तादृशो हर्षः समुल्लासनीयो, यादृशः प्रजाजन्मनि । एतौ हि द्वावपि महापुरुषौ जाते, रात्मजा विवाभूताम् । यदि नैतदवसरे तावानुत्साहो हर्षो वा प्रभवति तन्मन्तव्यं नजातौ जीवनमस्ति ।

उत्सव एवैको ऽवसरो ऽवनतजात्यै येन तस्यां जातौ जीवनं समुद्भवति । यदि तस्मिन्नवावसरे नोत्साह स्तन्नकथञ्चिदप्याशास्तुं युज्यते यत्सा जातिः कदाचिदपि पुनरुन्नतिमेष्यति । चित्रं यत्प्रतिमतं प्रतिसम्प्रदायं वा ये ऽवान्तरा उत्सवा भवन्ति । तेषु तन्मतीयाः द्विगुणतरमुत्साहं प्रदर्शयन्ति । परमेतावती एषा महती जातिर्या चिरादधुनापि जीवति स्वीयान् जातीयानुत्सवान्मानयन्ती अपि न मानयति । तदत्र सुविचार्यावश्यं विद्वद्भिः संशोधनाय यतितव्यं यदि इष्यते जात्युन्नतिरित्यलम् ।

"किशोरः"

# स्वामी दयानन्दः समाजश्च

अयि भावमिश्राः ।।

अद्य किल भूयोऽपि वयं श्रीमन्तं स्वामिनमुपजीव्य विचारयितुं संप्रवृत्ता इति नियतं सुप्रभातमेव नश्चक्षुषे । अयस्कान्तमणय इव लोहानि नीरस निष्ठुराणि क्षुल्लकानामप्याकर्षन्ति मनांसि महतां गुणाः । तदेव द्वितीय महाभारते इव कुतूहलं नो नाश्चर्याय कल्पते। आसीत् कश्चन सौम्यः पुण्यमयश्च समयः यत्र किलेदं भारतं-सर्वैरपीतरैर्देशैः सह सम्बन्धं कुर्वत् सुखेन कालमावहति स्म। पाताल देशोऽपि नास्य सम्बन्धादतिरिच्यते स्म ।

जयत्ययं महाभागः कोलम्बसः, यश्च निज जीवितम् पाताल-मेवाविष्कर्त्तुं जगत्यै समत्यवाहयत् । अतएव कोलम्बसपद-मुच्चारितं सत् निज कार्यमपि बोधयति । कश्च जनस्तस्य गौरवं नाभिनन्दतीति । किमयमेव सम्बन्धोऽस्ति दयानन्दसमाजयोरपि ? यत् सत्यं स्मारयत्येव समाजः श्रीमन्तं दयानन्दम् । यदा वयं समाज-पदमुच्चारयामस्तदा झगिति दयानन्दशब्दः बलादिव चेतसि प्रवि शतीति । पुरा भारते परितोऽपि समाजप्रतिरूपका अनेकाः समितयः शुशुभिरे । परं पतिते भारते सर्वा अपि ताः तेनैव सहतिरोहिताः इति कस्य भारतीयस्य पुंसः शिरः शूलं नोत्कोपयतीति ? दिष्ट्या भूयोऽपि भारतस्य सौभाग्यावशेषात् पुण्यमयी सुखसुधावर्षिणी दृष्टिः पतिता तस्य यतिवरस्य सुगृहीतनामधेयस्य श्रीमतोदयानन्दस्य, स च महता प्रयत्नेन, पुष्कलेन पौरुषेण चागणिततनूपातमनारतमध्य-वस्यन् पुनरपि समाजान् प्रतिदेशं, प्रति नगरञ्च स्थापयितु मियेष। तस्य मनोरथद्रुमश्च पल्लवितः पुष्पितश्चाद्याखाभिः साम्प्रेडं सगर्वञ्च दृश्यते । कस्य खलु जनस्य स्वापेऽप्ययं विचारश्चित्तमारूढोःदयानन्द-मन्तरेण ? नहि खलु जनस्य अमी समाजप्रदीपाः भारत मेव नितान्त-मुद्दीपयन्ति । प्रत्युत तस्य महतः कर्मस्रोतसा पातालदीन् बहिः देशानव्याजं प्रदीपयन्त्येव । अतः परं कतमः स्मारकः साधिष्ठः ?

अयं समाजस्मारकस्तन्नानुरुन्ध इत्यत्र न लेखिनी व्यापारान् कुर्मः । अद्यश्वो भारतेऽन्यदेशेषु च ग्रावतटाकवापी विग्रहेण कतमस्य संस्मरणीयस्य पुंसः स्मारकं निर्मान्तिति हन्त । मुधैवप्रयासस्तेषा मिति नो बुद्धिः । न किल स एव स्मारको यश्च कमपि पुरुषमवगमयेत्, प्रत्युत सखे! स एवानुमन्तव्यो यश्च तदुद्देश्यमपि नाम्ना सह दण्डापूपिका न्यायेन प्रति बोधयेत् ।

अद्यत्वे सर्वथापि विमुखतां गतोऽयं नो विश्वास :प्रतीयते । हन्तकियन्तं द्रविणविनियोगममी कुर्वन्तीति । कृतेऽपि भूरि परिश्रमेन तेन कतमदपि प्रयोजन प्रतिपत्तिरिति कस्य प्रेक्षावतः शिरः न विघूर्णते । यदि कश्चनजन समवायः नितरां भक्तिप्रवणमानसः, टिण्डल, इति नाम्ना प्रख्यातस्य वैज्ञानिकस्य स्मारकरूपेण कामपि जनशालाम् स्थापयेत्तर्हि नूनं न तस्य प्रयोजनसिद्धिः कल्पत इति नो विश्वासः । यतो हि नायं पुरुषः धर्मे दृढभक्तिरासी दिति । एवञ्च तेषामयं प्रयासः गगनकुसुमसच्छाय मेवानुहरतीति । परंयदि कश्चन जनसङ्घः विकाससिद्धान्त स्य दीक्षितगुरोः श्रीमतो डार्विन महाशयस्य नाम्ना कमपि विद्या मन्दिरमेतादृशं स्थापयेत् यश्चजगति विकासराद्धान्तान् प्रचारयेत् नूनं स परमार्थतः स्मारकस्तस्य भविष्यति । यतो हि विद्या मिन्दरोऽयं तस्योद्देशं प्रपूरयतीति । अतएव स्यचित् महाभागस्य मुख्यमुद्देश्यं पूर्तिं कुर्वाणः स्मारक एव यत् सत्यं स्मारकतामन्वेतीति । तेन स्मारकेण सह तस्य सूत्र धारस्य नाम संयोगश्चन संध्याग्निहोत्रादिवदावश्यकं कर्म परमुद्देश्यपूर्तिरेवैका तेनेष्टेति नि मायमेवब्रूमः । यथा महर्षेः दयानन्दस्य स्मारकविग्रहेण स्थितः समाज शब्दः न स्वामिना सह संयुङ्क्त इति तथापि शब्दोऽयम् उच्चारितः सन् स्वामिनो जीवितस्य महत् कार्यं स्मारयतीति नूनं विजयतेतरामयं समाजशब्दः । नायमर्थः भारत एव प्रतिपद्यमानो दृश्यते परं पातालदेशवासिनामन्तरंगेष्वपि पूर्व एवायमाशयः समायतीति । न कस्यापि पुरावृत्तविदस्तिरो हितोयं पाताल लब्धवर्णेषु अन्यतमः डेविसमाहशयः । स चनिजलेखेषु प्रतिपदंसमाज दयानन्द शब्दयोः शब्दार्थयोर्नित्यसम्बन्धमुदीरयतीति । अ

खलु विद्वद् चक्रवर्त्ती मेक्समूलरोऽपि श्रीमता दयानन्देन सह समाज शब्दमपि प्रतिपदं लिखन् सत्यमेवास्त्येव प्रशंसाभाजनम् । यतो हि पुण्य शब्दानामपि प्रतिपदं स्मरणमेव गौरवायैव भवतीति विदुरस्माकं प्राश्चोवैयाकरणाः इह प्रपञ्चे खलु जना बहुधा घनानेव पदार्थान् स्मारक त्वेन नियुञ्जत इति । तद् यथा–महंमदीयाः मदीन जानपदम्, क्रिष्टाश्च शूलकं । बौद्धाश्च बुद्धमूर्त्ति मेव पूर्वजानां स्मरणे समारोपयन्तीति । परमेते स्मारकाः तत्तद्धर्मप्रवर्त्तकानामुद्देश्यं न स्मारयन्तः स्मारक चिन्हस्य न कदापि पात्री भवितु मीशा भवन्ति । न हि महतां पुरुषाणां मूर्तिविक्रेतारः जगत स्तादृश मुपकारं कुर्वते यादृशं तदुद्देश्यपूर्तिकामाः विद्यालयादि संस्थापका महाशयाः अत एव मुनिना पाणिनिना रामादीनां मूर्त्ति विक्रयो बलवद् निषिद्धइति न तिरो हितं वैयाकरण मतल्लिकानाम् । श्रीमतां स्वामिना मविग्रहः समाज एव स्मारकः संवृत्त इति कस्य खलु सनातनधर्मावलम्बिनः चित्तं न समा वर्जयतीति । स्वामि दयानन्दः स्वयमेवा स्माकम मुमाशय मभिनन्दन् परिदृश्यते । एकदा स्वामिना फर्रुखाबाद, इति नामधेयकस्य स्थानस्य महर्षिगून्थस्य पाठका अपि केचन विद्यालया एतदर्थं पातिता, यतो हि तेन न शिक्षायाः उद्देश्यं पूरयन्ति स्म इति विदित मेव सर्वेषामपि विदुषाम् । अत एव काचनापि स्थापना याचोद्देश्यं न प्रपूरयति न सा लाभ जननीति स्वामिनामपि मनीषितं प्रतीयत एव । अत एव वैज्ञानिकशिरोमणिः वैदिकधर्मैक बद्धशूद्धः श्रीमान् गुरुदत्तो निज व्याख्यानेषु, कश्च महर्षीणां पारमार्थिकः स्मारको भवितुं शत क्यतेइति विषये बहुधा कथयदित्थमेव—यत्त एव नूनं स्मारका ये खलु तत्तादृषि महर्षीणा मुद्देश्यानि कामं समर्थयन्तीति । अत एव समाज एव महर्षीणां स्मारकः परमार्थतः, इति पक्षमनुरुन्धानाः सजोषं स्थास्यामः । निवेदयामश्चान्यदा समाज विषय इति दिक् ।

# निराशो दयानन्दः

अतिपापगतिर्विलोक्यत
इह लोके वत सर्वतो वृता ।
अह मस्मि च निर्बलो जनः
करणीयं किमु हा ! महेश्वर ॥ १ ॥

नहि शक्तिमतापि पार्य्यते
कठिना पापनिराकृति र्भृशम् ।
किमु यास्यति मादृशो जनो
निजशक्त्या वत पार मम्बुधेः ॥२॥

अयि, पूज्यगुरो, पितर्मम,
विरजानन्द ! करोमि किं पुनः ।
महती मयि प्रीतिरेधते
जगतां पापविलोकनेन हा ॥ ३ ॥

गुरुणाऽपि च दक्षिणा श्रुता,
यदहं पूरयितुं कृतप्रणः ।
अधुना यदि मे पलायनं,
ननु निन्दा भवितेतिनिश्चितम् ॥ ४ ॥

जगदीश ! तवाङ्क माश्रितः,
सुखमाप्स्ये न तु पापनीरधौ ।

मरणं शरणं शुभं ततो,
वह मृत्यो ! किमहो विलम्ब्यसे ॥ ५ ॥

अथवा स्वयमेव पर्वते
तनु मेतां विजहामि दुःखितः ।
वृककेसरिकण्टकै र्भवेत्
सुविदीर्णा मम देहवल्लरी ॥ ६ ॥

इति शोकसमाकुलेक्षणः
स दयानन्दमुनि र्गिरिं गतः ।
वन कण्टकदीर्णदेहिना,
सुजनाः पश्यत तेन किं कृतम् ॥ ७ ॥

अथ तीव्रजवेन गामिना
रुधिरासेकविषण्णचेतसा ।
मधुरध्वनि राशु संश्रुतः
"विरमैवं क्व नु भोः पलायसे" ॥ ८ ॥

"मरणादपि निष्कृति र्न ते
भविता तत् किमदं विचेष्ट्यते ।"
"अथ चात्मवधस्य पातकं
परलोकं प्रति संग्रहीष्यसि ॥ ९ ॥

स गुरुस्तव चिन्तित स्त्वयि,
क्व दयानन्द तवैव भीरुता।
अथातो यदि मुक्तिरिष्यते
न दयानन्द तथा भविष्यति ॥ १० ॥

व्रज, पालय यः कृतः प्रणः,
शुभकृत्ये स सदा सहायकः।
वपुषो मनसो पि चात्मन
स्तव सामर्थ्यमपि प्रवर्धताम् ॥ ११ ॥

जगतश्च गुरुः पुनर्भवेत्
शुभविद्यापुरुषोत्तमप्रभुः।
भुवनस्य हिताय शान्तये
भवताद् भारतदेश एष ते ॥ १२ ॥

इति विस्मित एव चिन्तयन्
स निवृत्तो भुवनोद्धृतौ तदा।
अथ कृत्य मवेक्ष्यतां स्वयं
यदनेनात्र निदर्शितं भुवि ॥ १३ ॥

आनन्दः

---

# यज्ञेषु पशुहिंसातत्त्वम् ।

वाचक वृन्द ।

परिचित चरो ऽयं जनः पुनरपिभवन्नयनचञ्चरीकायितुं नानावर्ण पदविन्यास चतुरिम्णा ऽभिवाञ्छति तदिमां कृपालवो धर्मचर्चालिप्सवो दत्तावधाना श्रोतुमर्हन्ति ।

अहो महान् प्रपञ्चो ब्राह्मणानां महांश्चैवविस्तारो वैदिकसाहित्यस्य । प्राचीनार्वाचीनानामपि महदेवाऽऽन्दोलनं नानापथगतं नानालोकविभासितं नानाकटाक्षावलीढञ्च, तत्राऽपि निर्णयस्तु शतशः सहस्रशश्च कुटिलतर्कपराधीनतावत्त्वादसाध्यपदवीं विना यातुं न क्षमः। परं यद्वा तद्वा भवतु वयं तु सत्यप्रतिपत्तिमतां मतमेवात्मसात्कर्तुं वितीर्णहृदयाः स्मः । कस्तत्र नो व्यामोहो यत्र सत्य ज्ञानशालीनानां शेमुशी एव नः सरणि मार्गणी स्यात् ।

उभयथा ऽपि वेदानाश्रित्य प्रतिपत्तिः सनातनाना मर्यादाणाञ्च । तत्र सनातनाभिख्या ऽभिमानिनः हठ वशा दज्ञविप्रलब्धत्वाद्वा निजाभिमतधर्मग्रन्थेषु नितरां हिंसा प्रचारमभिमन्यन्ते नाना ऋषिमुनि विदग्धानां लिखित भाषितानि इतिहास पुराण नाना ग्रन्थेभ्यः भूयो भूयः समुद्धृत्य प्रमाणयन्ति ।

इतरे तत्र च आर्यसमाज पक्षाश्रयिणः मांसादि नामतो हृदये दूयमानाः यज्ञेषु हिंसां पशुमारणादिव्यपदेशवतीं धर्म ग्रन्थेषु च विशेषतः प्रतिपादितां नसहन्ते भूयोभूयश्च

प्रक्षेपविक्षेपार्थविपर्यासादिनानोपायै स्तं विपर्ययितुमन्यथा वा व्याख्यातु मन्यथा वा पराकर्तुं निराकर्तुं वा नितरां प्रयतन्ते। तत्र किं तत्वमिति वयं नावधारयामः।

तथापि निर्णयस्य शेमुषीमतां विचाराधीनत्वान्महातुमिमं प्रश्नं वयं क्षमाः स्म ; इति वयं निर्णेतुं प्रभवामः—

यज्ञेषु भूयसीं हिंसामातन्वना अपि भूयोमांसप्रियाः सनातनिन स्तु शास्त्रादि वचनान्येवमुद्गिरन्ति । वायव्यं-पशुमा लभेत भूतिकामः, अजमालभेतेत्यादि तानेवानुमोदमाना श्रोत्रियाणां कर्माणि निर्दिशन्तः कवयः—" पशुमारणकर्मदारुणोऽप्योनुकम्पामृदुलो हि श्रोत्रियः"। "अतिथये वत्सरी मडमडायिता"

अश्वंनैवगज नैवव्याघ्रं नैव च नैव च।
अजापुत्रं बलिं दद्यादिति,,

प्रकारकै र्वचोभिः नानारूपंसमर्थ यन्ते। तत्रैव शास्त्रविदो निरुक्तादयः वैदीकीहिंसा हिंसानभवती त्यादि समथै र्वचोभिर्गदन्त इवालक्ष्यन्ते। सहैवचमा हिंस्या त्सर्वा भूतानी ति विरुद्धेन वचोगर्वेण परामृशन्ति। तत्र किं तत्वम्।

किमेवं सनातनाख्याभाजो यथार्थ शास्त्रतत्वविद उत इतर, इदमेव नोऽत्र प्रतिपादयम् । नान्यत्। स्पष्टाक्षरैः ब्रूमः, ये देते सनातनिनोनाम्ना सनातनिनो ऽपि नूनं जिह्वा रसास्वादनसमुत्पन्नगर्द्धाः, यज्ञे किंसर्वत्रैव अजाव्यश्वादिनाना पशुमांसानि अधिकारि भेदवशच्छन्नतः जात्वा मन्त निगूढाः

वस्तुतः सन्ति इतिनः प्रतिपत्तिः । अत्र अज्ञानावृतचेतसो विषयाभिलाषाः ब्राह्मणा वा नार्थवेदिनः कारणम्, अन्ये वा चाटवः केचित्, परं यदस्ति तत्स्याद् यथार्थतस्तु तदभिप्रेतं तत्वं नास्ति ।

ब्राह्मणेषु भूयो भूयश्छागलस्य छागल्या वा वधः क्रियते तन्मांस मेव पुरोडाशत्वेनोपकल्प्यते किंतत्सत्यं ? नतत्सत्यम् । अत्रैव च पुरोडाश शब्दस्य व्रीहिमयत्व प्रतिपादनात् । अन्यच्च । तत्वविदस्तु छागलस्य अजस्य वा शब्दोपादानेनैव न व्यावहारिक शाब्दसंघटनभ्रमे मूढा इव भ्राम्यन्ति, प्रत्युत सत्यार्थप्रकाशेन झटित्युप कुर्वन्ति ।

मध्यकालीनेषु हिंसारतेषु श्रोत्रियेषु बौद्धजैननास्तिकानामयमेव ता वदाक्षेपः ।

वृक्षांश्छित्वा पशून्हत्वा कृत्वा रुधिरकर्दमम्
यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥

इत्यादि तत्र किमपिसमाधानं घृणास्पदां व्रीडामन्तरा नास्ति । तत्रनः प्रति वचनं यत् ।

हिंसा वेदेषु शब्दानुरोधा द्वर्णानुरो धाद्वा भवतु मा वा भवतु, परं, छागलादि व्यपदेशैरजो न हन्यते स्म पुराकाले । परं तेनधान्य निष्पत्तिरेव मुख्यं प्रयोजनम भूत् ।

यथा पञ्चतन्त्रम्—

"तत्रकिलैतदुक्तं मजैर्यष्टव्यम् । अजा व्रीहय स्ताव त्सप्तवार्षिकाः कथ्यन्ते न पुनः पशुविशेषाऽ इति"

ज्ञातं मीमांसामांसलमतिभिःविदुषां प्रौढं वचः। एवंहि निखिलं तत्वं प्रादुर्भवति। अत्रतु केवलं छागलस्यैव समाहितिरपरत्रापि-वयं पाठकानां रूच्यनुकूलमुत्कण्ठा नुकूलम मन्यासामाशंकानां समाधानं शास्त्रस्य यथार्थ प्रमाणतो विधास्यामः।

आर्य पुत्रः।

## गवांस्तुतिः

यूयं गावो मेदयथा ( आप्याययथ पयोदध्यादिना ) कृशं चिद् ( अपि ) अश्रीरं ( श्रीरहितं ) चित् कृणुथा सुप्रतीकम् ( शोभनम् )।

भद्रं गृहं कृणुथ भद्रवंचो बृहद् वो ( युष्माकम् ) उच्यते ( प्रशस्यते ) सभासु।

( अथर्व० । का० ४, अ० ५, मं० ६ । )

# आनन्द षट्पदी

गहन गिरि गुहासु ध्वान्तपूर्णाटवीषु ,

हिमपिहितमुखासु श्रान्तसुप्तं नदीषु ।

विधुमिव घनमालावारितं क्लान्तकान्तं,

कमपि विदितसारं नौमि बालं विशालम् ॥१॥

---

हिमपरिगलदङ्गं कण्टकक्षुण्णदेहं,

सततरुधिरधारालिप्त मप्युल्लसन्तम् ।

तुहिन गिरनितम्बे तेजसा भासमानम् ,

तरुणरविसमानम् नौमि कश्चिद्द युवानम् ॥२॥

---

खलबलदलनायासद्यभासा ज्वलन्तम् ,

सदय मथ द्रवन्ता नार्त्तलोके झरन्तम् ।

दुरित कलुषितानाम्पावनन्तीर्थ राजम् ,

नमत कमपि शान्तिज्योतिषोः सङ्गमन्तम् ॥३॥

---

रुधिरपरिगतानां कातरालोकिनीनाम् ।

विदययवनशस्त्रं वीक्ष्य कम्पाहतानाम् ।

गतशरणगणानां सान्त्वनं स्नेहसान्द्रम् ।
नमत कमपि गोपं दुर्जनासह्यकोपम् ॥४॥

---

नयनजलकपोलक्षालिनीना मजस्रम् ।
विशरणविधवानां नेत्रनीरप्रपूरे ।
सदय मयि वहन्तीं सान्त्वयन् मातृभूमिम्
चरमकरवलम्बी ध्यायतां कोऽपि वीरः ॥५॥

---

नयनपथमुपेत जीवनै रन्तकाले,
विगतसकलशक्तीन् मानवान् जीवयन्तम् ।
प्रशममुपनयन्तं दुःसहेनापि धाम्ना,
प्रणमत शिरसा तं ज्योतिषां कञ्चिदन्तम् ॥६॥

मरालः

---

# वेदानाम्भाष्यकारः ।

( इतः प्रविशति महोक्षमूलरो भट्टः )

(वनस्थली मग्रतो वीक्षमाणः ॥ )

वेदशास्त्रपरिपूटचेटसः किं वसन्टि गहने वनेऽट्र भोः
(अग्रतो गत्वा) शोभ शोभ वरपाडपाट्टं मत्समेव ननु
भीटिदं वनम् ॥ १ ॥

अस्तु, निग्यः पिटोऽस्मि गो तीर्ठ ( औक्सफोर्ड ) विश्व विद्यालयाढिकारिभिः शामरय विद्वद्भिश्च यदहो भट्ट ! विग्यापटां वेडानां यठार्ठटट्वम् किमिटस्टटो भ्रमरोन ननु योगी डयानन्ड ( श्रीदयानन्द ) नामको हिन्डुः कौपीनः श्रुटः वेड भाश्यमप्यलिखत् टट् समीपं गट्वा ग्याटुं मयटे । अरे सट्ठ मूटः कि करोमि मन्डभाग्यः ।

अस्टु, ( अग्रे विलोक्य )

क एटे बटवः कुट श्च ? ( विर्वर्ण्य )
कापायबासोलसिटाङ्गगाट्राः
संगात्रिका वन्ढनभूपिटाङ्गाः
मौञ्जीढराः पूटस्कराट्रिसूट्राः
श्चः डरिडनः ( विमृश्य ) वर्णि वराः सुविद्याः ॥ २ ॥

वर्णिनः—परस्परम्

( देवदत्तः प्रविश्य )

आः देश मित्र, ननु पश्य विदेश वासी,
सम्भ्रान्त बुद्धि रिह काननके कुतोऽद्य ।
किंद्वे षभावनिरतो ननु कश्चिदेकः
किंवा नुनूतन समाज विरक्त चेताः ॥ ३ ॥

देश मित्रः—आम् पृच्छामि कोयम् । उपाध्याय कोऽयं
काचास्य भाषा ।

उपाध्यायः—वत्स शर्मण्य देशवासी महोत्तमूलरोयं गोतीर्थस्य महोपाध्यायचरः संस्कृतस्य ।

वर्णिनः—श्रीमन् परीक्षित व्योऽस्ति
( इति अग्रे उपसर्पन्ति )
तेष्वेकः कुशाग्र उपसृत्य

कुशाग्रः—महाशय नमस्ते ।

महोत्तः—( किञ्चिद्विचिन्त्य ) यठा इष्टं उ उ उपैट ।

कुशाग्रः—को भवान् का पूर्वः ।

महोत्तः—अहं ऊं ऊं ऊं गोटीठ विड्यालयसस् स्य उपाढ्याय अ अस्मि । तस्य अढि कारि भिः व व वेडानां टट्वं जग् जग् जग् ग्यातुं आग्यपृः टट् भवन्तं दयानन्द स्वामिनं इह एव आगट अस्मि

वर्णिनः—ओम् अयगतो भवान् प्रविश्यतामाश्रम भूमिः ।
तत्र यथेच्छं निपीयता माचार्य वचनामृतम् ।

महोत्तः—ओम् (इति प्रवि शति) (वर्णिनस्तमनु गच्छन्ति)

कुशाग्रः—( आचार्य मुपसृत्य नत्वा ) भगवन्नयं वैदेशिको
भगवच्चरणेन्दीवरायेन्दिन्दिरयितुमुत्कः ।
( इति वर्णिनो निष्क्रान्ताः )

आचार्यः—ओम्, विद्वज्जन विरहित मरुषु भवानेव सोपा-
धिर्महोत्तमूलरो नामैरण्डमण्डलीपतिः ।

महोत्तः—(भीत भीत उपसृत्य ) ओं ओम् भ भ भगवन्।
भभभगवन् आ आ आ श्रमे भ भ भवानेव प्रढानः
सर्व ट न्ट्र स्वटन्ट्रः

आचार्य,—(घूर्णयन्निव पश्यति) (साकूतम्) अस्तु आस्यताम्
( महोत्तः कम्पित गात्रोऽ धासन उपविशति )

आचार्यः—किम्भोअनभिज्ञा अपि वेदानाम्भाष्यकाराः

महोत्तः—नहि परं मामादृशस्तु यद्यपि संस्कृटं संस्कृ
टं वक्तुं न जानाटि प्प् परं पठि टुं जानामि

आचार्यः—अहो एता वतैव दृप्यद्गर्वः । ननु भवादृशै रेव
चाटुवा लाप पटु भिरनर्थी कृताः पवित्र मन्त्राः ।
अभव्यञ्चरितं भवादृशां विदग्धंमन्यानाम् ।

महोत्तः—भवादृश पारदृश्व संयोगात् समुपतन्नो टूक कण्ठः
ज्ञातु ममर्ठ वेडानां टट् पापाट यतु ।

आचार्यः—भवदेव ? भवदेव !

भवदेवः—(प्रविश्यपादयोःप्रणम्य)आज्ञापयन्तु गुरुचरणाः ।

आचार्यः—नय कारयैनमक्षराभ्यासम् । क्रमशश्च ततो ऽधिकम्

भवदेवः—यथाऽऽज्ञापयन्ति गुरुचरणाः;
( इति महोत्तं प्रति )

महाशय समागम्यताम्—
( गुरु रन्तर्दधे )

महोत्तः—भगवन् ( प्राञ्जलि रुत्थाय भवदेव मनुगतः )
( इति सर्वे निष्क्रान्ताः )

---

"यदा च युद्धविभागे युद्धविद्या कौशलं सेना च तथोपचीयेत यथा भूमण्डले न काप्यन्या तस्याः प्रतिद्वन्द्विनी भवेत् तदा तेषु पक्षपाताहम्मन्यतावृद्धयाऽन्यायो वर्धते । सत्सु चैतेषु दोषेषु पारस्परिक विरोधात् समूल मुच्छिन्ना भवन्ति । अथ-वेतरेष्ववर कुलेषु कश्चित्समर्थो मनस्व्युत्पद्यते यस्तान् निपातयितुं प्रभवतीति ।"

( स. प्र. समु. ११-२६० पृष्ठे )

# देवगिरां विलापः

अयि भारत सन्तते समन्ताद्द विनिवर्त्य क्षण मद्य चित्तवृत्तिम्।
मम दुर्दम दैव दुर्विपाक व्यथितायाः क्रियता म्मनः कथायाम् ॥१॥

कुशला न्यभि वाञ्छता नराणामहमादौ परमात्मना प्रदत्ता।
अवतीर्य भुवि प्रभु प्रसादादभवं वेदमुखेन सम्प्रवृत्ता ॥ २ ॥

सकलेऽ पि महीतले तदानीमभवन्मे किल केवलाधिपत्यम्।
निखिलोऽ पि तदा बुधेन्द्रवर्ग श्चरणद्वन्द्वमपूजयन्मदीयम् ॥ ३॥

अभवत्कविरादिरप्रमेयः कविता मार्ग मदर्शयद्द भवं यः।
सततोज्वल सूक्तयो यदीयाः मम मुक्तावलि युक्तिमाव हन्ति।
॥ ४ ॥

अवसानमिते युगे तृतीये कविरन्योऽ जनि भारतप्रणेता
अमरं निजनाम निर्मिमाणो भुवने मामपि योऽमरीचकार ॥ ५॥

प्रणयेन पुरातनै रधीता मुनीवृन्दै र्मयि वाङ्मयाः प्रणीताः।
अधुना त्वनवलोक्यतां भवद्भि दुरवस्थामहमित्थमस्मि नीता ॥६॥

———

# मातृदुर्दशा



१

न मातस्त्वया किं पुरा शिक्ष्यते स्म ?
सुतैस्ते चरित्रं न कः शिक्ष्यते स्म ?
तव ज्ञानमामातुमपि पार्य्यते स्म ?
न वीर्य्यं तदीयं क्व नो वार्य्यते स्म ?
हहा ! तद्विलुप्तं कथं शक्यमाप्तुं,
मुहुर्भारतीयाः यतध्वम् तदाप्तुम् ॥१॥

२

त्वमासीः पुरा येन हैमाभिधाना,
न वित्तं तदद्या पि, हा जीर्णधाना
चमत्कारिणी ते कला शेषनामा,
न कीर्त्तिस्त्वदीयाधुनालुप्तनामा ?
समीहा मुहुर्भारतीयास्तदाप्तुम् ,
विलुप्ता न चेदायतध्वं यतध्वम्, ॥२॥

३

सुतैरेव ते शिक्षितं विश्वविश्वं ,
पिथागोरसोत्रैव नीतो विनीतिं,

---

( १ ) ईसा
( २ ) जरदुष्ट्रः

निलीनं न ते शिक्षणम्, ईशदत्तं, (ख्रिस्तकेशं)[1]
शरण्यं त्वमासीस्तथा जीर्णक्षुद्रं[2],
सुतास्ते पुरासन् विनेयान्यदेशा,
न तेषां विनेयाः न तेषां विनेयाः ॥३॥

४

द्विजेन्द्राः न तेजस्विनो रामकल्पाः,
न राजर्षयः साम्प्रतं रामकल्पाः,
न बालव्रताः साम्प्रतं भीष्मकल्पाः,
न ते दान वीराः हरिश्चन्द्रकल्पाः,
गुणग्रामतारिक्तदेहं त्वदीयं,
न कं साम्प्रतं खेदहेतु नितान्तम् ॥४॥

५

मुहुर्मोहनिद्राविताने त्यजध्वम्,
परित्यज्य निद्रामिदानीं यतध्वम्,
महान्तो यथा येन याताः सरध्वम्,
न यानं न भोगं विचारे कुरुध्वम्,
न विश्रामचिन्ता भवेद्वस्तु तावत्,
पुनर्मातुरश्वासनं स्यान्न यावत् ॥५॥

श्रीहरिः

(३) वः युष्माकम् तु।

# पुरातनं महाभारतम् नवीनञ्च

सर्वोऽपि जनो जानाति यदधुना हरिवर्षे महज्जन्यम्प्रवर्त्तते शार्मण्य फ्रान्साङ्गलदेशानां मध्ये । यत्र वेल्जियन देशः, संसर्गी च पञ्चम इति न्यायेन बलात्करेण युद्धे प्रवृत्तो नाधुना महतीं समर धुरं वहति । शार्मण्यदेशो मध्ये महारथ इव सकलानामपि देशाना मन्यतमो भूत्वा सर्वैः सह समरक्रीड़ां समवेलं क्रीडति । अत्रापि विचित्रैव युद्धघटना सकलस्यापि जगतो मनांसि आचकर्ष। क्षणे ऽवस्थितिः परिवर्त्ततेऽन्यादृशी च जायमाना किमप्यवस्थान्तरं प्रकटयति । क्वचिन्मनः शंकते राजनीतिपथमनुसरतां विदुषामपि । क्वचित्पुनः साशं मनो भवति। प्रायः सर्वे सम्पादकाः सर्वेऽपि विचारकाः सग्राममिम मीक्षमाणाः युग पूर्वं भूतं महाभारतसमरं स्मृतिपथेऽवतारयन्ति । कदाचि न्मह द्वैशसं पुरोधाय समतां ब्रुवन्ति । परं विचारवता मस्त्येवेदमपि महत्कार्यं यत्पूर्वो त्तरावलोचनतः सकलकारणावधारणं नाम । प्राचीनमपि महाभारत सकल भूपति मण्डलस्य साक्षा त्कृतं स्मारयति । अद्यापि समरे सकलानां राज्यभृतां भागादानं श्रूयते । किञ्चित्साम्राज्यं कस्यचित्सहायकं किञ्चित्कस्यचित् ।

यथापुराऽपि युद्धावसाने सकलक्षत्रमण्डलस्य विनाशः फलमसूयत, तथैवाधुनाऽपि सकलस्य ध्वंस एव निर्धार्यते ।

परमेतयो रुभयोर्युद्धयोः फलं किमपि स्यात्समं विषमं वा, कारण समालोचनां किञ्चिद्धयं कर्त्तुमीहामहे ।

प्राक्कालीनं महाभारतं वैयक्तिकस्पर्द्धया समुत्पन्नमभूत् । राज वंशे परस्परं जायमानः कलह एव पुना राज्येऽपि विरोधहेतुरभूत् । तस्यैव विरोधस्य समुद्दीपकाः हेतवः राजसभायां द्रौपद्याः केशाकर्षः, पाण्डवानां वनवासः, दुर्योधनस्य च प्रहास इत्येता अभूवन् । तदनु चपुनः राज्य सुखलाभाय महान्समरः प्रवृत्तः । यत्र प्रायः सकलक्षो-

णिपतयः स्वेच्छया आत्मनः सौहार्देन धनलोभेन यथा कथञ्चिद्वा परापरपक्षमाश्रयन्तः युद्धाय सज्जाः समातष्ठन्त ।

परमत्र कारणं सर्वथैव ततो विरुद्धायते । अत्र वैयक्तिकहेतुमेकतो विहीन मपरतश्च सामाजिक हेतु मुदयन्तं प्रतीमः ।

पारस्परिक आस्ट्रिया देशस्यपूर्वतोऽनुवर्त्तमानः सर्विया देशेन सह कलहः पुर्वोक्तदेशस्य राजकुमारवधं सूत्रयति । अतः समुद्दीपितयो रुभयो रपि देशयो रभूदेव व्युत्क्रमः ।

इतश्च रशियादेशः सर्वियादेशं साहाय्यदानेनानु गृह्णाति अपरतश्च रशियाहुंकृति मसहमानः कैसरमहोदयः आस्ट्रिया पक्षमवलम्बते । इतः फ्रान्सदेशः शार्मण्यं कृत क्रममवलोक्या सहमानः, सेना सन्नाहं, यावत्करोति संग्रामायतणरविनशिनकान् । ततदिति किम् । सङ्ग्रामा वतरणं नाटयतोः सिंहशावकयोरस्त्येव का वेलारुधिरप्रवाहोपेक्षायाः । तदिति फ्रान्स शार्मण्यौ परस्परं सूक्ष्मच्छिद्रावलोकनेन संचित पर्याप्तहेतु संचयौ परस्परं युद्धयेते । मध्ये पतितः विलिजयनदेशश्च कस्यापि हेतोः शार्मण्यं स्वक्षितिसीम्नि कृतक्रमसवलोक्या सहमानोऽवमानं गणयन् स्वातन्त्र्य रक्षणाय गर्जन् आत्मानं रणाय भमर्पयामास । एता वता अवसरं प्रतीक्षमाणमाङ्गलमण्डलमपि सौहार्दातिशयेन फ्रान्सदेशं साहाय्येन सम्भावयितुं वैलजियनदेशस्य स्वातन्त्र्यरक्षायै रणपणमवधारयदभूषयदेव रणस्थलीम् ।

इटली टर्की स्विटजरलैण्डादयस्तु नानादेशा आत्मनः औदासीन्यं प्रकटयन्ति ।

जापानदेश आङ्गलैः सह सौहार्दानुरोधेन शार्मण्यस्य उपनिवेशं किउचाउ स्थानं मवरोद्ध ' ततश्च शर्मण्या न्निष्कासयितुं बलात्प्रवृत्ते । आङ्गलानामधीनाः देशा राजभक्तयनुरोधाद् उपनि वेशवास्तव्याश्च जातीयप्रेमानुरोधाच्च साहाय्य मुपायनीकर्तुं सज्जाःसन्ति ।

एवं साधारणालोचनतः प्रत्यक्षमेव स्फुटीभवति सकलोयं संग्राम सन्नाहो जातीयवैभवमुपलक्ष्य प्रवर्तते । शार्मण्यकेसरिणः कदाचिद्वैज्ञानिकोन्नति माश्रित्य कृतं महान्तं शक्तिसञ्चय मेव बलस्य सर्वस्व-

मुपयोक्तु,ं जातीयावमानननाञ्चागणयन्तः हरिवर्षावनीपुगर्जन्ते। परमधुना जातीयभाव मधरी कर्तुमपलपितुं न कस्यापि मतिमतः साहसम्। अस्य महतो महाभारतस्य शिक्षानुरूपं फलमपि पुरातना द्विचित्रमेव भविष्यति।

प्राचीनभारत संग्रामस्य शिक्षासर्वस्वतया गीतायां गीतायां शिक्षाया निष्कर्षः पुराऽभूत्—

"धर्म्याद्धि युद्धात्श्रेयोऽन्यत्क्षत्रियस्य नविद्यते" परमस्य जातीयस्य महतो जन्यस्य फलम न्यादृश मेव विपरिण तमनुमीयते तदित्थम्॥

"जातीययुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते" प्रत्यक्षमस्य प्रमाणं यत्सकलदेशवास्तव्याः जातीययुद्धेऽस्मिन् जातीयसेवामुपायनी कर्त्तुं पुरः उपसर्पन्ति।

श्रूयते यत्कलिकातायां वेद महोपाध्यायः शार्मण्यदेशोद्भवो युद्ध चर्चा माकर्ण्यैव वेतनादिक मविगणय्य देशसेवां पुरस्कृत्य मुक्तिपत्रं दत्वा स्वमातृभूमिम्प्रति निवृत्तः।

अनेनैवः जातीयभावेन व्यापारसमृद्धिरपि नजाने कां काष्ठामुन्नतेर्नीता। जातेः जीवनस्य कृते व्यापारः मुख्यसाधनं गण्यते। कदाचित्तस्यैव व्यापारस्य कृते अधुना पि कियान् प्रयासः महतो युद्धस्य भागभूतो भवेदिति को वेद। वैल्जियनप्रदेशोऽधुना शार्मण्यदैशैरा क्रान्तोऽपि जातीय भावेन प्रेरितः कामिव वीरतां प्रकटयामास इति सर्वो वेत्ति। अधुना फ्रान्सदेशस्य भाविनी गतिरस्ति विचारणीया। मित्रत्रयस्य शार्मण्यदेशस्य चातिमहान्संमर्दः। अत्रास्ति भाग्यपरीक्षा। कस्य विजयो निर्णीत इतिवक्तु रस्त्येवदुःसाहसम्।

तथापि युद्धात्पूर्वं युद्धसामग्रीनिरीक्षणमेवपाठकानांसम्मतीनामाधारो भवतीतीचिन्तया वयं नीचैः संग्रामसामग्रीं प्रदर्शयामः।

| देशः | सैनिकाः |
|---|---|
| रशिया | ५४ लक्षमिताः |
| शार्मण्यः | ४५ ,, |
| फ्रान्सः | ४१ ,, |
| आष्ट्रिया | ३५ ,, |
| इटली | ३२ ,, |

सविया ४ „
आंग्लः ८ „

स्थलसेना मतिरिच्य जलसेना अपि संग्रामं भयावहतरं ज्ञापयति। तदिति साऽपि नोपेक्षितुं शक्यते तदत्रा ऽपि दीयतां दृष्टिः।

| देशः | (निर्भयाः प्लवाः) | (संरक्षकाः प्लवाः) | (विनाशिकाः नावः) | (जलोदरगामिन्यो नावः) |
|---|---|---|---|---|
| आंग्लः | ५५ | १३५ | २२८ | ६४ |
| फ्रान्सः | २१ | ३४ | २४२ | ७३ |
| रशिया | ९ | १२ | १५५ | २० |
| शार्मण्यः | ३३ | ५७ | १८३ | २३ |
| आष्ट्रिया | २३ | १२ | ८३ | ६ |
| इटली | ९ | २३ | १०१ | १२ |

नौसेनां विहाय विमानसेनया विज्ञानस्य साफल्य मेव संग्रामवीरैः शस्यते। विज्ञानेन यदि जातीनां किञ्चिदुपकृतं तन्नभोयानैरेव विमानाविष्कारेणैव सकलोऽपि विमानसंग्रामः पूर्व मेवावततार जातीयक्षत्रियाणाँ हृदयेषु इति कृत्वा साऽपि विमानावली नो पेक्षितुमर्हा।

| देशः | आकाशयानानि | विमानानि (१) | विमानानि (२) | शतघ्न्यः |
|---|---|---|---|---|
| आंग्ल | १३० | ३ | २ | ६४०० |
| फ्रान्स | ७५० | ७ | १४ | ३००० |
| रशिया | ३८० | ३ | ५ | ३५०० |
| शार्मण्यः | ४०० | १३ | ८ | ४००० |
| आष्ट्रिया | १५० | ३ | ३ | २००० |
| इटली | २०० | ० | ५ | २२०० |

एतदतिरिक्तमपि न जाने कियत्सामग्रीजातं गुप्ततया संवृतं स्यात्। यद्यपि नानादेशवेशभाषाचारनिपुणैः गुप्तचरै र्यथा तथा प्रकाश्यत एव पर भेदः। परं तत्त्वं तथा ऽपि रसातलमग्नमिव अस्त्येव महद् दुर्भेद्यम्।

# ऋषेर्वियोगः

निखिल निगम वेत्तृ र्गुरुमासाद्य सद्यः
श्रुतिशबलितर्कैः शिक्षिताहिंस ! धीमन् !।
दिशि दिशि, तव कीर्तिं, नाम च स्मारितानां,
हृदयकुसुमतापस्यास्य हेतुः कुतोऽसि ॥ १ ॥
जगति कृत मुदारं कार्य मासीत्समाप्तं,
यदसि झटिति बद्धप्रीतिरन्यत्रलोके ?
सुकृतमयशरीरस्यात्र वा तेन चिन्त्यं,
नहि किमपि निरर्थं त्वादृशाः कर्तुकामाः ॥ २ ॥
पुनरपि ममचेतो दूयमानं नितान्तं,
किमपि किमपि, साधो ! पृच्छति त्वां शरण्यम् ।
नहि भुवि मम तुल्यो देशसेवां विधित्सु,
रुचितमिति विदित्वा, त्वं कुतोऽन्तर्हितोऽसि ॥३॥
प्रतिदिशमवदातो मार्गण व्याकुलोऽपि
क्वचिदपि नहि लब्ध्वा नामशेषं भवन्तम्
सजलनयनयुग्मो, वेदभागः स शिष्टो
नहि विरतिमुपेतः पश्य रोरुद्यमानः ॥ ४ ॥
नहि किमपि मदीयं वाच्यशेषं महर्षे !
नच भवति निवेद्यं वाग्भिरेवंविधाभिः ।
हृदयनिहितवेदिन् ! दुर्दशोद्धारधीर !
पुनरपि कृपया वेदज्ञ ! सम्भावयाऽस्मान् ॥५॥

प्रसादः ।

# ऋषिविरहितायाः ।

## भारत मातुर्विलापः ।

हे दयानन्द ! कुत्र प्रयासि,
हा चिराया ऽधुना मां जहासि ॥ १ ॥

कि न्त्वया दुःख मत्रा ऽनुभूतम् ,
यन्ममाऽङ्कं त्वया नाऽद्य पूतम् ॥ २ ॥

स्वर्ग लोको ममो त्सङ्गतः किम् ,
ते प्रियो, दुःखमस्मात्परं किम् ॥ ३ ॥

सर्वथा ऽद्या ऽपि मे दुःखजातम् ,
दीन माक्रन्दनं नापयातम् ॥ ४ ॥

कोऽद्य मां त्वादृशो दीनदीनाम् ,
सान्त्वयेदाश्रितां दुःखलीनाम् ॥ ५ ॥

कोऽधुना ऽऽश्वासयेन्मे सुतानाम् ,
आकुल म्मानसं दुःखितानाम् ॥ ६ ॥

कोऽधुना मोहजालावलुप्ताम् ,
सन्तति बोधयेन्मे प्रसुप्ताम् ॥ ७ ॥

हन्त कः कल्मषव्याकुलस्य,
शान्ति मापादयेद्द भूतलस्य ॥८॥

यातु कामो ऽसि चेदन्यथा त्वम् ,
मातरं नैव मां विस्मर त्वम् ॥ ९ ॥

तात, भूयो जनिस्ते मयि स्यात् ,
लोक लोके पुनर्मे यशः स्यात् ॥ १० ॥

'मिलिन्दः'

# टिप्पणयः

हरिवर्षस्य संग्रामः—अयं संग्रामो न केवलं हरिवर्षस्यैव परं सकलमपि भूमण्डलं परिधिं व्याप्य तिष्ठति । विदेशीयपत्रसम्पादकानामप्ययमेवानुभवः पदे पदे स्फुरति । न्यूस्टेट्समैन नामकं पत्रम् स्फुटाक्षरैरेवेदं स्फुटयति । "प्रायस्तत्रत्या अत्रत्या वा विचारकाः भविष्यविषये विचारयन्तः एशिया खण्डं आफ्रीका खण्डं च परित्यजन्ति तदत्रासमीचीनं, यतो हि श्यामरागरञ्जितोऽपि जनो नतरां सदा परदास्यमेव भविष्यति सदातनं भोक्ष्यते । रशियाजापानजन्यमेव सकलम जागरयत्; इदं जन्यं ततोऽपि परं निन्द्राभञ्जकं दृश्यते ।" एवं हि लिखन् लेखकःपुरो भारतीयानां राजभक्तितात्पर्यं विशदयितुं क्रमते । "चीनजापानौ वर्त्तमानसंरम्भेऽवश्यं क्रियाभाजौ भविष्यतः । यद्यपि किञ्चित्कालं भारतेऽपि असंतोषजनकं द्रोहसमं यत्किञ्चिदेतद्वा यथाकथंञ्चित् शान्तमिवास्ति, तथापि शास्यशासकयोः परस्परव्यवहाराज्जायमानोऽनुभवः सन्तोषादितर एव किञ्चिदस्ति । समालोचनाऽपि वर्त्तमानस्य तादृशमेव फलं जनयति । यदि शासका अत्रोदारतया न वर्त्तिष्यन्ते चेदन्यथैवावस्थापरिणामो भविता । अधुना यद्यपि न कश्चिदपि संशयस्तथापि भारतीयानां राजभक्तिभावः सर्वत्रसंग्रामे साहाय्यं जनयिता । रशियावासिभिः सह तेषामस्त्येव वैमनस्यं शार्मण्यैः सह न प्रेमसम्बन्धः ।"

प्रायो भारतीया अधुना शासन स्वतन्त्र्यं वाञ्छन्ति न शासकपरिवर्त्तनम् । शासनस्वातन्त्र्येऽपि आंग्लैः सह तेषां प्रेममयः सम्बन्धस्तु पराधीनावस्थायाः संतोषापेक्षया स्थिरो भविता ।

बहुप्रकारो हि प्रकाश्यमानो राजभक्तिभाव एव धनतनुभाषा-र्पणेन च साहाय्यप्रदानमीदृश्यां चापदि वास्तविकतया साक्षी भवति । इदमेव भारतीयानां साहाय्यं औपनिवेशिकानां साहाय्य-मप्यतिशेते अतएवाहं हरिवर्षीयाणामत्र ध्यानमाकर्षामि यद्वयं न केवलं स्वतन्त्रतोदारतादाक्षिण्यस्य राज्यं हरिवर्ष एव परिमितं जानीमः । परन्तु इतरत्राऽपि जम्बूद्वीपेऽन्यानपि पारार्थान्या ह्वियोज्य सर्वत्र स्वतन्त्रतादेव्याः शासनमभिवर्द्धयाम । सम्भवतः एशिया भूभागोऽपि शासनास्वातन्त्र्यं न कालेन सोढा । अतः सोऽपि तदानेनोपकरणीयः । ततश्च हरिवर्षैशियाभागौ भ्रातृवत्मे-ममयौ स्याताम्, तदुभयोरभ्युदयाय ।”

भारतीयराजभक्ते विशदोऽभिप्रायः—ततः स एव लेखकः पुरः भारतस्य राज्यभक्तिं विशदयति । “यद्यप्याधुनिको भक्ति-भावः सत्यतां वहन्नेवास्ते, परं तथाप्ययमांग्लव्याख्यातृभिः भारतीयानां प्रकृतिरेवेति न व्याख्येयम् । यतस्त एव जानन्ति पश्चाज्जातं यवनानामसन्तोषमूलकं संक्षोभम् । टर्कीराज्ये सति जर्मनसाहाय्यमश्नुवति, का गतिरेतेषां भवितेति कल्पनैव पर्याप्तं ज्ञाप-यति । माण्डलिकभूपानां साहाय्यदाने न वदान्यतालेशो हेतुः परन्तु तत्रांग्लरेज़िडन्टस्यैव प्रभावविलसितं जानीमः । जातीय-सभया हिन्दूनां किं भारत जनताया अपि प्रतिवर्षं शासनविषयं वैमनस्यं प्रकटीकृतं वयं नोपेक्षितुं प्रभवः । कोमागातामारु विष-यकः कनाडानहिष्कारोऽपि नाद्यावधि तेषां स्मृतिं मुञ्चति । अतः स्तेषां भक्तिमूल्यमाधिक्यमेव गणनीयम् । आंग्लजनतयाऽपि भूयो भूयः सेयं भक्तिः संशयलेशविरहितैव मनसाऽनुभवनीया । भार-तीयजनतांविषयश्च नोपेक्ष्यः । इतः परमपि यत् भारतीयानामत्र

ध्यानमाकर्षितुं क्षमः कश्चिदन्यादृश एवोदारता प्रकाशो विधेयः, यतः भारतीयाः अपि आंग्लशासनस्य मान्यनागरिकत्वं मनसि अनुभवेयुः ।"

"सर्वोत्तमोपायो भारतीयमनांसि आकर्षितुं प्रथमं सर्वेषामपि उन्मनसां शासकाभासानां परिवर्त्तनं तेषामेव परकीय शासनमिति भारतीयानामनःसुकण्टकोद्बोधहेतुकत्वात् । अधुना निराधारा राजभक्तिः शक्तिहीनतया भयार्दिततया वा बहिर्निस्सरन्ती कालेनोदारतामूलतया हार्दिकी भवितेति नो-निश्चयः ।"

"भारतीयानां बलात्कारतः शस्त्रविहीनत्वमेव तेषां पराधीनतां स्मारयति । शस्त्रविहीनत्व मेव भारतीयानां तेषां दैन्यं शक्तिविहीनत्वं आत्मरक्षारहितत्वं गृह जनपुत्रकलत्रादिसाहाय्येऽपि निःसहायत्वं राजपुरुषेणाऽपि प्रतिपदं कुलमानविहीनं यथा तथा वध्यत्वञ्चेति हेतवः तादृशीमवस्थां कर्त्तुं निमित्तीभूता तानस्मत्तो विभिन्दन्ति । एवं शस्त्रादिशक्तिहीनत्वमेव प्रजासु राज्ञो ऽविश्वास परिणामं लक्षयति ।"

"प्रथम मेतत्कलङ्कप्रक्षालनमस्माकं कर्त्तव्यम् । स्वातन्त्र्य प्रदानेन तेषामेव राजभक्तिः साहाय्यरूपमायाता द्रोहबुद्धिमुत्खास्यति । इतरत्र तु येऽधुनाऽपि लुण्ठयितुं चोरयितुं प्रजा वा पीड़यितुं प्रवृत्ताः द्रोह बुद्धिं वा विशदयन्तस्तथापि शस्त्राणि विश्रब्धं धारयन्त्येव । प्रभुमण्डलेन सन्नागरिकेभ्यः शस्त्रधारणाज्ञा देयैव । भारतीयै रात्मरक्षायै राजभक्तिप्रकाशनाय वा शस्त्राणिनोपादेयानि, परमन्यैः हरिवर्षवास्तव्यैरताऽपि धारणीयानीति किं

महान् भेदो राजभक्तिं न बाधिष्यते ? अतोऽनुकूलाज्ञया ते उदार-तयैव वर्त्तनीयाः ।"

"द्वितीयं कर्त्तव्यं यद्—सर्वत्रभारते आवश्यकं प्रारम्भिकं शिक्षादानं वितीर्णं स्यात् । यदपि कल्पितं भयं तद्विहाय सर्वत्र शिक्षायाः राजनियमः प्रचारितः स्यात् ।"

"तृतीयं कर्तव्यम्, राजभक्त्या देशभक्त्या च प्रेरिता भारतीया आंग्लदेश वास्तव्याश्च सममेव स्वयंसेवकतां विधातुं लब्धावसराः स्युः । इदं त्रितयमपि कार्याणां कर्तुं नाधुना दुष्करम्" । पश्चात्कदाचिदस्य महतो विस्मरणस्य अन्यादृशमिव फलं फलितं राज्ञै प्रजायै चाहितं स्यादिति वक्तु मशुकरम् ।

पनामा प्रदर्शिनी—भारतीयाः स्वकीयं मानं सर्वत्रावगणित मवलोकयन्तोऽपि न जाने कुतो न ह्रियमनुभवन्ति । अनुभूय चापि कुतो न तदपाकरणे विहितप्रयासा भवन्ति । पातालभूभागे एव पुराऽपि संजातयो र्द्वयोःप्रदर्शिन्यो रभूदेव महदपमानो भारतीयानाम्। प्रायोःस्मल्लज्जाकराणि दृश्यानि सकलस्य जगतो गोचरी कारयन्ति तत्रत्याः पदाधिकारिणः। भारतीयास्तु जातीय भाव विहीना इमं जातीयमपमानं प्राय उपेक्षन्ते । न चतेऽत एव किमपि स्थानं लभन्ते । अधुना पनामाप्रदर्शिनी समीपमुपसर्पति अत्र पुन रवसरो ऽस्माभिरन्वेष्यः यदधुना न कथमपि जातीयोपमानः स्यात्। तदपमानापेक्षया तत्र चर्चाभाव एव वरम्। यदि भारतीया वस्तुतोऽपमान मनु भवन्ति कुतो न सर्वत्र लब्धावसरा जातिमानायाधिकारस्य कृते प्रयासं प्रारभन्ते ?

भारतीय जातीयशिल्पस्यावसरः—महतो घोरमहाभारत समस्य जातीययुद्धस्य कृतेमहानयमपरोपो व्यापारस्य परिणतो ऽवलोक्यते । मायोभारतपरिधिमतिक्रम्य सप्ताकूपारापरपारतः महार्णवै रानीतानि बहूनि व्यापारवस्तूनि नाधुना भारत माक्रामन्ति ।

तेषामभावादस्त्येवास्माकं महानवसरो जातीयशिल्पोन्नतेः । कार्पासोऽधुना भारतेऽत्यल्पमूल्येन लभ्यते। कुतोन देशीय करकौशलमेवात्र प्रोत्साहितं क्रियते क्रियाशीलैः। एव मेवाऽग्निसंधुक्षणार्थं दीपशलाकाव्यापारोऽपि निरुद्ध एव वैदेशिकानामतः भारतीय रसायनकोविदा एव कुतो न दीपशलाकाशिल्पोद्योगाय हस्तावलम्बं दातुमुत्सारितकराः भवितु मुद्युञ्जते। एवमेवाऽन्येषामपि लोहमय शिल्पानामुन्नत्यै भारतीया अवसरस्य सूपयोगं कर्तुमर्हन्ति ।

अधुनैव च प्रतिज्ञावसरो ऽस्ति क्रियात्मको विदेशीय वस्तुनां बहिष्कारस्य स्वदेशीयानाञ्चोपादानस्य ।

भारतीयाः कृषीवलाः पञ्चाम्बुप्रान्ते किम्प्रायः सर्वत्रभारते कृषीवला महादुःखभाजः सन्ति । दिवाऽनिशं चिन्तया चितयेव जर्जरी क्रियन्ते । कार्पासान्नादीनामधुना ऽस्मा द्देशा द्देशान्तरगमनं युद्धस्य हेतोः सर्वथानिरुद्धमस्ति । अतोत्रैव वर्तमानं कार्पासादिकमल्पमूल्येन विक्रयं लभते । एवं महान् राशिरपि द्रव्यस्य विक्रीतस्य स्वल्पमेव द्रविणमुपजनयति कृषीवलानाम् । परं व्यतिकरे राजकीयशासनं तावन्तमेव भुवः करं ततोऽपि वाऽधिकं तेभ्यो निर्धनेभ्यो गृह्णाति । एवमुभयतःपाशया रज्वा बद्धास्तपस्विनः

कुतश्चिद् जीवधारणमपि दुर्भरं सहन्त एव। तत्रास्माकमिदं कर्त्तव्यम्, यद् येन केना ऽपि प्रकारेण अर्थसमितीर्निर्माय शिल्पोन्नतिः करणीया, येन सर्वोऽपि देशः सुसमृद्धः सम्पन्नश्च स्यात् । इत्यलम् ।

(प्रोटे क्शन) बाधितव्यापारे अस्माकं नेतृभिः मुहुर्मुहुः प्रार्थ्यमानेऽपि प्रभुवर्गोऽत्र स्वतन्त्र व्यापारं नाश्रयत् । परमधुना बाधितव्यापारः स्वयमेव संवृत्तः, किमिति अधुना शयानैः स्थीयते व्यापारमुन्नेतुकामैर्नेतृभिः । अधुना जाग्रतामि त्यादेशः श्रेयान् ।

महाभारतम्—हरिवर्षस्य समराङ्गणे ऽस्त्येव महान् शनि प्रकोपो दरीदृश्यमाणः। यत्र प्रायःसर्वेषामपि क्ष्माभुजां छत्रपतीनां मत्तमता प्रादुर्भवति ।

जर्मन केसरिणः कैसरस्य जन्मपत्रिकां हरिवर्षीय कार्तान्तिकाः नतरां श्रेयस्करीं मन्यन्ते । अस्त्येव तत्रापि शने रुपद्रवः । यतः जर्मनिसाम्राज्यस्य विध्वंसः, फ्रान्सदेशस्य विजयः, केसर नृपतेरात्मविषादः, राजकुलक्षयश्चे त्यादीनि भूयांसि फलान्याकूतयन्ते फलवादिभिः । परमधुनाऽपि एतेषां चिन्हानि नतरां दरीदृश्यन्ते ।

अयंमहा संग्रामो यत्फलंबोढा तत्पश्चाद् द्रक्ष्यते परमधुनावधि श्रूयते यदस्मिन् महति जन्ये अष्टौ राजकुमाराः जर्मनभूपतेः, बहवो ऽमात्यतनया इंग्लेण्डसम्राज्यस्य, कतिपये माण्डलिका भारतस्य, कदाचिच्छतं यावद् आङ्गलराजसभासदस्याः रणाङ्गणमुप शोभयितुं न केवलं कामयन्ते अपितु अलंचक्रु। अयमेव रसः क्षात्रयज्ञस्य, यत्रसर्वेऽपि अहमहमिकया प्रवर्त्तेरन् ।

# दयामयस्तवः

श्रीदयानन्दो महानन्दोदयै रभिनन्द्यताम् ॥ ध्रुवम् ॥
मेघसंघातान्धकारितगगनमण्डलकान्तरे ।
खद्योतदर्शी विद्युदाभासः, स एव निरूप्यताम् ॥१॥

यः परैः, संभिन्नगात्रायाः स्वमातृभुवः, प्रभुः ।
एक मात्रा लब्ध भूतः, सत्सुतो ननु गीयताम् ॥२॥

मोहमाया ऽज्ञान सान्द्र ध्वान्तजालविनाशकः ।
वेदराशिः स प्रभास्वान्, सर्वदा संस्तूयताम् ॥३॥

येन पूर्वेषा मृषीणाम् गौरवं संरक्षितम् ।
ब्रह्मचारी सन्, महा तेजा जनै रभिपूज्यताम् ॥४॥

वीक्ष्य यद्बुद्धेर्विलासं पाश्चिमात्य विपश्चितः
विस्मयान्वितचेतसो, ऽभूवन्स विद्वान् वन्द्यताम् ॥५॥

मातृभूमेः पक्षपाती, मातृभाषाया स्तथा
भारतीयो, देशभक्तः सोऽखिलेषु महीयताम् ॥६॥

धैर्यधौरेयः सुधीः पाषण्ड खण्डन पण्डितः ।
वेदवर्त्माऽदर्शि येनाऽऽर्यः सदा स समर्च्यताम् ॥७॥

सद्दयां दीनेषु चानन्दो स्सदा सुजने ष्वपि
नित्यशः कुर्वन्दयानन्दो, विजयतामेधताम् ॥८॥

प्रकाशः

## भरताश्रम-वर्णनम्

मातर मृत वचांसि भूयसा
पातुमु त्कयति मुग्ध बालकः ।
वीदयतां नु करुणा रुणैः पुनः
लोचनै वृंजिन जाल मोचनैः ॥१॥

बालभास्करकरैः समुज्ज्वलं
श्याम शाखि गिरिचारु चत्वरम् ।
पार्श्ववर्त्ति सरयू पवित्रितम्
काननं ननु किमप्य शोभत ॥ २ ॥

रोधसि प्रचुर चारु शाखिनां
बर्हि कीर परिभृङ्ग-भृतां वनम् ।
यत्र काशकुश पल्लव च्छदी
राघवाऽनुजगृहा स्वमाययौ ॥ ३ ॥

यत्र नन्दति जनोऽविरामतो
भूरिभूरि तटिनी विहारतः ।
सस्यसंवलनरम्यभूधरं
नन्दिवर्णप्रभजङ्गुवस्तलम् ॥४॥

नीलनीलसलिला सरिद्वरा
भानुबिम्बकरसंक्रमद्युतिः

नव्यनीरद तनूं हरे रहो
श्रीश्रितामनुकरोति संततम् ॥ ५ ॥

वेधा यदीयघटना कुलचित्तवृत्तिः,
एकां विरच्य ललितां श्रियमेव पूर्वम् ।
विस्मृत्यतां पुनरनेकसरोजषण्डे
वल्लीः श्रियो विजघटे नु मनोऽभिरामाः ॥६॥

अम्भोजिनी वनविहार विलास लीला
माधातुमुत्कमनसः, कलहंसरूपाः ।
लज्जाविगोपन कृते ऽप्सरसां गणेन
हंसीगणे सुमनसो नु विहारमैच्छन् ॥७॥

अन्येऽपि वा मदकला, कुरराः कुलुङ्गाः,
भृङ्गाः सरित्पयसि शाखिचये विहङ्गाः ।
सच्छाद्वलाञ्चिततले विरताः कुरङ्गाः
यद्वासिनो न जहतीव मुदस्तरङ्गान् ॥८॥

भूयोऽमले पयसि संक्रमितं स्वकीयं
बिम्बं विलोक्य विहगाः प्रियसंगबुद्ध्या ।
अन्तर्निगूढ-तनवः पुनरुद्गताश्चा
ऽप्येवं कुतूहलधिया मुखरा भवन्ति ॥९॥

भृङ्गालि रेत्य कलित क्वणना निकाम
मम्भोजिनी दलतले वहुधो पविश्य
पर्यङ्किकामृदुनि किन्नर मण्डलीव-
संराजते अहह ! मोदभर स्तरङ्गः ॥१०॥

सा रामणीयकवती विबुधैरुपास्या।
कल्पद्रुमान् धृतवती न्वमरावतीव।
सैवा द्य पातकवती निरयं गतेव
हीना कुतो वसुमती भवतीति कष्टम् ॥ ११ ॥

---

समस्या
"सदा सदा सन्दशदाशदेशाः"
साहिती प्रणयिनोऽत्रा ऽपि कविगुणं प्रकटयिष्यन्ति।

## शरत्

नक्षत्रमालालिविराजिकण्ठा, प्रफुल्लसंशोभिशशाङ्कवक्त्रा।
विनिद्रपङ्केरुहरम्यनेत्रा शनैः, शनैः,श्रीशरदाजगाम् ॥ १ ॥

सितत्वमभ्रेषु, सुमेषु भृङ्गान्, मनःसुरागं रसिकव्रजानाम् ।
ततान,सर्वत्र च सम्प्रसादं, शरद्यथेष्टागमनिर्वृतान्ता ॥ २ ॥

प्रफुल्लनीलोत्पलनेत्रभाञ्जि, विनिद्रबिम्बीफलभूषितानि ।
ज्योत्स्नास्मितोल्लासविशोभितानि, विरेजुरास्यानि दिगङ्ग-
नानाम् ॥ ३ ॥

क्वचिच्च सस्यं परिणामरम्यं, क्वचिन्महीपङ्ककलङ्कशून्या ।
क्वचिच्च कूलंकषतां विहाय तरङ्गिणी, धीरगति र्विरेजे ॥४॥

सहैव संक्रन्दनचापवृन्दै र्लयं समीयुः शिखिनां शिखण्डाः ।
प्रसादमीयुः सममम्बरेण जलानि कालुष्यमुपागतानि ॥५॥

व्यपेतहर्षा, विपरीतनृत्या,वित्रस्तबर्हाः,शिखिनो विरेजुः ।
लीनेऽम्बुदे लास्यकला विदग्धे, तदर्थ मित्थं शुचमाचरन्तः॥६॥

सरोजरेणूत्करकान्तियुक्ता,कलै र्विरावै र्मधुरं क्वणन्ती ।
विभक्तडिण्डीरनिभं लसन्ती रराज सा राजमरालपङ्क्तिः॥७॥

गोपीजनोद्दंकिततालिकाभिः, शालीन्समुत्सृज्य समुत्पतन्तः।
शिरीषपुष्पस्तबकाभिरामा श्चकाशिरे कीरविचित्रदाराः॥८॥

लयेन साचीकृत हारिकण्ठै, रूपान्तसम्मीलितचारुनेत्रैः ।
प्रातर्महेशस्तुतिसक्तचित्तैः, पतत्त्रिसङ्घैः रुदकूजि रम्यम् ॥९॥

सप्तच्छदामोदसुवासिताम्बरा, स्तुषारसम्पर्कसमस्तशीतलाः ।
शनैःशनैरुज्ज्वलतामुपेयुषो ववुः, प्रसन्ना मधुराः समीरणाः ॥१०॥

नीलारविन्दे हिमबिन्दुकान्ताः, सितोत्पले नीलमणिप्रभाभाः ।
गभीरनीरे मृदुवातकम्पाः, सितारविन्दप्रचया विरेजुः ॥११॥

घनाघने पंककुले निमग्नं, सहस्ररश्मिं विलयस्वरूपम् ।
करैः सहस्रैरवलम्ब्य खिन्नं, विपत्पयोधेः शरदुज्जहार ॥१२॥



# गुप्तं क्रियापदम्

राजन् युधि हतान् वीरान् यथोद्वृद्धा स्तपस्विनः ।
पलाशकृतयो दन्तियूथिनः सम राङ्गणे ॥१॥

वेशन्ते वीक्ष्य परितो हर्ष मापदभिव्यथः
क्रियां गूढां न यो ज्ञाता तस्य पाता न वामनः ॥२॥

अगो पि मायया यस्य लीलया दिव्य रूपिणः
किञ्चिन् न यः क्रियां वेत्ता तस्याज्ञानं नु को हरेत् ॥३॥

हरेस्य भाग्य शून्यस्य दयया पाप कर्दमम् ।
क्रियां योत्र न जानीया त्तस्य पुंगवता ऽर्थतः ॥ ४ ॥

वानरै रिभसंकाशः पर्वतो लवणाम्भसि ।
प्रत्यक्ते पि क्रिया वर्णे बुधानां धी र्विमोहिता ॥ ५ ॥

प्रातः प्रात प्रकारेण कलशं सकलं बुधाः ।
अत्र क्रिया विलुप्तैव मार्गिता पि न लभ्यते ॥६॥

विदया या दयोवक्त्री लक्ष्मणं रावण स्वसा ।
अत्र क्रिया तथा गुप्ता यथा रामे विदेहजा ॥ ७ ॥

दुर्योधनो मल्लयुद्धे भीमेनोद्धतकर्म णा ।
अक्ते पि धुर्या जानन्ति न क्रियां शुभलक्षणाम् । ८ ॥

प्रधानस्य रिपून् राजन् प्रजावर्गस्य भूपते !
अत्र क्रिया द्वयं गुप्तं वने दाशरथी इव ॥ ९ ॥

---

अत्र क्रियाः प्रत्यभिज्ञाय सम्पादकस्य सविधं प्रेष्याः

# समस्यापूर्तिः

मत्तामानधनाः सदानविभवाः शुण्डाकरस्पर्धिनः
धावन्त स्त्वरितैः पदैः वनं गुहास्त्वाशां लभन्ते न काम् ।
यच्छ्रुत्वा महिषा विषाणशरणाः, कोलाश्च दंष्ट्राजुषः
याताः शून्यरवाः किलान्तरतरं, "सिंहस्य तद्गर्जितम्," ॥

———

कुशाग्रः

भीता योरोपदेश राजवलया भूमिर्भृशं वेपते
फ्रांन्सैंग्लैण्ड विशेषराज पुरुषा रात्रिंदिवं चिन्तिताः ।
मन्ये केसरकेसरि प्रभुवरैः संभर्त्सितास्ते नृपाः
उन्मत्तस्य न मन्यतां स हि रवः "सिंहस्य तद्गर्जितम्" ॥

———

आनन्दः

मत्तेभेन्द्र गणाः निशम्य नितरामुत्कम्प मातन्वते
सारंगावलिरात्मपालनपरा ह्याशा द्रुतं सेवते
वन्यो जन्तु गणो यमेव लभते मार्गं ततो विद्रुत
इत्थं विस्मयकारि भीषणमहो "सिंहस्य तद्ग गर्जितम्" ॥

मेधाव्रतो व्रती
वृन्दावनगुरुकुलस्थ

———

# समालोचना

"राष्ट्रीयता का मूलमन्त्र" इत्येकं नवीन मेवार्य्यभाषायां पुस्तक मस्माभिरालोकि। अस्य प्रणेता श्रीमान् इन्द्रो वेदालंकारो महोपाध्यायो गुरुकुल विश्वविद्यालयस्य। अतितरां रोचकया भाषया राष्ट्रीयतायाः सकलमपि वस्तु तत्वमत्र विवेचितम्। स्वय मध्ययनत आस्वादः कथ मिव जनः प्रशंसया लभेत इति। मूल्य ≡)

"राष्ट्रों की उन्नति" इत्यपरं तत्प्रणेत्रैव प्रणीतं तद्विषयमकमेवास्ति इदं पुस्तकयुगलमपि प्रायः सर्वैरेव भारतीयै रेकधा अवश्यं पठनीयम्। एतावतैव भारतस्य अन्य देशापेक्षया आकाशपातालयो भेदः प्रत्यक्षलक्ष्यायते। भारतीयानामेका जातिः रेका च राष्ट्रीयता कथं पुनरपि सम्भवा कथं च सा पुनरपि सकलस्य जगतः शेखरी भूता स्यादित्यपि सुस्पष्टं स्वल्पाक्षरै विशदीकृतम्। ··· मूल्य ।)

"उपनिशदों की भूमिका" इदमपि पुस्तकं तेनैव ग्रन्थकृता ऽलेखि अत्र···प्राचामृषीणां वचनानि कथं व्याख्येयानीति सुस्पष्टं प्रत्यपादि। इदं पुस्तक मवश्यं विज्ञान लिप्सुभिःसंस्कृतज्ञै रपि आनाय्य पठनीयम्। मूल्यम् ।≈)

प्राप्तिस्थानम्—मनेजर, सद्धर्मप्रचारक पत्र, देहली।

# उषाया नियमाः *

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालया त्पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते। किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते। अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम र्थावबोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।≈) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याः प्रतेर् मूल्यं द्वावाणकौ ≈) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्या मभीप्सुभिः पत्रेण सह स्वयेमवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्रे ग्राहक संख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेत् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्य्यये यद्यस्माभिः सप्ताहद्वय पर्यन्त काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रेत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यः।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते

**प्रबन्धकर्त्ता, उषा**

**डाकघर शामपुर**

Registered Number A. 639.

*ओ३म्*

# उषा

संस्कृतमासिकपत्रिका

उषा अजीगर्भुवनानि विश्वा। ऋग्वेदे।

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः।
विगलतु जनतान्धकारलेशः, प्रसरतु देवगिरांमुषाविशेषः॥

| विषयसूची | पृष्ठाङ्कः |
|---|---|

# समस्यापूर्तिः

ब्रह्मप्रकृत्यो र्वद किं स्वरूपम्,

शिरांसि वा रामरिपोः कियन्ति ।

के ते, जना यत्र न देशभक्ता,

"सदा[1] सद्, आसन् दश, दाशदेशाः" ॥

---

हे भारतीभूषितवक्त्र पद्मा,

अविष्कुरुध्वम् वचसो विलासान् ।

भवेत्समस्या सरला वयस्याः,

"सदा सदासन्दश दाशदेशाः" ॥

---

कुशाग्रः

विख्यातवैज्ञानिकमण्डलस्या-

वनीन्द्रभूपेन्द्रसुगुप्तकोशाः ।

अध्यात्मसम्पत्तिजितान्यदेशाः,

"सदा सदासन्दशदाशदेशाः" ॥

मेधाव्रतो व्रत

गुरुन्दावन कुल

---

टि०—( १ ) ब्रह्मपक्षे सदा सत् ।

प्रकृतिपक्षे सदा ऽसत् ।

# उषा


| प्रथमेवर्षे | ... ...मार्गशीर्षः... ...<br>सं० १९७१ वि० | द्वादशोऽङ्कः |
|---|---|---|


## ईश्वरवन्दना

सज्जन ! जन ! चिन्तय महेशं सदा

वेद वचांसि विचारय नित्यम्,

चिन्तय महेशं सदा । ध्रुवम् ।

येन विना करचरणावयवैः,

विश्वं कृतं वेधसा ॥ १ ॥ सज्जन०

निर्विकार मजमेकमनादि,

ध्येयं हि ब्रह्म त्वया ॥ २ ॥ सज्जन०

एकमहेश्वरवश्यमशेषं,

नित्यं हि ज्ञेयं त्वया ॥ ३ ॥ स०

मायामयमिदमखिलमसारं,

विश्वं नु हेयं त्वया ॥ ४ ॥ स०

सारभूतमपरं परशक्तिं,

ब्रह्म हि ध्येयं त्वया ॥ ५ ॥ स०

मोहपाशपतितेन कदापि,

धर्मो न हेयस्त्वया ॥ ६ ॥ स०

इह संसारे विषयागारे,

ध्यानं न देयं त्वया ॥ ७ ॥ स०

मधुपः

# सम्पादकीया विचाराः

**यज्ञेषु पशुहिंसा**—पूर्वस्मिन् अंके अस्माभिः पञ्चतन्त्रस्य अजविषयकं व्याख्यानं पाठकेभ्यः समर्पित मधुना ब्राह्मणस्यापि वयं व्याख्यानं प्रदर्शयितु मीहामहे।

स्थाने २ ब्राह्मणेषु, पशवो वै अन्नमिति, समभ्येति, परं, पशवश्चतुष्पादा, अस्य व्याख्यानं कथं व्रीहियवादेरन्नस्य संघटेतेति चिन्ता मनसि जागरूकायते। अस्याप्यनुशीलनमेव समाधानमस्ति। वालखिल्योपधान प्रकरणे कर्मकाण्डं वितन्वता ब्राह्मणेन, प्राणा वै वालखिल्या, इत्यधिकृत्य एवं प्रतिपाद्यते।

"आयुषे त्वा, वर्चसेत्वा कृष्यै त्वा, क्षेमाय त्वा इत्येते चत्वारः। चतुष्पादाःपशवः। अन्नं पशवः। तएतैश्चतुर्भिश्च तुष्पादैःपशुभिरेतेन अन्नेन अमुष्मिं लोके प्रत्यतिष्ठन् तथैव एतद्यजमानः एतैश्चतुर्भिः चतुष्पादैः पशुभिः, एतेन अन्नेन अमुष्मिंल्लोके प्रतितिष्ठति।..........."इषे त्वा, ऊर्जे त्वा, रय्यै त्वा, पोषाय त्वा, इति चत्वारः। चतुष्पादाः पशवः अन्नं वै पशवः। ते (देवाः) एतैश्चतुर्भिश्चतुष्पादैः पशुभिः, एतेन अन्नेन अस्मिंल्लोके प्रत्यतिष्ठन्। तथैव यजमानः......प्रतितिष्ठति।"

अत्र स्पष्टं पशुशब्देन अन्नमेवोपादीयमानमवलोकयामः अस्यैवान्नस्यो पादानेन पूर्वोक्ताश्चत्वारः पादाः इष-ऊर्ग-रै-पोषाः इत्येते आयुः वर्चः कृषिः क्षेमइत्येते च चत्वारः संसिद्धा भवन्ति। एवमेव च पशूना मन्नस्योपादाने प्रभूतसहकारित्वाद् दुग्धादि दानेन च जीवनस्य सहकारित्वाद् यज्ञेष्वपि पशवोऽन्नेन सहउच्यन्ते। परमत्रैव मतिमतां भूयोमतिमत्ता लक्षयिष्यते, यत् पशूनां हिंसने पूर्वोक्तानां आयुषादीनां लाभाः कथमिव सेत्स्यन्ति। इत्यतः अस्माकं मतिस्तु यज्ञ मन्नादि निष्पत्तिसाधनं तद्विज्ञानप्रसारकञ्चकर्मविधान मेव श्रेयोविधायकं प्रत्येति अन्यथा व्याख्यानं तु न कथमपि रोचते।

**वर्षसमाप्तिः**—वयमद्य महतां शोकेन विनिवेदयामो यद्वयं पाठकेभ्यो ऽस्याः पत्रिकाया विशेषं किञ्चिदुत्तमं पदं कार्यञ्च विश्वास्य न तत्पूरयितुं कारणवशात् क्षमा अभूम । अत्र वयमपि किं कर्त्तुं शक्नुमः । अङ्ग ! उन्नतेः पदं तु सरलया सरण्याऽपि गच्छन् पुरुषः शनैः शनैरारोहति । तत श्चेयं संस्कृत पत्रिका, यस्याः प्रचारस्य अल्पत्वात् कार्यस्य चानिश्चितत्वात् कथमिव सहसा परमुन्नति पदमारोहेत् । यज्जातं तज्जातम् । नैतावता धीरा आत्मनो धैर्यं जहति । आर्य पुरुषाणा मिदमेव धैर्यमयं व्रतं, यदापद्भिरा क्रान्ताअपि नतरा मुद्देश्याद् व्रताच्च स्खलन्ति, स्खलिताअपि झटिति साधवो धुर्य्या इव मनस्विनः पुनः साशाः भवन्ति । धुरं च साहसेन वहन्ति । भवतामौदासीन्याद् यदि उषा पत्रिकाऽपि मौनं भजेत नाम. का श्लाघाऽस्माकं भविष्यति संस्कृतपत्रेषु ? । सहृदयासंस्कृतरत्नाकरादयस्तु सहयोगिनः यथातथा प्रवर्त्तन्ते परमुषा वर्षप्रमाण मेव नोत्क्रामति इति महल लज्जास्पदं नः । वयमपि तत्र आर्यपदभूषणानां भवतामात्मगौरवस्य कृते कुलमानस्य कृते च पुनः साहसेन दृढं व्रतं वोढुं सज्जाः भविष्याम इति प्रतीजानीमहे । आशास्महे च यदितआरभ्य भवतां धर्मभक्ति समाजभक्ति कुलभक्तिश्चोद्दिश्यावश्यं लेखगीतिकविताभिः भवतां वाञ्छितं पूरयितुं सफलाः भविष्यामः । तत्र भवतां पुनः सोत्साहमयानि आशीर्वादवचांसि शिरसि धारयन्तः परमात्मनश्च सामर्थ्यं प्रार्थयमानाः इमा मुषां पुनरुज्ज्वलाङ्गीं मनोहरां च विधातुं प्रयतामहे ।

**ऋष्यङ्कः**—यद्यपि नाद्यावधि श्रीमतां हृदयानि उषया आवर्जितानि परमस्याः सौभाग्येनाधुनाऽवसरं प्रतीक्ष्य, दयामस्य आदित्यप्रभस्य दयानन्दस्य ऋषे रुद्दीपकानि आशिषां वचोऽमृतानि निपीय पुनरुदितम् । अत एव वयमपि अनुमिनुमो यदुषाया ऋष्यङ्कं दीपमालाङ्कञ्चास्माकमुपायनमिवावश्यं ससंमदं स्वीकरिष्यन्ति तत्रभवन्तः । इदमपि निवेदयामो यदस्य कुलवर्त्तिनां छात्राणा मुल्लसितस्य सारस्वतस्य स्वागत मवश्यं भवद्भिः करिष्यते एतावतैव भवद्भिरस्माकं विधेयं भविष्यत्कालिकमपि ज्ञास्यते ।

**उपहारः**—अधुना वर्षस्य चरमोऽयमङ्को भवतः करं शोभयति। तत्र आगामिनः कर्त्तव्यस्य वयं सूचनामात्र मिव अत्र दातुं वाञ्छामः। अस्माभिरुषायाः उपहारः प्रकाशयिष्यते। यथाऽनुमानं उत्सवपर्यन्तं तस्य प्रकाशनं निश्चीयते। तस्मिन् उपहारपुस्तके नाना छन्दोमय्यः कविताः नानारागमय्यो गीतयःसूक्तयश्च भविष्यन्ति। तत्र-परमेशस्तवनं श्रीमन्तं स्वामिनं मातृभूमि मार्यसभ्यतां गुरुकुलं देववाणीश्चोद्दिश्य सकलमपि विलसितं भविष्यति। तदल्पेनैव मूल्येन गृहीतुं ग्राहकैः प्रकाशनात्सार्द्धमासात्पूर्वमेव प्रार्थनापत्राणि प्रेषणीयानि यतः पश्चात्काठिन्यं महार्घत्वञ्च नानुभूयेत। अनेन उपहारेणाऽऽशास्महे यदार्यगृहाणि पुनरपि देवगिरा गुञ्जितानि च भविष्यन्ति। आर्यबालका अपि जनन्युत्सङ्गे सुखनिद्रां स्वपन्तः देववाणीं कूणिताद्यैः कर्णचुलुकैश्च पास्यन्ति। उद्बुद्धाश्च पुनः ऋषिकुमारका इव संस्कृतेन भाषिष्यन्ते। इदमेव दृश्यमधुना गुरुकुले दृश्यते यत्र उद्बुध्यमानाःस्वपन्तश्च बालवर्णिनो देववाणीममृतधारा मिव पिवन्ति। मूल्यमस्योपहारस्य केवलमष्टावाणकाः ॥) भविष्यन्ति। परं स्थिरग्राहकेभ्यः केवलं पञ्चाणकेभ्यो नाधिकम्। त्वर्यता मुपहार मादातुम्।

**नीतिः**—अस्माभिः धार्मिक- सामाजिक- लेखगीतिकवता-भजनानांञ्चाधुना स्थिरः प्रवन्धः कृतः। तदधुनाऽपि क्वचिन्मनो विक्षोभकं प्रतीयेत चेद्, झटिति सम्पादकः पत्रद्वारा सूचनीयः यतः तदपि निर्गच्छेद् देव। वयं तु जानीमः यदियं पत्रिका भवतामेव सेवां विधातुं भवद्भिरेव संचालिता, तत्र भवन्तएव सामयिक संशोधनार्थं कृतमतयः प्रेषितसम्मतयश्च सोत्साहं जनयिष्यन्ति उषाया भाविजीवनं सुखमयम्।

एवञ्च भवतां करावलम्बमाप्नुवाना उषा अवश्यं सकलमपि प्रागुजनितं विषादतिमिरं नाशयिष्यति, उल्लासयिष्यति च भवतां मनः पंकजानि मुखकमलानि च। एतावतैव वयं भवतां क्रियाशीलत्वमाशास्य विरमामः। आगताय च नव वर्षाय स्वागतं व्याहरामः।

ससाहसं भाविनमुषाया श्चरणविन्यासं सफलमिव वीक्षमाणैः सर्वैरपि ग्राहकै रधुना पुनरपि भाविनो वर्षस्य नव्यं शुल्कादिक मुषा जीवनद्रव्यं अविलम्बं यथास्यात्तथा वितीर्य कृपाजलेन चाभिषिच्य पुनः देवगिरामुन्नतिलता पुष्पिता कर्त्तव्या। यतः अविलम्बमेव अविघ्नमेव च यथा स्यात्तथा उपहारकुसुमं भवत्करमलमुकुले ष्वन्यतमत् स्यात्।

अन्ते च पाठकानां दयामयानि आशीर्वचांसि हृदि निधाय परमात्मानं प्रार्थयामः। भगवन्!

उदयतु पुनरेष देवदेशः, स्फुरतु पुनर्नवसाहसप्रवेशः।
तिरयतु जनतान्धकारलेशः प्रसरतु देवगिरा मुषाविशेषः॥

इत्यलम्।

सम्पादकः।

## टिप्पणयः

**शान्त्युपायाः—** घोरं हरिवर्षस्य संग्राममवलोकयन्तो मानिनो देशाः शान्त्यै आघोषं घोषयन्ति शान्त्युपायांश्च विविधैः प्रकारै लक्षयन्ति। दक्षिणपातालप्रदेशस्य प्रजायत्तराज्येन युद्ध विभागस्योन्नते विचारः सर्वथा परिहृतइति जनश्रुतिः श्रूयते। अस्योद्देश्यमिदं यत् पुनः संग्राम वृद्धि र्न स्यात्। सत्सु शस्त्रास्त्रेषु तद्वन्तो ऽवश्यं चालनचातुर्यं प्रकटयन्त्येव। सशस्त्राः क्षत्र जातयो न कथमपि सततं शान्तिं स्थिरयन्ति। प्रत्युत यथा कथञ्चित् सकलमपि क्षत्राभिमानं प्रकटयितुं स्वशस्त्रास्त्रवैभवं संदधत्येव। अतएव हरिवर्षे प्रचण्डो ऽयं संग्रामोपरोपः।

**हेतवः—**अस्य जन्यस्य मुख्यान्यमुख्यानि च कारणानि बहूनि व्याहृियन्ते। तत्रमुख्यानि सप्तैव कारणानि वयं लक्षयामः

(१) प्रागेव भूताः ऐतिहासिक्यो विरोधजनन्यो घटनाः संजाताः,यतः परस्परपराभवेच्छया देशा अधुना प्रयतन्ते।

(२) जातिषु परस्परं घृणाया भावः।

(३) स्वतन्त्रतायाः प्रेम। यद्वयं न जात्यन्तरस्या ऽधीनतामनुभवेम इति

(४) राजवंशानां प्राकृतवंशाना श्चात्माभिमानः

(५) शिल्पमया देशाः अधुना सर्वेऽपि वाह्य संसारेण सह व्यापारं प्रवर्धयितुं स्वयानस्थानानि निर्मातुं वशी कर्तुं च वाञ्छन्ति। तदत्र व्यापारस्यकृते कलहः।

(६) उपनिवेशानां वृद्धिः। प्रथमं यत्र मुहुरुपचीयमाना हरिवर्षस्य-प्रजा निवसेत्। अथात् स्थानस्य कृते कलहः। द्वितीयं, यत्र अन्यखण्डवासिषु उपनिवेशं संस्थाप्य आत्मनः शिल्पजनितं प्रभूतमपि द्रव्यं विक्रयं लभेत। तत्राऽपि व्यापारस्य उपाया न्तरेण वृद्धि रस्ति।

(७) अधिकारवृद्धयर्थं व्यापारं सुगमं विधातुं च नानोपनिवेशानां गर्धाऽपि तत्रहेतुः।

एभिः कारणैरन्तश्छन्नैः समुत्पन्नो ऽयं कलहः न केनाऽपि विधिना शमयितुं शक्यते। अयं कलह एवाधुना जातीनां जीवनमरणनिश्चयं विदधाति। तथापि एक उपायो ऽन्योस्ति यदि अन्यखण्डगतेषु उपनिवेशेषु हरिवर्षीयाः तत्रवास्तव्येभ्यः शिक्षादिदानं कृत्वा तानुन्नयेयुः तानप्यात्मसदृशान् विदधीरन्। एवमेव च प्रागुक्ता गर्धा शान्ता भविष्यति। परमधुनावधि तादृशः स्वार्थत्यागो न कयाऽपि हरिवर्षजात्या व्यधायि। नापि आशाऽस्ति। नचापि कलहशान्ते राशा। उपायान्तर श्चायं प्रति व्यक्ति जीवनमुन्नतं स्यादेवं कलहःस्वय शाम्यति।

**पालितमहोदयः**—वङ्गदेशस्य महोदयः तारकनाथपालितपुण्यनामधेयः महतीमाशां विफलय्यैव स्वर्ययौ। तथापि भाग्यसम्पन्नस्य वदान्यतां वयं न विस्मर्त्तुं प्रभवाःस्मः। अयं महोदयः

कलिकाताविश्वविद्यालयाय १५ लक्षपरिमितं द्रव्य विज्ञानमहाविद्यालयं स्थापयितुमदात् ।

वर्तमानावस्थानुसारञ्च तत्रमहोपाध्यायाः भारतीयाः भविष्यन्ति । एवमेव वदान्यगुरवः स्वदेशभ्रातन् विज्ञानप्रेम्णे उन्नति पथानुसरणाय च प्रेरयन्ति । तदेत एव स्वर्गता अपि अन्येभ्यो द्रविणपतिभ्यः आदर्शं स्थापयन्ति ।

भारतीयश्रमिणां प्लीहा—भारते हरिवर्षीयाणां पार्श्वे श्रमं कुर्वतामेव भारतश्रमिणां नजाने को व्यामोहो; यत्तत्रैव प्लीहारुजोऽभिभूता योरोपीयनोपानत्प्रहार मपेक्षन्ते । श्रमिणां च जीवनापहारं सूते । अथवा हरिवर्षीयजनस्य कैंकर्यमेव कदा चिदपथ्यमिव प्लीहारोगं जनयति नान्यस्य । अथवा वैद्यानामेव एष निर्णयो यत्तादृशस्य श्रमिणो ऽवश्यं प्लीहारोगो बाधते । अथवा हरिवर्षीयाणा मुपानहामेव किञ्चिदेतद्व्रतं य त्प्लीहायामेव प्रहरन्ति नान्यत्र । अथवा हरिवर्षीयाणामेव तादृशं व्रतं यत्त एवनिर्दयतया श्रमिणाम पकारमाचरन्ति । अथवा किमेतेन । परदास्यमेव तादृशं भवति यत्र ज्ञानमानप्राणाः सदासंशयचक्रमारोहन्ति

अस्य निर्दयमाचर्यमाणस्य एते उपायाःकर्तुं शक्यन्ते ।

(१) अधुना मरणावसरे ऽथवा दासत्व।वसाने ल्पीहापरीक्षां कुर्वन्ति वैद्याः । परमतःपरं दासतायाः प्रारम्भे परीक्षा विधेया ततो हरिवर्षीयाणां कैंकर्यं लभेत ।

(२ भारतप्रजाप्रभुर्नियमेनो द्घोषयेद् यत् न को ऽपि हरिवर्षीयस्य कैंकर्यं लभेत । अथवा भारतीयाः स्वयमेव न तद्विदधीरन् ।

(३) एवं निर्दयं घातं कुर्वतो हरिवर्षीयस्यापि न्यायदृष्ट्याजीवनोप घातएव दण्डः प्रमाणितः स्यात् । आचारविचारविषयकस्तु कश्चिद्विशेषो नोप लभ्यते हरिवर्षीये । परं परकीयप्राणापहारपातकमयं

जीवनं तस्या वश्य मुपलभ्यतइति इतो दण्ड एव श्रेयान् यत उद्धतानां दण्ड एव शासको भवति अन्यथा तु दण्डनीयस्य दण्डाभावे राजाधिराजस्यापमानो भवति। प्रजाजनस्तु तादृशं राजापमानं न सोढुं क्षमते ॥

---

## समस्यापूर्त्तिः

ब्रह्म प्रकृत्योर्वद किं स्वरूपम्
शिरां सिवाराम रिपोः कियन्ति
केतेजना यत्र न देश भक्ता
"सदा[1] असद्, आसन्दश, दाशदेशाः" ॥

---

हे भारती भूषित वक्त्र पद्माः,
आविष्कुरुध्वम् वचसो विलासान्
भवेत्समस्या सरला वयस्याः
"सदा सदासन्द शदाशदेशाः"

कुशाग्रः

---

(१) ब्रह्मपक्षे सदा सत्
प्रकृतिपक्षे सदा असत्।

# कुलगीतम्

अभिमानमार्यजातेः कुलमेतदर्चयामः,
करुणामनन्तभासो विनयेन चार्थयामः ॥ ध्रुवम् ॥

---

प्रथमाहुतिः कृशानाविह योगिनां वरोऽभूत्,
सतताहुतिप्रदानैस्तमिमं विवर्द्धयामः ॥ १ ॥

---

वपुषा, धनेन, वाचा, रुधिरस्य धारया वा,
सुरभूधरं तमेनं सततं समेधयामः ॥ २ ॥

---

निगमागमप्रचारं, वर्णाश्रमप्रसारं,
फलमस्य भावयन्तो वहुसंपदं वहामः ॥ ३ ॥

---

प्राणाधिकस्वकीर्त्तेरपि हानमापिता वा
कुलमेकमेनदन्ते ऽपि न जातु विस्मरामः ॥ ४ ॥

---

दिवि वा, भुवस्तले वा, गहने रसातले वा,
आवेशनं सुताना कुलनाम कीर्त्तयामः ॥ ५ ॥

---

पुरुषोत्तमप्रभूते, विबुधापगाप्रवाहे,
इह चित्तमद्य शीते, विमले निमज्जयामः ॥ ६ ॥

---

अभिमानमार्यजातेः, कुलमेतदर्चयामः,
करुणामनन्तभासो विनयेन चार्थयामः ॥

मरालः

## ऋषेरुद्देश्यमद्यतनीनश्चार्यसमाजः

वाचकाः ? क्षम्यतां शालीन्यम्, यद्भवन्तो ऽप्यार्यसामाजिका अहमपि, परं किमेतावता 'दोषा वाच्या गुरोरपि' इति कृत्वा यदि सन्त्यस्मासु दोषास्तत्किन्न प्राकाश्यं नीता भवेयुर्नाम। अस्माभिरद्यावधि महर्षेरुद्देश्यं कियदवधि परिपूरितं कियच्चैवंविधेन गतेन भविष्ये ऽस्माभिरुद्देश्यं परिपूरयिष्यत, इत्यवसरो ऽयं विचारणस्य।

यद्यपि नैष आर्य्यसामाजिकेष्वेव दोष उपक्षेपणीयः। एतद्ध -ज्ञापयत्यस्मानाद्यावधिक इतिहासो धर्माणाम्, यदखिला एव धर्मा, नैसर्गिकं कियति काले स्वपन्थानं परित्यज्यान्यदेव रूपं भजन्ते। निदर्शनार्थं, बौद्धो धर्मस्तावत्, वेदान्तिमतं ततः परम्, क्रिश्चियन मौहम्मदीयौ चापि वस्तुतः स्वीयं तात्त्विकं रूपं विहायान्यावेव संवृत्ताविति। शुचः पदमेतद्यदास्माकीनो ऽयं वैदिकत्वेनाख्यातो धर्मोऽपि सुधीरं निज रूपं परित्यजन्वर्तते।

प्रथममेव संदृश्यतां यदेष समाजो विभागद्वयमभजत्। तदपि न वैयक्तिकेन केनापि हेतुना प्रत्युत धार्मिकेणैव विवादास्पदेन हेतुना। तावत्प्रथमतम इत्येष नाशाङ्कुरः शङ्कुः। सैष हि महतो महतः समाजान्विनाशयति, यदेतद् वैविध्यं नाम। बालस्य तु समाजस्य कैव कथा। इत्येतद्धि महतीं शुचमावहति चेतो, यतो न तावद्वैदिको धर्मस्तादृशो नो, यादृशो बौद्धो धर्मः। तस्य खलु सर्वं कथनं महात्मानं गौतमं बुद्धमेवा वलम्बते, अतएव च तस्मिन्मतानामनेकविधत्वं नियतं, न पुनर्वैदिकधर्मस्य। अत्र हि सत्यासत्यनिर्णयाय भगवता दयानन्देन सुस्पष्टमेव वेदो निर्देशितः। सहि नो धर्मस्य निकषोपलस्तस्मिन् ननु साधुतया मतानैक्यमपास्तुं शक्यते॥

संहतौ काःकाः शक्तयो भवन्ति इत्येतद् बहुधा प्रतिपादितं तत्रभवद्भिर्नीतिविद्भिः। स्वयं च भगवता ऋषिणैव प्रतिपदं प्रतिपादितं तल्लाभजातम्।

आर्य्यसमाजस्य हि प्रधानं लक्ष्यं स्वदेशीयानां भ्रातृणामुद्धारः,। भारते च विरोध एवैको दोषो यः प्राधान्ये न वर्त्तते। यदि स एव दोषस्तदुद्धर्तृणां चरिते, का तदाशा साफल्यस्य नाम। अस्त्वपरो दोषो ऽस्मासु यदेष, पुण्यकार्येषु सर्वथा ऽश्रद्धेति।, सहि प्रियदर्शनो ऽस्माकं नेता महर्षिः। नैतत्स्वप्ने ऽपि तस्य चक्षुषोः पुरस्तादुद्गतमभवद्यन्मया प्रदर्शितपन्थानो जनाः परस्तादयुक्ते श्रद्धामदधतो युक्ते ऽपि श्रद्धान्नावदयन्ति। आदर्श महापूरुषस्य तस्य महर्षेर्निजं जीवनं धर्मवारिभिस्तादृशं पूतमभूद्यद्दर्शनेन ह्यस्य कारुण्यं परोपकारश्च प्रवहतः स्म। अद्य केषाञ्चित्प्रार्थनासु उन्मनस्कतामेकतो निधायाऽपराणाम्प्रार्थनासुपा समानानामुपहास एव मनो दूनयति। साम्प्रतिकोपदेशकानां विषये कतिवारं श्रूयते ऽथचोच्यत इति नूनमेतत्त्रपास्पदमेव नः। एतेन हि पौराणिका एव मयाऽत्र विषये साधव उच्यन्ते। ते हि केनचिदेव भावेन भगवन्तं परमात्मानं ध्यायन्ति तु।

नूनमद्य मे चेतो गङ्गायाः शीतले जले प्रातरुदयति भगवति सवितरि प्राञ्जलि सश्रद्धं वन्दनमाचरमाणस्य पौराणिकस्यान्यतमस्य साधोर्धार्मिकभावं निपीय सहसा शतधा परिद्रवति—विचारतरङ्गो ऽपि समकालमेव चेतस्युदगात्, अये? कथमियमस्माकं वैदिकं धर्ममभिमन्यमानानां सतां सहवर्त्तिनां धर्मोपासनादिषु कार्येषु अश्रद्धा। अस्मदाचार्यवर्यो हि सन्यासित्वमालम्बमानो ऽपि प्रत्यहं सन्ध्यावन्दनादिकं समाचरदिति। तत्के नाम वयं प्राकृता, ये सन्यासिनोऽपि यतिन उपरिष्टादेव पदं वाञ्छाम इति। (महर्षिर्हि प्रार्थनामेवैकं साधनं कथयति दुर्वासनाव्यसनग्रसनापाकरणस्येति ज्ञेयम्, मुख्यं प्रयोजनं प्रार्थनायाः)। केचिद्धि स्वात्मानं तर्कपरं रचयन्तो न प्रार्थनाक्षुरीकुर्वन्तीति तेभ्य एवं महर्षिणावोचि। अन्यत्फलं स्यान्नवा स्यान्मनो हि परिशुद्धं जायते। मनसि च परिशुद्धे किन्न सिद्धयेदकर्मणः॥

अपरो ऽयं दोषो ऽस्ति परिहेयो, यदविश्वास' इति। स्मार्तेषु सर्व-

ऽपि विधानेषु प्रायो नो भ्रातृणामविश्वासो ऽद्य दृश्यते, कारणं मान सिकमत्रालोच्यते यददृश्यत्वं हि तत्फलस्य, पौराणिकैराचर्यमाणत्वं च। निदर्शनार्थं, प्रायश्चित्तमेवोपस्थाप्यते । पुरा न केवलं भारत एवापि तु हरिवर्षेऽपि प्रायश्चित्तप्रथा प्रचलिता समभवदिति ज्ञायते तत्तदितिहासेन । तदा हि पापकर्माणि न तावन्त्यासन् । स एव विधि र्यदि परिशुद्धरूपे ऽस्माभिः प्रचाल्येत का नामास्माकमत्र क्षतिः? प्रत्युत लाभ एव । प्रायश्चित्तं हि नाम मनसः कुसंस्कारानखि-लानप्येकपदे निहन्ति, आचामति च सद्य एव भाव्यपि दुष्कर्म चिकीर्षितम् । इति तावत्स्मार्तेषु तत्वतः पुण्यकर्मसु यो ऽयम-विश्वासो ऽस्मासु कृतपदो, ऽसौ यथासम्भवं झटित्येवापासनीयः । इत्येते दोषास्तावद्धर्मविषयकाः । सम्प्रति समाजिकं वृत्तमीहामहे । दैवादत्र विषये केवलमेकं दोषमतिरिच्य गुणा एव । सद्दोषः । अनुभूतमेतद्बालस्य ममापि यत्पूर्वं आर्यसामाजिकाः कार्यधुरं वहन्तो ऽपि न कथञ्चिदपि निजात्मानं प्राशंसन् । अद्यश्वो न जाने प्रागुक्तदोषेणैव हेतुना ऽपरेण वा केनचित्कार्यं श्लथतामभज-च्छ्लाघा च द्राघीयसीति त्रपामावहति चेतः । न कथञ्चिदपि प्रशंसाकरमेतत्कर्मापि तु विगानार्हमेव; तद्यदि नो मनःसु किञ्चि-न्मात्रमपि महर्षेराचार्यस्य मानं तत्सुविचिन्त्यं, यद्येते दोषा वस्तुतोऽपि सन्ति? सन्ति चेदवश्यं यथाशक्ति परिहेया इति ॥

यदि स्वल्पमप्यस्मिन् विषये ध्यानमाकृष्टं सज्जनानान्तन्नियतं फलमुदेष्यत्येवेत्याशास्महे ॥ शमित्योम् ॥

'किशोरः'

---

१ एतत्प्रतीतं भवति 'स्काट कविकृतेन टैलिस्मन् ( Talisman ) नाम्नोपन्यासेन ( संक्षि-सावृत्त्याः पृष्ठे २३, चतुर्थे ऽध्याये ) येन दृंस्यात्तत्र पठनीयम् ।

'लेखकः'

# जिगीषुं नृपतिं प्रति

## —दूतोक्तिः—

**शत्रुबलं नृप ! मुञ्चति दर्पम् ॥ ध्रुवम् ॥**

भीति विकलमिव हरिगणयातम्,
तम्मनुते तव कटकनिपातम् ॥ शत्रु०—
विलसत्कीर्ति युधि, रिपुराजिः,
वर्तत इव परसनधिगताजिः ॥ शत्रु०—
त्वदायुधानां ध्वनिमिह पीत्वा,
पतान्ति रिपवो व्रणमिव मत्वा ॥ शत्रु०—
योद्धुमथैषां बद्धधृतीनाम्,
लगति मनो न क्वचिदमतीनाम् ॥ शत्रु०—
त्वदरि वधूनां हसित शशाङ्कम्,
वदनमिदानीं भवति सशङ्कम् ॥ शत्रु०—
विलुलितवाला रिपुगणवालाः,
वीक्ष्य विभूतिमसर्षविशालाः ॥ शत्रु०—
चलदबलाली त्वरितप्रयातैः,
सिञ्चति भूमिं जलकणपातैः ॥ शत्रु०—
शिशुजनमाला ऽपहसितमारा,
हतजनके वा ऽसाविलहारा ॥ शत्रु०—
जरदखिलाङ्गाः सुतगणनाशम्,
रुदन्ति मत्वा गलदवनाशम् ॥ शत्रु०—
शूराशिरोमणि, जनगणनायक !
मा खलु भैषी रनुपमसायक ! ॥ शत्रु०—

वासवः

# श्रीहर्षः

## हर्षो हर्षो हृदयवसतिः ।

### ( कवेर्जीवनकथा )

अयं सिद्धसारस्वतानन्दसम्भोगो गलितसकलकविचक्रमानः, खण्डिततर्कपरिवादिदुर्मुखः कस्मिन्समय उदियाय कं वा भूखण्डमलञ्चकारेति सर्वमेव संशयग्रस्ततया साहित्यगवेषिभिरैतिह्यचणै र्भूयसा प्रयत्नेनान्वेषणीयम् । तत्र मादृशो नात्यनल्पमतिरत्र परमतत्वार्थजुषामगाधसारस्वतसागरसारं विदाङ्कुर्वतां सतां चेतांसि भूयोबाल्यचापलचमत्कारविशेषै र्लेखनीविलिखितै र्यथाकथंचित्स्खलितपदविन्यासैश्च प्रवर्तयितुं समुत्सहे ।

हर्षाभिधः कश्चिद्राजाऽपि श्रूयते यस्य हि भूयो भूयो वर्णनं सरस्वतीसुधासमुदायदीर्घिकाविरचनचमत्कृतभारतीप्रेमागारेण वाणकविवर्य्येण कृतञ्जगति हर्षचरितमिति नाम्नाऽऽख्यायते । एकोऽयमपरो रसामरावतीकपाटिकायाः रत्नावलीनाटिकायाः रचयिता 'श्री हर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी' ति सूत्रधारगिरोद्गारे भूयस्तरां प्रशस्यते । अपरश्चायमद्वितीयो विदग्धो हृदयवसतिर्हर्षो भारतीकिरणावलीखचितबन्धस्य नैषधीयचरितप्रबन्धस्य विश्रुतस्तातः श्रूयते । अविचारयतां जनानामियं हर्षत्रय्यप्येकस्मिन् हर्षेऽन्त र्भावयितुन्नासहा । विबुद्धान्तः करणास्तु नाटिकाकारमपि हर्षं हर्षव्यक्तित्वेन नोररीकुर्वन्ति, परं वाणकविकृतामेव नाटिकां हर्षराजनामाङ्कितां मन्वते । तत्रास्माभिर्विचारणीयम् एतयो राजकव्यो र्विषये निःसत्वमेव । यतो हि नलप्रबन्धबन्धनपटुस्तु प्रतिसर्गं सर्गमुपसंजिहीर्षु र्निजपित्र्यभिख्यापुरःसरमात्मनः प्रबन्धान्तर मप्युपक्षिपति । यतो न केवलमयं प्रकृतो हर्षो सहज सिद्ध सारस्वतोल्लास इतरयोर्विशिष्यते परमयं परस्ताद् विशेषदेशकालादिविचारतोऽप्यति मात्रमभिव्यज्यते । अस्य विरचितान्यधःस्तात् सरसबन्धनानि कविवचनविशेषविन्यासोद्धारपुरस्सरं प्रमाणी क्रियन्ते ॥

प्रथमसर्गावसाने चिन्तामणिमन्त्रसिद्धसारस्वतप्रसरमनु निर्मितं काव्यरत्नमुपक्षिपति। चिन्तामणिमन्त्रस्त्वस्माभिरुपरिष्टाल्लिलिखयिषितः। चतुर्थावसाने स्थैर्यविचारणानामकं दार्शनिकं प्रबन्धं तर्कपरायणं क्षणिकवादसमालोचकमुपक्षिप्यते । विजय प्रशस्तिः पञ्चमावसाने छिन्दप्रशस्तिनामतोऽपरं काव्यमुत्क्षिप्यते । शिवभक्तिसिद्धिनामकं निबन्धनमष्टादशावसाने सूचयति। अन्यत्र खण्डनादि ग्रन्थानपि सूचयत्येव, इतोऽन्यत्र न किञ्चिदुपलभामहे इति।

न तथाप्यन्तः साक्षी कश्चिदुपलभ्यते। परं ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरादित्यादि निजमानशंसि पद्यं ग्रन्थावसाने निबध्नन् आधारभूतं कमपि कान्यकुब्जभूपमात्रमवगमयति। राजशेखरकविस्तु 'जयन्तचन्द्रं'' कञ्चित्कान्यकुब्जेश्वरविशेषं श्रीहर्षाधारं ब्रवीति, तमेव केचिज्जयचन्द्रमिच्छन्ति । यत्तु सर्वथैवार्द्धजरतीयवदलभ्यं वस्तु; इतस्ततः काष्ठेष्टिकासंचयं भानुमती कुटुम्बकमिव, 'यस्य कस्य तरोर्मूलं येन केनाप्युपाश्रित' मितिवत्प्रतीयते। अधुनैव चेदयं देशकालकलहोऽपि कदाचिदतिमात्रं प्रकृतमननुसृत्योत्पथत्वमापद्यमानं प्रतीयते। आः! क्व आस्ताः, क्व निपतिताः, नैषधीयचरितप्रणेतारं विजिज्ञासितुकामाः सहसैव तस्य कालं विषयं च निर्णेतु मुत्काः विवादध्वनिसमुद्भमत्प्रपातसमकालमेव प्रवाहिताः। अस्तु कालादिनिर्णयात्पूर्वं प्रथमं तावद्द्वयं तस्य कौतुकमयं वृत्तमुपपादयामः ॥

कथा—कान्यकुब्जेश्वरस्य राजकीयपण्डितसभायामासीद्धीरनामा कश्चिदतिविश्रुतो विदग्धो विप्रवरः। स च कालेन प्राप्तवैदग्ध्यसमरो क्षः सन्मुखमेव विप्रान्तरेण कर्कशतर्कौद्दङ्कैर्मुद्रितवदनः परजयव्रीडाकर्दमितमानसो मनस्यनल्पं वैरं बभार। तस्यायमासीदतीव कृपाप्रसादलब्धविभूतिः श्रीहर्षो नाम नन्दनः। निजात्मजं श्रीहर्षं मरणोन्मुखो हीरो रहसि प्रोवाच पुत्रक! जानासि कुलव्रतम्। वंशपरम्परासञ्चिता विद्या प्रतिष्ठा वा किं मय्येवासीयते? किमस्माकं चिरसंचितमुज्ज्वलं यशोऽपरपक्षप्रत्यर्थिभिः साहंकृति पराजयलक्ष्मणा कलुषयिष्यते। जात! आत्मैवासि यथाकथञ्चिदयं कलङ्कोऽपहरणीयः

सकलङ्कमरणादजन्म एव वरम्। वत्स अमुना काण्डीरपण्डितेनाह निर्जित इति, स एव पुनरपि प्रशस्तिपराङ्मुख इष्यते। चेदसि सत्पुत्रो ऽपनय धवलितकुलचन्द्रज्योत्स्नाकृष्णिमानमित्युक्त्वा विरराम। कालेन च स्वर्ययौ॥

श्रीहर्षस्तु आम्, इति मनस्यवधार्य कुटुम्बधुरं माप्तदायादेष्वारोप्य स्वयं विदेशं गत्वा विविधविद्याविशारदेभ्यो गुरुभ्यो विनयतः प्राप्तविद्यो नानाकलास्वद्वितीयत्वमात्मन्याकलय्य पूज्यगुरुपादोपदिष्टं चिन्तामणिं मन्त्रं परमपावनीये, भागीरथीरोधसि वर्षप्रमाणं जेपे। चिन्तामणिमन्त्रस्तु हर्षोद्गारादेवेत्थं प्रतीयते।

अवामावामार्द्धे सकलमुभयाकारघटना-
द्विधाभूतं रूपं भगवदभिधेयं भवति यत्।
तदन्तर्मन्त्रं मे स्मर हरमयं सेन्दुममलम्,
निराकारं शश्वज्जप नरपते सिद्ध्यतु सते॥

अयं पूर्वनिर्दिष्टश्चिन्तामणिमन्त्रात्मकः श्लोको नानासमुदायानुयायिभिष्टीकाकृद्भिः नानाविधं व्याख्यातः। येन कवेरेव वाक्पाटवमतितमामुज्जृम्भते, सहैव च टीकाकृतामपि लोकोत्तरोट्टंकनापाटवं प्रत्यक्षमेव। चिन्तामणेरस्य किमपूर्वं फलन्तदपि वाचकजनमनोरञ्जनायैहैव लिख्यतेः—

सर्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः,
( ........................................ )
यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा,
येनायं हृदये स्थितः सुकृतिना मन्मन्त्रचिन्तामणिः॥

हर्षस्तु इत्येवं सिद्धिसम्पादकं चिन्तामणिमन्त्रं प्रसाध्य यत्रापि गच्छति, वार्ताश्चालपति, नकोऽप्यवबुध्यते; परं सर्वत्र मौनमेवविभूषणं मेने। अतिमात्रं सर्वं दोषायेति मनसि निधाय मूढजनप्रत्यादेश

खिन्नमानसः, पुनरपि सरस्वतीं पुरस्कृत्य प्रार्थयामास—"मातः! देवि! सर्वं खल्वतिमात्रं दोषाय। तव प्रसादादमितविद्याऽद्वितीयागमस्य मम न कोऽपि शृणोति। मातर्मां सर्वसाधारणप्रत्ययगम्यं विधेहि।" भारती च—"वत्स निशीथे सलिलसिक्तशिरसा त्वया दध्यन्नं भोक्तव्यम्। कफविकारबाहुल्याच्छिथिलायते मति" रित्युपदिश्यान्तरधात्। विहितभारतीवचने, संवृत्ते च बोध्यवाचि तस्मिन्, स परः शतान्खण्डनखाद्यादीन्ग्रन्थप्रकाण्डान्निरमात्।

काले गते बहुतिथे स काश्यां गतो 'भागीरथीतीरे च समुपविश्य' जयन्तचन्द्रं व्यजिज्ञपद्—"आगतोऽस्मि सभाप्तविद्य" इति। राजाचोपलभ्य हीरसुतोदन्तं, तज्जेतृपण्डितेन सह तत्सन्निधिमेवोपागमत्। उभयोः प्रतिस्पर्धिविदुषोरेवमभूदालापः—

हर्षः—साहित्ये सुकुमार वस्तुनि दृढन्यायग्रहग्रन्थिले,
तर्के वा मयि संविधातरि समं लीलायते भारती।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता,
भूमिर्वा हृदयंगमो यदि पति स्तुल्या मतिर्योषिताम्॥

वादी—"देव! वादीन्द्र! भारतीसिद्ध!

हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धताः,
तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम्।
केलिः कोलकुले, मदो मदकलैः, कोलाहलो नाहलैः,
संहर्षो महिषैश्च, यस्य मुमुचे साहंकृते हुंकृते॥"

श्रीहर्षोऽपि निशम्य सुजनतया न किञ्चिदप्यूचे, राजाऽपि पाण्डित्यमुभयोरवलोक्योभावपि भूरिदानेन संतोष्य सभायां रक्षितवान्।

कालेन च राजा हर्षं किंचिदपूर्वं निबन्धनं निबद्धुं प्रार्थयामास। हर्षोऽप्यतिप्रसन्नतया स्वीचकार। इदङ्काव्यरत्नाभरणन्नैषधीयञ्चरि-

तञ्च जग्रन्थ। राजा सरस्वतीपरीक्षणार्थं काश्मीरदेशं गन्तुमनुमेने। स च तत्पुस्तकमादाय, तत्रत्यपण्डितप्रकाण्डांश्च प्रदर्श्य प्राप्तबहुमानः, सरस्वतीशिरोनिधानमेव प्रधानं निकषं विचिन्त्य, देवतालयमासाद्य, पुष्पोपहारदानादिपूर्वकं मूर्तिमूर्ध्नि निदधौ। सा चाज्ञातकोपहेतुका झटिति पुस्तकं दूरं निचिक्षेप। हर्षोऽसम्भावितमुपलक्ष्य—"आर्ये! मातः! जरतीति विकलाऽसि यन्निजप्रसादोदितमपि सुधोद्गार भृङ्गारमवमन्यसे"—इत्यूचे। सा च—"परमर्मभेदक, भृशमगुणज्ञोऽसि। देवी पवित्रितचतुर्भुजवामभागा' इति ११ सर्गे किं नावज्ञाताऽस्मि"—इति सलज्जं निर्दिदेश। हर्षश्च विनयाद्विज्ञापयामास— मातः स्वयमेवात्मनः कामकारेणैवंरूपा सती पुराणैरपि पठ्यसे; किमिति 'परमाणौ मयि रुषा कलंकाच्छुस्यसे,। सा च प्रगल्भां वाचमाकर्ण्य ग्रन्थं हृदये जग्राह।

गर्वभरमन्थरो यावत्स पुना राजसभामायाति पुस्तकं च बहुमतं प्रधानराजपण्डितेभ्यो ददाति, राज्ञे चोपस्करोति, क्रियासमभिहारेण कालातिपातेन च तैर्वञ्चितः। स च समाप्तद्रव्यो, विक्रीतगोवृषः, कालेन दरिद्रायमाणः, पुनरपि जपपरो भागीरथीतट मेवाससाद। तत्र कयोश्चित् कहार्योः प्रथमकलशभरणपणे कलहायमानयोः परस्परं गालीप्रदानादिपुरस्सरं प्रश्नोत्तरं शुश्राव, ददर्श च हर्षः परस्परं कोपाविष्टयोः प्रहारजनितं भीषणं द्वन्द्वम्। न्यायसभामुपस्थितयो स्तयोः, साक्षिप्रश्नावसरे यथानिर्दिष्टो हर्षो राजपुरुषै रानायि। सच प्राकृतभाषाऽनभिज्ञो यथा श्रुतं भाषणं क्रमशः प्रतिव्याजहार। तयोरभून्न्यायः। परं हर्षस्यापि लोकोत्तरं चमत्कारि स्मृत्यादिकमालोच्य प्रहृष्टमना राजा सुबहु द्रव्यं विततार। प्रकाण्डपण्डितेन सह कलहायमानान् राजपण्डितान् सभर्त्सनं प्रोवाच—"अयि! ईर्षालवदुर्विदग्धमानसा निन्दितम्भवतामिदं कृत्यमाकर्ण्य जर्जरितोऽस्मि। एनं सिद्धसारस्वतं मानयथ"। एवं भर्त्सिता स्ते तं सुबहु समर्चयाञ्चक्रुः तत एवेदं नैषधं काव्यं जगति प्रतिष्ठां लेभे।

श्रीहर्षोऽपि जीवनमात्मन आनन्देनात्यवाहयत्।

काश्यामेकदा रजकप्रक्षालितामेकां शाटीमवलोक्य श्रीहर्षो रजकं पप्रच्छ

कस्येयम् । रजकोऽब्रुवन्नेव किञ्चिद्,एकत्रीकृतवस्त्रो, हर्षेणानुगम्यमानो राजगृहं प्रतस्थे । हर्षश्चैवं जज्ञौ यत्तद्वस्त्रं विधवाया राज्याः सूहवदेव्याः प्रगल्भपण्डिताया आसीत् । स च तामनुरोधाद्दिभिरानीय, जयन्तचन्द्रेण कान्यकुब्जेश्वरेण सहोदवाहयत् । सा च विदुषीति जनेन कलाभारतीत्वेनाख्यातिमगमत् । हर्षस्तु एकदा तयाऽऽहूतः कोऽसीति पृष्टः कलासर्वज्ञोऽहमिति प्रतिजगाद । साचेर्ष्ययोपानद्धापनमादिदेश । हर्षो लज्जानतः न किञ्चदपि कुर्वन् मूक इव तस्थौ । करोति चेद् द्विजत्वहानि र्नचेत्सर्वज्ञताहानिरिति विचिन्त्य गृहमागत्य सायं परिहितचर्मकारमलीमसाम्बरो गृहीतोपानद्युगलो दूरादेव तामाजूहवत् । चर्मकारविधिना चोपानहौ पर्यदीधपत् । भङ्गयन्तरेण च राजानमपि निजावज्ञा मिङ्गितीकृत्य लज्जामन्थरो गङ्गातीरमयासीत् । तत्र च परिव्राजक वेशमाकलय्य स्वैरं व्यचारीत् ।

एवमस्याऽद्वितीयविदुषो लौकिक कवेर्जीवनं समाप्तिं गच्छति ।

कुशाग्रः ।

---

टि०—अस्माक मार्यजाते जीवने संस्कृतसाहित्यस्य च जीवने कवयोऽनल्पं भागमधारयन्निति तेषामपि आलोचनविवेचनानुशीलनेषु वयं पाठकानां ध्यानमाकर्षामः । पाश्चात्यानां च कियतो भक्ति निजकविवृन्दे, तथैव च वं वाल्मीकितुलसीदासादीनां च कियन्मानं भजामहे इत्यपि न तिरोहितं सताम् ।

सम्पादकः

# सरस्वत्याराधनम्

देवि ! भाषे ! प्रेमपाशे ! देवताशे ! कीर्तिराशे ! भासताम् ॥ ध्रुवम् ।

तव महिमानं गातुमनल्पाः,
कवयस्ते बहुशो ऽपि तु स्वल्पाः,
देवदेशे ! त्वमृतेशे ! दिग्विशेषे ! स्वप्रकाशे ! राजताम् ॥ १ ॥

---

अमृतं त्वयमिह पातुमनस्काः,
भारति ! भारतिनो वयमुत्काः,
देवि ! मातः ! पायमातः, शान्तचेताः, प्रार्थितातः, स्वान् सुतान् ! ॥२॥

---

करकमलस्थापितवरवीणे !
प्रीणय चेतो जनस्य धुरीणे !
पूजयामः, सादयामः, साधयामः, सर्वधामस्वादताम् ॥ ३ ॥

---

शृणु भारति ! मे प्रार्थनमेकम्,
विलसतु भगवति ! तवनुल्लेकः,
हंसयाने ! राजमाने ! किं शयाने ! देशमाने ! जाग्रताम् ॥ ४ ॥

देवि ! भाषे ! प्रेमपाशे ! देवताशे ! कीर्तिराशे ! भासताम् ॥

**राजहंसः**

---

# पातालभुवि बौद्धधर्मस्य संचारः

( १ )

त्रिजगतीतराम‌तिपावनो ऽयं धर्मोपदेशो बुद्धस्य भगवतः, जयत्यसौ श्रीमान्विगतशोकोऽशोकः, यश्च खलु न केवल मासेतु हिमनागं किन्तु पारेऽस्य समुद्रं नैजमतिविमलं धर्मसौरभं दिक्षु विदिक्षु च पप्रथे ।

नास्त्येकोऽपि संख्यावान्यो नाम्रेडति तस्य नामधेयं सगर्वं साभिनिवेशम् । तस्यैव महात्मनोऽविनाशी निर्विकारः कूटस्थः कोऽप्यभिनवः प्रभावः यत्कारणात् बौद्ध-धर्मः स्वीयमभ्रंलिहं कीर्तिस्तम्भं नाति विप्रकृष्टे पातालभूभागनीकाशेऽपि प्रदेशे निखातवानिति कल्पनायां न वयं बलवन्तमुपरोध मुत्पश्यामः। वैषयिकसुख पराङ्मुखः काश्यपीशिखामणिर्दिनकरनिभश्चमत्कारराशिरशोकः सनातनार्यधर्मद्रमं समूलं सुस्थिरमारोपयितु मगणिततनूपात मनारतमध्यवस्यत् । सचदेशदेशान्तरेषु धर्मं प्रचारयितुकामः व्याख्यातृजनान् प्राहिणोत् । ते सर्वे विद्वांसःसिद्धान्तरहस्यविदो विवेचनकुशला मधुरभाषिणः प्रभावशालिनश्चासन् । बौद्धसिद्धान्तानां सुबोधत्वात् सार्वजनिकत्वाच्च व्याख्यातृणां विवरणकौशलादन्तःकरणेन धर्मसेवोत्सुकत्वाच्च, तस्मिनकाले याथार्थ्येन बौद्ध-धर्मो जगद्व्यापितामससाद । अद्यापि चैकमर्बुदं सप्तपञ्चाशत् कोटयश्चेति संख्यावतोभूतलवासिनो जनसमुदायस्य मध्ये पञ्चचत्वारिंशत् कोटयो बौद्धाःसन्ति नूनंकालकृतो यत्नः फलवान् भवतीति । तादृशस्य धर्मस्य पातालप्रदेशे संचारो यत् सत्यं नाश्चर्याय कल्पते । अतःपरं तत्र प्रमाणानि दर्शयामः ।

अति प्रख्यातोऽस्तः पारुमेक्सिको प्रदेशो विश्वस्य देश," ति न तिरोहितं श्रीमताम् । अत्र पतितेषु मन्दिरविहारेषु बौद्धानां चिह्नानि नाद्ययावदपि कृमिभि र्भक्षितानि । प्राचीनविहाराणां, नगराणां, ग्रामाणाञ्च नामान्यपि सर्वथा बौद्धान्येव प्रतीयन्ते ।

नांशतोऽपि विसंवादः ग्वाटीमाला, गातमालयशब्दयोरस्तीति बलवानयं संवादः कस्याश्चर्याय न भवति।

मेक्सीकोजनपदस्य पालकनामधेये ग्रामे, शाकेमल, पदेन सम्भूषिता बुद्धस्यैका मूर्तिः कस्यचित्तं न विस्मापयति। अयञ्च शाकेमलशब्दः शाक्यमुनेरपभ्रंश इत्यत्र न कोऽपिसंशयमाबध्नाति। मेक्सीकोप्रदेशभाजः स्वीयं पुरोहित मद्यापि"शाक्का" इति पदेन ब्रुवन्तो न सजोषं स्थातुमीहन्ते। संवदतिचायं"शाक्का"शब्दः शाक्येन सहेति निराग्रहमेव सत्यकोटिमाटीकते। तत्रैव च भूभागोल्लेखनात् स्वात्मविग्रहं प्रकाशयन्त्यः शिवचन्द्रसूर्यादीनां प्रतिमाः स्पष्टमेव बौद्ध-धर्मस्यसत्तामवगमयन्ति। एतानि प्रमाणानि विस्पष्टमेव पाताले बौद्धानां संचारः समभूदिति बोधयन्ति इदञ्चात्रान्यत् प्रमाणं प्रदर्श्यते।

को नवेत्ति हुईशेननामकं बौद्ध सन्यासिनम्? सच महता धैर्येण अनेकान् भूभागान् संचचार। तेन निज चक्षुषा तत्रत्यं वृत्तं विलोक्य निजमातृभवनायमाने चीनप्रदेशे ४९९ खिस्ताब्दे परावर्त्ति। मेक्सी को प्रदेशस्यापरं नाम 'फुसांग' प्रदेशोऽस्तीति, पूर्वं निर्धारणीयम्। यतो हि स सन्यासी "फुसांग प्रदेशे कथमभूत् धर्मसंचार इतिबदति। अस्ति च "फुसांग" नामक स्तरुः सच बहुलं तत्समये मेकसीको प्रदेशे समभूदिति न गुप्त मैतिह्य विदाम्। ततएवतस्य नामधेयमपि "फुसांग प्रदेशोऽजनि। यथाद्यत्वे मेकसीको प्रदेशे सुवर्णताम्रादीनां समुत्पत्तिः परिदृश्यते एवंसोऽपि समुदीरयतीति स्पष्ट मेव तत्र प्रमाणम्।

अस्ति च जनश्रुतिः मेकसी को प्रदेशवासिषु-यत् पुराकश्चन श्वेतकायः दीर्घपरिच्छेदधारी महा पुरुषः समागत्यास्मान् दुःखोदधेः समुत्तार्यास्माकं चित्तालवालेषु मणिमयं धर्मप्रदीपं विद्योतयामास। तस्य नामधेयञ्च हुदशीति निगदन्ति। अयं शब्दः स्पष्टमेव हुईशेन शब्दे न सह बलवत् संवदतीत्यकामेनापि मन्तव्य मेव भविष्यति।

अयमालीढबौद्धोपदेशकुसुमरसस्तिरस्कृतविषयवासो बहून् विहारस्तम्भान् निरमापयत् येषां खण्डानि नाद्यापि चक्षुषस्तिरोभूतानि। यत् सत्यं साधुवादभाजनार्होऽयं कोलम्बस महाशयो यश्च भूयोऽपि तिमिरनिमग्नं पातालमुद्दीधरत्। अस्य महाशयस्यैव नासीदयमभिनव आविष्कारः। अनेन च केवलं माविर्भावित मेवेति विदाङ्कुर्वन्तु तत्र भवन्तः।

यद्यपि अशोकसमये नास्माभिः 'पाताले धर्मसंचारः समभूदिति' पठ्यते तथापि तत्पश्चादागतानां यात्रिणां भ्रमणीवृत्तान्तेन निर्व्याजमेव मनीषितमिदं सिद्ध्यति। अत्र चास्माभिः प्रपञ्चभिया न बहूनि प्रमाणानि समुपायनीकृतानि। तानि चान्यदा प्रकाशयिष्यामः।

शीतांशुः

---

## ईश्वरः

अयं राजा जगत श्चर्षणीनाम्,
स एव वीरः स उ वीर्यावान्।
स एक राजो जगतः परस्याः,
यदा वृत्रमतरच्छूर इन्द्रः॥

( कृ० यजुः )

# मुञ्च निजं परितापम्

मुञ्च निजंपरितापं
भारति ! मुञ्च निजं परितापम् ॥ ध्रुवम् ॥

स्तिमितविलोचनतः खलु शृणुमः,
तव कारुण्य विलापम् ॥ १ ॥ भारति०

---

हृदयविदारण मितमतितरसा,
प्रतिकुर्मस्तव तापम् ॥ २ ॥

---

पुनरपि सम्प्रति ते रचयामः,
कुञ्चितकेशकलापम् ॥ ३ ॥

---

प्राकृतवैभवगौरिगयागो,
भवतीमन्यदुरापम् ॥ ४ ॥

---

काव्यनयाभरणैः कलयामः,
तव नेपथ्यकलापम् ॥ ५ ॥

---

गुणगरिमाणं ते प्रथयामः,
परिहर्तुं तव तापम् ॥ ६ ॥

---

पुनरपि चालसतां विजहीमः,
सर्वय मनोगतपापम् ॥ ७ ॥

भारति! मुञ्च निजं परितापम् ।

सुरवाणीस्तवः

नयत्वमन्दमाधुरी धुरीणरीणकल्मष—

प्रगल्भभावभूषितोल्लसद्विवेकशालिनी।

---

विनिन्दितेन्दुचन्द्रिकाविभासि कीर्त्तिमन्दिरे,

लसत्कवीन्द्रभासितप्रसूनरम्यमालिनी।

---

रसोर्मिमालिनी लसत्कला मृणालशालिनी,

रसज्ञचित्तपंकजे मुदा सदाविलासिनी।

---

कवीन्द्रकीर्त्तिचन्द्रिका विनिर्मितैः सुधासितैः,

त्वमःप्रधर्षि भासितैः स्मितैः सुचारुहासिनी।

---

मरालः

समस्या

विद्वन्मोद विधायिनीदशशिरोमालासदा नृत्यतु

# उषाया नियमाः *

१ "उषेति,, नाम्ना गुरुकुल विश्वविद्यालयात् पत्रिकैका प्रतिमासं संस्कृते प्रकाश्यते। अस्यां खलु वैदिकं साहित्य मुपजीव्य नवनवाः लेखाः प्रकाशयिष्यन्ते। आधुनिकं विज्ञानं दर्शनं चावलम्ब्य तद्गता नूतना आविष्कारा यथायथं वर्णयिष्यन्ते किंच सभ्यजगतः वर्त्तमानान्दोलनोपन्यासपुरःसरं तत्र सम्यगालोचनापि विधास्यते अयं खल्वपरो महान्विशेषः सर्वतोप्यधिको यदस्यां धार्मिका गुरुकुल विषयकाश्च लेखा भविष्यन्ति। लेखानां भाषा तावदतिमात्रं सुगमा किंच चेतोहरा भविष्यति येन मनागपि संस्कृतमवबुध्यमानानाम् र्थाववोधे काठिन्यं न प्रतीयेत। तदिदमभिसंधायैव तावदस्माभि रस्या मूल्यमल्पमेव रक्षितमिति। अस्या वार्षिकं मूल्यम् तावत् सार्द्ध रूप्यकम् १॥) षाण्मासिकं चतुर्दशाणकाः ॥।=) त्रैमासिकं च मूल्यमष्टावाणकाः ॥) एकस्याङ्कस्य मूल्यं द्वावाणकौ =) सर्वथापि पत्रिका प्रेषणात्प्रागेव ग्राहकान्मूल्यं ग्रहीष्यते।

२ आदर्श संख्या [ नमूना अङ्क ] वी. पी. द्वारा न प्रेषयिष्यते। आदर्श संख्यामभीप्सुभिः पत्रेण सह स्वयमेवाणकद्वयस्य शुल्कपत्राणि [ टिकट ] प्रेषणीयानि। प्रायेण मूल्यमन्तरा आदर्श संख्या न जातु दीयते।

३ ग्राहक महाशयैः स्वस्थानपरिवर्त्तनं झटित्येव सूचनीयम्। तथा च प्रेषितपत्रे ग्राहक संख्याऽवश्यमेव लेखनीया।

४ प्रतिमास मुषा प्रकाशिता भविष्यति। यदि कश्चन ग्राहकमहाशयः पत्रिकायाः कामपि संख्यां यथासमयं नासादयेद् तदा तेन वयं प्रागेव विज्ञापयितव्याः। विपर्यये यद्यस्माभिः सप्ताहद्वय पर्यन्तं काचिदपि विज्ञापना नासादयिष्यते तदा द्वितीया संख्या नवेन मूल्येन प्रेषयिष्यते।

५ लेखविषयकः पत्रव्यवहारस्तु सम्पादकेन सह कर्त्तव्यः प्रबन्धविषयकश्च प्रबन्धकर्त्रैत्युभाभ्यां सह पृथगेव व्यवहर्त्तव्यम्।

६ विज्ञापनानां मुद्रापणाय प्रबन्धकर्त्रा सह पत्रव्यवहारः कार्य्यः। अयुक्तानि विज्ञापनानि न जातु स्वीकरिष्यन्ते

**प्रबन्धकर्त्ता, उषा**

**डाकघर शामपुर**

